July 1930.

THE

# CHOWKHAMBA SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 391.

सर्वतन्त्रस्वतन्त्र–'गुरु'पदाभिधेय-

प्रभाकरमिश्रविरचिता

# बृहती ॥

( शाबरभाष्यव्याख्या )

महामहोपाध्यायमिश्रशालिकनाथविरचितया

ऋजुविमलया

विभूषिता

श्रीकाशीहिन्दूविश्वविद्यालयमीमांसाप्रधानाध्यापकेन

"वेदविशारदेन" "मीमांसाकेसरिणा"

पं० श्रीचिन्नस्वामिशास्त्रिणा यथामति संशोधिता ॥

# BRHATI

( A COMMENTARY ON SABARABHASHYA )

By

SARVATANTRASVATANTRA, ( CALLED "GURU" )

PRABHAKARA MISRA

WITH THE COMMENTARY

THE RJUVIMALA

OF

MAHAMAHOPADHYAYA SALIKANATHA MISRA

*Edited by*

Pandit A. Chinnaswami Sastri

FASCICULUS I–१.–3

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE,
*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1929 '32, '33



॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—३८१

*Printed by Jai Krishna Das Gupta at the Vidya Vilas Press, Benares.*

Agents:

1 Otto Harrassowitz, Leipzig:
GERMANY.

2 Arthur Probsthain,
Oriental & Foreign Bookseller,
LONDON.

3 The Oriental Book-supplying Agency,
POONA.



॥ ॐ श्रीविघ्नराट्भारतीभ्यां नमः॥

प्रभाकरमिश्रविरचिता ।

# बृहती ॥

# ( शाबरभाष्यव्याख्या )

## प्रथमाध्यायस्य प्रथमः पादः ॥

प्रथमं धर्मजिज्ञासाधिकरणम् ॥

अथातो धर्मजिज्ञासा ॥ १ ॥

'लोके' इत्यादिभाष्यस्था 'थात' (१)इत्येतत्पदद्वयस्यालौकिका-

---

महामहोपाध्यायमिश्रशालिकनाथविरचिता

# ऋजुविमला ॥

## ( बृहतीव्याख्या )

सृष्ट्वाऽज्ञाननिशाध्वंसिनिबन्धमयवासरम् ।
उद्भासितजगज्जाड्यं नमस्यामः प्रभाकरम् ॥ १ ॥
प्रभाकमयीं दृष्टिं दक्षिणां दधतं सदा ।
वामदर्शनतापन्नचन्द्रं वन्देऽपराजितम् ॥ २ ॥
प्रभाकरगुरोर्भावे मितगम्भीरभाषिणा ।
अञ्जसा व्यञ्जयिष्यन्ती पञ्जिका क्रियते मया ॥ ३ ॥
अपन्यासनिरासाभ्यां व्यासेनैव विदूषिता ।
व्याख्या प्राचां निबन्धॄणामिति नाहमदूदुषम् ॥ ४ ॥

---

१. इत्येतस्मिन् पदद्वये. इति ख. पुस्तके ।

र्थाशङ्का निवृत्तिः प्रयोजनम्। कुत एतत्? स्वाध्यायाध्ययनविधेरविवक्षितार्थत्वनिराकरणात्। कथं पुनरविवक्षाशङ्का? स्वाध्यायाध्ययनविधेरधिकाराश्रवणात्, आचार्यकरणविधिप्रयोज्यत्वाच्च। कथं पुनरन्यस्य विधे(१)रन्येन प्रयुक्तिः? प्रयाजादिविधिवदिति चेत्, न; तत्र (२)ह्यधिकाराभेदाद्युक्तम्। अत्राप्यधिकारांशो न भिद्यत

---

## अथातो धर्मजिज्ञासा ॥ १ ॥

'लोक'इत्यादिभाष्यं 'यत्नगौरवं'प्रसज्येतेत्येवमन्तमथशब्ददूषणार्थमौचित्यानुभाषणपरमिति वार्तिककारेण व्याख्यातम्। तत्तु मन्दप्रयोजनं इति मत्वा टीकाकारः प्रयोजनं दर्शयति-लोक इत्यादि भाष्यस्थेत्यादिना। सर्वसूत्रस्थसर्वपदविषयञ्चेदमुच्यते। तेन बहुवचनाविरोधः। प्रवृत्तत्वात् प्रतिपन्नत्वाच्चाथातःशब्दयोरेवालौकिकार्थाशङ्कानिवृत्तिः प्रयोजनम्।

सति सम्भव इति। लौकिकार्थसम्भव इत्यर्थः। कुत एतदिति। लौकिकार्थसम्भवे कथमलौकिकार्थाशङ्का? असम्भवश्चेत् कथमिह प्रयोजनं सिध्यति? उत्तरम्—स्वाध्यायाध्ययनेति। न्यायाभासादसम्भवः। तन्निराकरणेन तु सम्भव एव प्रतिपाद्यते। कथं पुनरविवक्षाशङ्केति। दृष्टपुरुषोपयोगिकर्मावबोधहान्या स्वर्गोऽर्थवादस्थं वा फलं न युक्तमिति भावः। इदानीं पूर्वपक्षं कर्तुं संशयबीजमुपन्यस्यति-स्वाध्यायाध्ययनविधेरधिकाराश्रवणादिति। नाध्यापनाधिकारो ऽध्ययनेऽपि श्रूयते, अनङ्गत्वादिति। आचार्यकरणविधिप्रयोज्यत्वाच्चेति। तं प्रयुज्यता प्रथमोपनिपातिनी तत्सिद्धिरेवाध्ययनविधेः प्रयेजनं, न तु पश्चाद्भाविकर्मावबोध इत्याशयः। कथं पुनरन्यस्य विधेरिति। यदि तावदङ्गता नास्ति, कथं विध्यन्तरस्य विध्यन्तरेण प्रयुक्तिः? प्रयाजादिविधिवदिति चेदिति। इत्यर्थः—यस्मात्तत्राधिकारान्तराभेदात् प्रयुक्तिर्युक्ता साक्षाच्छ्रुततत्पुरुषसम्बन्धनिर्वाहितसाध्यभावाधिकारविधिसन्निधौ निरधिकारेषु प्रयाजादिषु प्रथमं न विधयः साध्यतया भवन्तीति। किन्तु कर्मस्वरूपाण्येवाधिकारसिध्यर्थानि। तदर्थता तु क्षणिकानां स्वरूपेण न सम्भवतीति पुनर्विधयः साध्यतया विक्रियन्ते तेनाङ्गभूता ह्येते विधय इति युक्ता भेदेऽपि प्रयुक्तिः। अत्रापीति आचार्यविध्यध्ययनविध्योः अधिकारांशो न भिद्यत

---

१. अन्येनाक्षेप इति ख. पुस्तके। २. स्वाधिकाराभेदात् इति ख. पुस्तके।

इति चेत् , न ; अङ्गाङ्गिभावाभावात् । कथं पुनरङ्गता नास्ति,(१) प्रयोज्यत्वं च ? न प्रयुक्तिरङ्गत्वे हेतुः । कस्तर्हि ? विनियोगः ।

ननु—विनियोगः पारार्थ्ये कारणम् । विनियुक्तस्यैव ह्यङ्गत्वं दर्शयति । न चाविहितमङ्गं भवति । फलवत्सन्निधावफलं तदङ्गमिति च । मैवम् ; पारार्थ्यमेव ह्यङ्गतोच्यते । परस्योत्पत्तौ कार्ये वा यदनुग्रहाय वर्तते तत्परार्थमित्युच्यते । तदेव चाङ्गम् ; तस्माद्विनियोगकृतमेवाङ्गत्वं न प्रयुक्तिकृतम् ।

(२)कथं तर्हि पश्वेकत्वादीनामङ्गत्वम्? उक्तं हि (३)पशोरुपादानशेषत्वम्; प्रयुक्तिकृतं च तत् । तदपि नैव प्रयुक्तिकृतम् । किं तर्हि ? विनियोगकृतमेव ।

ननु—विभक्तिभिः प्रातिपदिकार्थो विनियुज्यते, न पुनरेकत्वादयो विभक्त्यर्थाः । सत्यं न विनियुज्यन्ते । न पुनर्विनियुक्तो-

---

इति । अङ्गाङ्गिभावाभावादिति । श्रुत्यादयो ह्यङ्गत्वख्यापकाः तदभावेऽनङ्गस्यासंबन्धस्याक्षेपो न युक्तः । एवं तावदङ्गता नास्तीति गृहीत्वैव प्रयुक्तिर्दूषिता । इदानीं प्रयुक्तिमङ्गीकृत्यानङ्गत्वं दूषयति–कथं पुनरङ्गता नास्ति प्रयोज्यत्वं चेति । न प्रयुक्तिरङ्गत्वे हेतुरित्यनन्तरं चोद्यं परिहरति ।

नन्विति पारार्थ्याङ्गत्वयोर्भेदाद्विधिव्यापारमात्रोपादानादङ्गतामिच्छतश्चोद्यम् । मैवमिति ऐक्येऽपि परिहरति । परस्योत्पत्ताविति । यथा द्रव्यदेवतादिकम् । कार्य इति । यथा प्रयाजादयः, स्वामिसंस्काराश्च ।

कथं तर्हि पश्वेकत्वादीनामिति । उपादानमात्रात् तदङ्गताऽस्तीति मन्यते । तदपि नैव प्रयुक्तिकृतमिति । अत्रायमाशयः—विभक्त्या तावत्प्रातिपदिकार्थो विनियुज्यते । विनियुक्तोऽसावुपादातव्यः । न चानवच्छिन्नस्योपादानं संभवति । तेनावच्छेदकाकाङ्क्षायां गृहीततद्विशेषणैकत्वादिकमेव तदवच्छेदकं गृह्यते । तेन यत् पूर्वमपि विनियुक्ते प्रातिपदिकार्थमात्रे संख्यादिकमासीत् तदुपादानेन विनियुक्तपश्वादिस्थं क्रियते । विनियोगस्तु तस्य तात्स्थ्येनैव । यथा पर्णत्वादयः क्रतुविनियुक्तजुह्वादिद्वारेण विनियुक्तस्थतया क्रत्वङ्गानि । विनियुक्तस्थता तु

---

१. प्रयोज्यत्वं च न. इति नास्ति क. पुस्तके ।

२. कथं पुनरेकत्वादीनामिति क.ख.पुस्तकयोः । ३. पशोस्तु इति ख. पुस्तके ।

पादानेऽपि नावगम्यते। विभक्तिभिर्विनियुक्त(१)स्यैवैकत्वादयो विभक्तिभिरभिधीयन्ते, असम्बन्धस्यानवगमात्। अत एव चैकवाक्यत्वं संख्याविधानस्य विभक्तिविधानस्य च। तस्माद्युक्तमुपादानशेषत्वमेकत्वादेः। स्वाध्यायाध्ययनं तु न विनियुक्तं, नापि विनियुक्तत्वमवगम्यते। अतः प्रयोज्यं न चाङ्गमिति सिद्धम्।

कथं पुनरविनियुक्तमसम्बन्धमेवेदमाक्षिप्यते? नैव विनियोग आक्षेपे हेतुः। किं तर्हि? कार्यम्। विनियुक्तत्वमपि कार्येणैवाक्षिप्यते न त्वङ्गत्वे हेतुः।

यत्पुनरिदमुक्तं–'न चाविहितमङ्गं भवति, फलवत्सन्निधावफलं तदङ्गं–इति च। (२)कार्याङ्गत्वप्रतिपत्त्यर्थोऽसौ ग्रन्थः, न पुनरङ्गत्वप्रतिपत्त्यर्थः। अस्ति हि कामस्याधिकारे प्रयोज्यत्वं, नचाङ्गता। त-

---

तत्र जुह्वादीनामव्यभिचरितक्रतुसंबन्धात्तद्धितश्रुत्यैव, इह तूपादानात् इति विशेषः। विनियुक्तस्यैवैकत्वादयो विभक्तिभिरभिधीयन्त इति। यद्रस्तु श्रुत्या विनियुक्तं तस्येत्यर्थः। अत एव चैकवाक्यत्वं संख्याविधानस्य विभक्तिविधानस्य चेति। उपादानव्यापारवशेन यतः कारकस्था एवैकत्वादयो भवन्ति करणादौ का भवन्ति इति।(?)

कथं पुनरविनियुक्तमसम्बन्धमेवेदमिति प्रथमचोद्यं परिहर्तुं स्मार्यते। नैव विनियोग आक्षेपे हेतुः। कस्तर्हि, कार्यमिति। अत्रायं भावः–आचार्यकरणविधावुपनयनं पदश्रुत्या दूरस्थमप्यङ्गतया समर्पितम्। तच्च स्वभावत उपनेयनिष्ठमुपनेयासत्तिद्वारेणोपकारकम्। तत्रासाद्यमानो माणवको यत्किञ्चित्करः, तदा तदासादनमनुपयोगि। आसादनानुपयोगे चोपनयनमप्यनुपयोगि। ततश्चासाद्यमानस्य कर्मापेक्षायामुपनयनकर्मप्रक्रमादुपनीतकर्तृकमध्ययनं श्रूयमाणं तत्कर्मतया विज्ञायते। तेनोपनयनं स्वाङ्गभूतमाक्षिपच्चाचार्यकरणविधिरध्ययनमाक्षिपति। तदाक्षिप्ताध्ययनानुष्ठानसिद्धश्चाध्ययनविधिः स्वसिद्ध्यर्थं नाधिकारान्तरमपेक्षते।

यत् पुनरिदमुक्तं न चाविहितमङ्गं भवतीति। यदङ्गं श्रुत्यादिभिर्नियोगासंवलितैः तस्यैव यत्कार्यं प्रत्यङ्गत्वं तत् नियोगव्यापारनिबन्धनमिति दर्शयति। न पुनरङ्गत्वमेव विनियोगानपेक्षं नियोगमाक्षिपति। विधेश्च

---

१. एवकारो नास्ति ख. पुस्तके। २. कार्यत्वप्रति इति ख. पुस्तके।

स्मादन्यत् प्रयोज्यत्वं अन्या चाङ्गता । (१)तथा चोभयं पदानामस्ति प्रयोज्यत्वं, न शेषता । मन्त्रस्य हि विनियोगे न शेषतोच्यते । (२) नाक्षिप्तपदानाम्, अमन्त्रत्वात् । तस्मात् प्रयोज्यत्वादनङ्गत्वाच्च स्वाध्यायाध्ययनस्य भवति संशयः—किं प्रयोज्यत्वादेककार्यत्वम् , (३)उतानङ्गत्वाद्भिन्नकार्यत्वम् ? इति ।

अत्र पूर्वपक्षवादी प्रयोज्यत्वादेककार्यतां मन्वानोऽविवक्षां मेने । तन्निराकृतय इदं 'अथातः' इति पदद्वयमङ्गीकृतवान् सूत्रकारः । न चानेन पदद्वयेनायमर्थो(४)निराकृत इति पाठादेवावगम्यते । पूर्वमनुपन्यस्तत्वादस्यार्थस्य । अतो (५)भवत्यलौकिकार्थाशङ्का कस्यचित् । अतः (६)स्थितपूर्वपक्षनिरसनसमर्थं पदद्वयं मन्वानो भाष्यकार आह—(७)'लोके येष्वर्थेषु प्रसिद्धानि पदानि

---

व्यापारो ग्राहकलक्षणान्विताभिधानसिद्धः । न चाध्ययनेन सहाचार्यकरणविधेरन्विताभिधानम् , पदश्रुत्याध्ययनविधिनैवान्विताभिधानसिद्धः । अस्ति हि कामस्येति । काम्यस्येत्यर्थः । तस्मादुभयं सिद्धं प्रयोज्यत्वमनङ्गत्वं चेति । तदाह–प्रयोज्यत्वादनङ्गत्वाच्चेति । किं प्रयोज्यत्वादेककार्यत्वमिति । प्रथमोपनिपातादाचार्यकरणविधेरेव प्रयोजनमित्यर्थः । उतानङ्गत्वाद्भिन्नकार्यतेति । पश्चाद्भाव्यपि तत्कर्तृसमवेतं प्रयोजनमित्युक्तं युक्तम् । अध्यापनाङ्गविहित–पुरुषान्तरगतं प्रयोजनं न शक्यते वक्तुं, विनियुक्तविनियोगविरोधादित्यर्थः ।

न चानेनेति । यदि पूर्वपक्षमुक्त्वा पदद्वयं पठितं स्यात् , तस्यालौकिकार्थाशङ्का न स्यात् । पूर्वपक्षनिराकरणार्थमेव लौकिकार्थमिदमिति ज्ञायते, अन्यथा पूर्वपक्षेण सम्बन्धात् । अनुपन्यस्ते तु पूर्वपक्षे अलौकिकार्थशङ्काप्यस्तीत्यतः स्थितपूर्वपक्षनिराकरणायेदमुक्तमिति न्यायबलान्मन्यमानो भाष्यकार आहेति ।

---

१. तथा ह्युभयं इति ख. पुस्तके । २. नह्याक्षिप्तपदानां इति ख. पुस्तके ।

३. उतानङ्गत्वात् भिन्नकार्यतेति ऋजुविमलापाठः । ४. निराक्रियते इति ख. पुस्तके ।

५. भवति लौकिकार्थाशङ्का इति ख. पुस्तके । ६. अन्तर्गतपूर्वपक्ष इति ख. पुस्तके ।

७. शा.भा.पृ.१.प,१. इयं च पृष्ठसंख्या चौखम्बासंस्कृतपुस्तकावलीमुद्रितशाबरभाष्यपुस्तकानुसारेण वेदितव्या । तत्र प्राथमिकी पृष्ठसंख्या ; द्वितीया च पंक्तिसंख्येति ध्येयम् ।

तानि सति सम्भवे तदर्थान्येव सूत्रेष्ववगन्तव्यं ना-ध्याहारादिभिरेषां (१)कल्पनीयोऽर्थः परिभाषितव्यो वा" इति ।

किञ्च न केवलमस्यालौकिकार्थाशङ्कानिरासोऽवगम्यते । परिभाषादियत्नगौरवकरणात् । (२)"तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः । न चेह किञ्चिद्वृत्तमुपलभ्यते" इत्यलौकिकार्थाशङ्कां प्रकटयति । (३)"भवितव्यं तु तेन" इति न्यायानपेतत्वमाशङ्कायाः कथयति । श्रुतसिद्ध्यर्थं हि प्रकरणाद्यन्वेष्यम् । श्रुतस्य ह्ययथार्थत्वे न श्रुतत्वमेव कारणम् । तच्च प्रकरणादिकं सर्वमत्रास्तीति । (४)"तत्तु वेदाध्ययनम्", इत्युक्तम् । "तस्मिन् हि सति साऽवकल्पते" इति ।

इदानीमविवक्षितार्थस्वाध्यायाध्ययनस्याद्याह(?) इति तावद्भवान् सकलस्तत्रार्थपर्यालोचनया वेदाध्ययनस्य वृत्तत्वं मन्यते । तदयुक्तम् । स्वाध्यायाध्ययनविधेराचार्यकरणविधिप्रयुक्तत्वादविवक्षितस्वार्थतैवावगम्यते । अथादृष्टार्थमेवेदं सूत्रं—वेदमधीत्यानन्तरं

---

किञ्च न केवलमस्येति एवं वेदवाक्यान्येवेति भाष्यं व्याचष्टे । अस्यार्थः—एवं लौकिकार्थग्रहणे वेदवाक्यान्येव केवलानि व्याख्यायन्ते । इतरथा अलौकिकार्थत्वे वेदवाक्यानि व्याख्येयानि पारिभाषिकालौकिकार्थानि च सूत्रपदानि व्याख्येयानि । तद्यत्नगौरवं प्रसज्येत । न च प्रसक्तम् । अतो मत्वाऽऽह—लौकिकार्थान्येव पदानीति । अलौकिकार्थाशङ्कां प्रकटयतीति । तत्र लोक इत्यादि भाष्ये अनुपदर्शितोऽयं पूर्वपक्ष आसीत् । तस्य स्फुटीकरणार्थमिदमिति दर्शयति—श्रुतसिद्ध्यर्थं हि प्रकरणाद्यन्वेष्यम् । कस्मात् ? श्रुतस्य ह्ययथार्थत्वे न श्रुतत्वमेव कारणमिति । यत्र हि विषये श्रुतस्य शब्दस्यायथार्थत्वं तत्र न श्रुतत्वमेव कारणमर्थावगतौ, किं तर्हि ? प्रकरणादिकमपि । तच्च प्रकरणादिकं सर्वमत्रास्तीति ।

इदानीमविवक्षितेति तावद्विवक्षितार्थत्वे न्याय उक्तः । यदि परं शास्त्रे

---

१. परिकल्पनीयः. इति मुद्रितभाष्यपुस्तकेषु पाठः । २. शा.भा.पृ.१.पं.५.
३. शा.भा.पृ.१.पं.६. ४. शा.भा.पृ.१.पं.८ ।

धर्मजिज्ञासेति, एवं तत्रार्थद्वयविधानं प्राप्नोति—वेदमधीत्य, अनन्तरं चेति ।

यदि च वेदमधीत्येत्युच्यते अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासाऽवकल्पते । अथानन्तर्यं विधीयते, प्रागपि वेदाध्ययनात् प्राप्नोति । न चादृष्टार्थस्य वाक्यस्यार्थद्वयविधानं द्विधा सम्भवति । उच्यते–नैवेदमदृष्टार्थं सूत्रं वेदार्थविचारायैवेदमारभ्यते । कुतः ? (१)"**तादृशीं तु धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न सम्भवति । (२)वेदवाक्यार्थे विचार इह वर्तिष्यते**" नन्वविक्षितस्वार्थं वेदाध्ययन(३)मित्युक्तवान् । विवक्षिते वा किं वेदाध्ययनपूर्वकेणानन्तर्यविधानेन, स्वतः प्राप्तेः । (४)"**अपि चैवं सति नैव वयमिह वेदाध्ययनात्पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः परस्ताच्चानन्तर्यम् । नह्येतदेकं वाक्यं पुरस्ताद्वेदाध्ययनाद्धर्मजिज्ञासां (५)प्रतिषेधति परस्ताच्चानन्तर्य(६)मुपदिशति, भिद्येत हि तदा वाक्यम् । वेदानधीत्येत्येकस्यां विपरीत-**

---

परिभाषादिविरहात् वेदार्थविचाराच्च लौकिकार्थाश्रयणेन वेदाध्ययनानन्तरं तद्धेतुका धर्मजिज्ञासा कर्त्तव्येत्यदृष्टार्थमुपदेष्टव्यम् । तत्र वाक्यभेद इति ।

नैवेदमदृष्टार्थमिति । यदि ह्यदृष्टार्थमुच्यते ततो ज्ञानेच्छामात्रपर्यवसानाद्वेदवाक्यानामनेकविधो विचारो न स्यात् । भाष्ये च तादृशीशब्देन विचारपर्यन्ततोच्यते, नन्वविवक्षेति । न्यायानाभिधानादनुशयोऽस्त्येव । विवक्षित इति सूत्रानर्थक्यशङ्का । वेदाध्ययनवदानन्तर्यमपि प्राप्तत्वादनुपदेश्यमिति । अपि चैवं सतीति । वेदाध्ययनं विवक्षितार्थम् । एवं सति वेदाध्ययनपूर्वकमानन्तर्यमपि न विधेयम् । पूर्वं अर्थद्वयविधानम-

---

१. शा.भा.पृ.१.पं.१०–१२ ।

२. वेदवाक्यानामनेकविधो विचारः, इति मुद्रितपुस्तकपाठः ।

३. इत्युक्तं इति ख.पु. । ४. शा.भा.पृ.१.पं.१२–१९ ।

५. प्रतिषेधिष्यति इति मुद्रितपुस्तकपाठः । ६. प्रकरिष्यति. ,,

(१)मेकस्याम् । अर्थैकत्वाचैकवाक्यतां वक्ष्यति" अत एवा-दृष्टार्थाशङ्का नैव सूत्रे कर्तव्या ।

किमर्थं तर्हि सूत्रम् ? स्वाध्यायाध्ययनविधेराचार्यकरणाद्गुरुकुलनिवृत्तिरेवानन्तरं भाति। अनङ्गत्वात्तु स्वार्थपरतैव न्याय्या, नाविवक्षितार्थतेति सूत्रस्य प्रयोजनम् । तदिदमाह-(२)"किं चाधीते वेदे द्वयमापतति-गुरुकुलाच समावर्तितव्यं वेदवाक्यानि विचारयितव्यानि । तन्मा समावर्तिष्ट कथं नु वेदवाक्यानि विचारयेदित्येवमर्थ उपदेशः" । यद्येवं न तर्हि वेदाध्ययनं पूर्वम् , अनन्तरं धर्मजिज्ञासाया अविवक्षितस्वार्थतां वेदाध्ययनस्य स्मृतिकारो मन्यते—वेदमधीत्य स्नायादिति । न चेदमन्याय्यं स्मृतिवचनं, स्वाध्यायाध्ययनविधेर्विनियुक्तविषयत्वात् । तत्पूर्वकत्वाच्च स्वार्थावगतेः। तस्मादविवक्षितार्थतैव न्याय्या वेदादवगम्यते। (३)"न चाम्नायोऽतिक्रमितव्यः । तदुच्यते-

---

भ्युपगम्यवाद इति अपिचेत्युक्तम् । अत एवादृष्टार्थत्वशङ्काऽपि नास्ति, वाक्यभेदात् ।

किमर्थं तर्हि इति । उभयानभिधाने किमर्थं सूत्रमिति । स्वाध्यायाध्ययनविधेरिति । पूर्वपक्षोत्थाविवक्षानिराकरणार्थमित्यर्थः । यद्येवं न तर्हीति । धर्मजिज्ञासायाः पूर्वं स्यादपि वेदाध्ययनं, आनन्तर्यं तु नास्तीति भाष्यं पूरयत्यनन्तरशब्दं प्रक्षिपन् । वेदमधीत्य स्नायादिति । वेदमित्येतदुक्तं भवति । वेदमधीत्य, स्नायादिति यत् तत् स्मृतिकारा अध्ययनविधिनैवानुवचनान्तार्थोपदेशिनैवं समामनन्ति-वेदाध्ययनानन्तरं गुरुकुलान्निवर्त्तितव्यमिति । न पुनरेवं भाष्यं योजयितव्यं वेदमधीत्य स्नायादित्यनेनैव समामनन्तीति स्मृतिषु समाम्नायव्यपदेशाभावात् । न चेदमन्याय्यं स्मृतिवचनं स्वाध्यायाध्ययनविधेर्विनियुक्तविषयत्वात् तत्पूर्वकत्वच्चार्थावगतेरिति । अथ कस्मात् कर्मविधय एवार्थावबोधद्वारेणोपकारकं प्रसिद्धमध्ययनविधिं न प्रयुञ्जत इत्याशङ्क्याह--विनियुक्तविषयत्वादिति । विनियुक्तमुपनयनमाचार्यकरणविधावात्मनेपदश्रुत्या, तद्विषयश्चाध्ययनवि-

---

१. अन्यस्याम् इति मुद्रितपुस्तकेषु । २. शा.भा.पृ.१.पं.१९-२१।

३. शा.भा.पृ.२.३-५ । न चाम्नायो नाम इति मुद्रितभाष्य पु० ।

अतिक्रमिष्याम इममाम्नायम् । अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकं कल्पयेम" आचार्यकरणविधेरध्ययनमात्राच्च नार्थावबोधप्रत्यर्थिता सम्भवति ।

ननु च–स्वाध्यायाध्ययनविधेः प्रयोजनद्वयासंभवादविवक्षैव । केन चोक्तं स्वाध्यायाध्ययनविधेः प्रयोजनमेतदिति ? (१) "दृष्टो हि तस्यार्थः कर्मावबोधनं नाम । उक्तं चाशेषत्वं स्वाध्यायाध्ययनस्य । तस्याधिकाराश्रवणात् । तदिदमाह–(२)"न च तस्याध्ययनमात्रात्तत्रभवन्तो याज्ञिकाः फलं समामनन्ति । यदपि च समामनन्तीव, तत्रापि 'द्रव्यसंस्कारकर्मसु

---

धिः उपनीतकर्तृकाध्ययनविषयत्वादुपनयनस्य विषयानुप्रवेशादुपनयनमध्ययनविधिविषय इत्युक्तम् । एवं सत्यङ्गद्वारेणाचार्यकरणविधेः प्रयुक्तिः । उपकारमात्रेण तु कर्मविधीनाम् । यस्य चाङ्गद्वारेण प्रयोजकत्वं तदेव प्रयोजकमित्यामिक्षाधिकरणे (पू. मी. २–२–८) वक्ष्यामः । अध्ययनोत्तरकालभावी चार्थावबोध इति न तन्मुखेन कर्मविधीनां प्रयोजकत्वम् । अत एव द्रव्यार्जननियमवत् दृष्टोऽप्यर्थावबोधोऽधिकारिविशेषणतया न परिगृह्यते । अध्ययनपूर्वकत्वादर्थावबोधस्य प्रागध्ययनात् कामनानुपपत्तेः । उत्तरकालभावितयैव चार्थावबोधोऽपि प्रयोजनान्तरं न स्वीक्रियते । केन चोक्तं स्वाध्यायाध्ययनविधेः प्रयोजनमेतदिति । आचार्यकरणनिष्पत्तिः । किं तर्हि प्रयोजनमिति । दृष्टो हि तस्यार्थः कर्मावबोधनमिति । कस्मात् पुनराचार्यकरणनिष्पत्तिरेव प्रथमोपनिपातिनी प्रयोजनं न भवति ? । उच्यते–यत्कर्तृको हि यो विधिः तत्पुरुषयोग्येवास्य प्रयोजनमित्युत्सर्गः । यत्र पुनस्तन्न दृश्यते तत्र पुरुषान्तरगतमपि गृह्यते । दृश्यते चात्र पश्चाद्भाव्यपि कर्मावबोध इति । तदेव प्रयोजनं न पुरुषान्तरगताध्यापनसिद्धिः । उक्तं चाशेषत्वं स्वाध्यायाध्ययनस्य, तस्याधिकाराश्रवणात् । यदि ह्याचार्यकरणविध्यधिकार्येवाध्ययनेऽप्यधिकारी श्रूयते, तदा तदर्थमेवाध्ययनं स्यात् । अध्ययननिष्पत्त्यर्थश्च स्वाध्यायशब्दवाच्योऽक्षरराशिः । ततश्चान्यपरत्वाच्छब्दस्य व्युत्पत्त्यभावादर्थो न विवक्षितः स्यात् । यदिदमाहाधिकाराश्रवणं भाष्यकारः । न च तत्रेति । यदपि च समानन्तीव तत्रापि द्रव्यसंस्कारकर्मस्विति । ननु च किमध्ययनं संस्कारः ?

---

१. शा.भा.पृ.२.पं.५. । २. शा.भा.पृ.२.पं.५–८. ।

परार्थत्वात् फलश्रुतिरर्थवादः स्या' ( पू.मी. ४-३-१ ) दित्यर्थवादतां वक्ष्यती"ति ।

ननु-नैवात्र विरोधो विद्यते । किं विरोधनिराकरणार्थेन सूत्रेण? कथमविरोधः? (१)"न चाधीतवेदस्य स्नानानन्तर्यमेतद्विधीयते । नह्यानन्तर्यस्य वक्ता कश्चिच्छब्दोऽस्ति । पूर्वकालतायां हि क्त्वा स्मर्यते, नानन्तर्ये । दृष्टार्थता चाध्ययनस्यानन्तर्ये व्याहन्येत" । स्यादेतदेवं यद्यस्याः स्मृतेर्मूलान्तरमस्ति । आचार्यकरणविध्यर्थपरिसमाप्तिरेवास्य मूलम्, वेदानुवचनान्तकत्वादाचार्यकरणविधेः । (२)"किन्तु

---

उच्यते—अनारभ्यविधानात् विधेरेव साध्यत्वात् प्रधानकर्मेदम् । न च स्वाध्यायस्य क्वचिदपि विनियोगः, येन तन्मुखेन विध्यन्तरसाध्यतैवात्र स्विष्टकृदादिवच्च दृष्टोऽक्षरसंस्कारः । तन्मुखेनार्थावबोधोऽपि पुरुषार्थो न युज्यते । यदि त्वसौ न दृश्यते विधिमात्रमेव साध्यः स्यात् । नाप्यर्थवादादेव कल्प्यं फलम् । विध्यर्थनिष्पत्त्यैव प्रयोजनवत्त्वाद्विधेर्दृष्टार्थावबोधस्यापि वेदार्थस्यानन्योपायत्वान्नियमासम्भवेऽपि नानर्थक्यम् । तदुक्तम्—नियोगार्थनिवृत्तेः किमन्यत् प्रयोजनं सर्वविधीनामिति । पुरुषोपयोग्यर्थावबोधप्रयोजनस्वीकाराच्च पुरुषार्थवदैश्वर्यलक्षणोऽधिकारोऽपि सिद्ध इति ।

ननु नैवात्रेति । यदि हि स्मृतिविरोधः स्यात् ततस्तत्परिहारार्थं सूत्रमारभ्येत । न चैवमिति । दृष्टार्थता चाध्ययनस्यानन्तर्ये व्याहन्येत । अध्ययनानन्तर्ये व्याहन्येत । अध्ययनस्य दृष्टार्थता च क्त्वाप्रत्ययस्यानन्तर्येऽर्थे स्वीक्रियमाणे व्याहन्येत । अतो नानन्तर्यं 'क्त्वा' प्रत्ययस्यार्थः । एतदुक्तं भवति—यद्यपि क्त्वाप्रत्ययेनानन्तर्यविशिष्टा पूर्वकालतोच्यते, तथाप्यध्ययनविधिविरोधात् पूर्वकालतामात्रमेवार्थो गृह्यत इति । स्यादेतदेवमिति । यदि स्मृते'र्वेदमधीत्य स्नाया'दिति वेदाध्ययनोत्तरकालताविशिष्टस्नानमात्रविधायकत्वं स्यात्, ततः स्मृतेरपि मूलान्तरं कल्प्यं स्यात् । यदा त्वध्ययनानन्तरमस्नानादिनियमनिवृत्त्यर्थता भवेत् ततः पूर्वपक्षन्यायमूलत्वान्नादृष्टमूलान्तरानुमानं स्यात् । तत्रादृष्टकल्पनाया असम्भवात् दृष्टे पूर्वपक्षन्याये सति तन्मूलत्वमेव न्याय्यं स्मृतेः । तन्मूलत्वे चास्ति विरोधः ।

---

१. शा.भा.पृ.२.पं.८-१० । २. शा.भा.पृ.२.प.११ । 'किन्तु' इति नास्ति मुद्रित पुस्तके ।

लक्षणया त्वेषोऽर्थः स्यात्" । किमिदमुच्यते–लक्षणया त्वेषोऽर्थः स्यादिति ? इदमुच्यते-(१)"नचेदमदृष्टार्थं विधीयते । किन्तु लक्षणया अस्नानादिनियमस्य पर्यवसानं वेदाध्ययनसमकालमाहुः—वेदमधीत्य स्नायादिति" । अतोऽपन्यायमूलतां कथयितुं सूत्रम् । गुरुकुलान्मा समावर्त्तिष्टेति मूलान्तरत्वं च स्मृतेरदृष्टं कल्पयितव्यम् । अतोऽदृष्टार्थतापरिहारायैवाचार्यकरणविधिरेवास्या मूलम् । तस्माद्वेदाध्ययनमेव पूर्वमभिनिर्वर्त्यानन्तरं धर्मो जिज्ञासितव्य इति स्थितमथशब्दप्रयोगसामर्थ्यात् । एवञ्चेन्नेदमदृष्टार्थं, प्राप्तत्वात् गुरुकुलनिवृत्तिरेव निवार्यते । (२)"न ब्रूमोऽन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा न कर्त्तव्येति । वेदमधीत्य न त्वरितेन स्नातव्यम् । अनन्तरं धर्मो जिज्ञासितव्य इत्यथशब्दस्यार्थः" ।

(३)"अतश्शब्दो वृत्तस्यापदेशको हेत्वर्थः । (४)ननु–कस्य वृत्तस्य(५) हेतुतामपदिशति ? वेदाध्ययनस्येति ब्रूमः ।

पूर्वपक्षे ह्यनुवचनान्त एवाचार्यकरणविध्यर्थः । तस्मिन्निर्वृत्ते तत्प्रयुक्ताः सर्वेऽप्यस्नानादयो नियमा निवर्त्तेत इति वेदाध्ययनानन्तरमेव गुरुकुलान्निवृत्तिः । अतोऽपन्यायमूलतां स्मृतेः कथयितुं सूत्रमिति स्थितम् । गुरुकुलान्मा समावर्त्तिष्टेत्येवमर्थः । अदृष्टार्थता परिहारायैवेति भाष्यम् । पूर्वं तावददृष्टमूलत्वान्न मूलान्तरकल्पनेत्युक्तम् , अधुना स्नानविधेरदृष्टार्थतापरिहारार्थमपि मूलान्तरं न कल्प्यमिति दर्शयति । तद्याचष्टे—मूलान्तरत्वं चेति । एवं चेदिति । यदा स्मृतिबाधनार्थमिदं सूत्रं तदा दृष्टार्थं न भवति । किं तु अपन्यायसूचनार्थम् । नापि दृष्टार्थमिति । नापि सर्ववादिसम्मतन्यायनिबन्धार्थं, विप्रतिपन्नत्वात्स्मृतिकारस्य । न ब्रूमोऽन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा न कर्त्तव्येत्यदृष्टार्थतां निरस्यति । किंतु वेदम-धीत्येत्यनेन सर्ववादिसम्मतार्थतां स्मृतिकाराविप्रतिपत्त्या निराकरोति ।

अतश्शब्दो वृत्तस्यापदेशको हेत्वर्थः इति भाष्यम् । कस्य वृत्तस्य हेतु-

१. शा.भा.पृ.२.पं.११–१३ २. शा.भा.पृ.२.पं.१६–१८

३. शा.भा.पृ.२.पं.१९ ४. ननु इति स्थाने 'तेन' इति ख. पुस्तके ।

५. हेतुतामुपदिशति इति क.पु. ।

**कथं पुनर्वेदाध्ययनस्य हेतुता ? अध्ययनानन्तरमर्थावबोधदर्शनात् । अतोऽधीतवेदस्यानन्तरं धर्मजिज्ञासा । तदिदमथेत्युक्तम् । अतो(१)ऽर्थावगमार्थं धर्मजिज्ञासाहेतुरध्ययनम् । (२)"यथा क्षेमसुभिक्षोऽयं देशः, अतोऽहमस्मिन्देशे वसामी"ति । पूर्वोक्तस्य वाक्यस्यातःशब्दो हेतुतामुपादिशतीति लौकिकार्थतां दर्शयति—(३)"एवमधीतो वेदो धर्मजिज्ञासायां(४) हेतुर्ज्ञातः । अनन्तरं धर्मो जिज्ञासितव्य" इत्यथशब्दव्याख्यानमेव प्रयुक्तवान् हेतुत्वावगमाय । (५)"धर्माय हि वेदवाक्यान्यनधीतवेदो विचारयितुं न शक्नुयात्" इत्यनेनाधिकारशून्यां स्वार्थविवक्षां दर्शयति । अत एतस्मात्कारणादनन्तरं धर्मं जिज्ञासितुमिच्छेदित्यर्थः । निगमनवाक्यमेतत् । "धर्मं जिज्ञासितुमिच्छेत्" इति कस्य सूत्रावयवस्य व्याख्यानमेतत् ? धर्मजिज्ञासा-**

---

**तां दर्शयति ?** वेदाध्ययनस्येति । **वेदाध्ययनमेव ह्यध्ययनानन्तराया धर्मजिज्ञासाया हेतुरित्यर्थः ।** अध्ययनानन्तरमर्थावबोधदर्शनादिति । (६)अथ सूत्रार्थवर्णना—**अतो वेदाध्ययनाद्धेतोः धर्मजिज्ञासा अध्ययनानन्तरमेव कर्त्तव्या । हेतोः सिद्धत्वाद्विलम्बानुपपत्तेः । कथमध्ययनमानन्तर्यहेतुः ? । यस्मादध्ययनानन्तरमर्थावबोधः तस्मादध्ययनं हेतुरिति । तदिदमथेत्युक्तम् । हेतुमदानन्तर्यं हेतुत्वावगमायेति हेतुमता विना हेतुत्वावगमासिद्धेर्हेतुमदथशब्दव्याख्यानं युक्तम् ।** धर्माय हि वेदवाक्यानि विचारयितुमनधीतवेदो न शक्नुयादिति । **वेदाध्ययनं विना वेदार्थविचारा (७)शक्तेर्वेदाध्ययनस्य हेतुतामाह भाष्यकारः । एतच्चाभिदधता भाष्यकारेण वेदाध्ययनं विना तदर्थावबोधस्यानवगतत्वात् कामनानुपपत्तेरर्थावबोधकामोऽध्ययनेऽधिक्रियते इति निराकृतम् । तदाह**—अनेनाधिकारशून्यामिति । निगमनवाक्यमेतदिति । **उपसंहारवाक्यमेतदित्यर्थः ।** कस्य सूत्रावयवस्य व्याख्यानमेतदिति **द्वितीयेच्छाश्रवणात् पृच्छति ।** धर्मजिज्ञासापदस्येति । अत्रायमभिप्रायः—**जिज्ञासा**

---

१. अतोऽनन्तरार्थावगमार्थं इति ख.पु. । २. शा.भा.पृ.२.प.१९–२०,
३. शा.भा.पृ.२.पं.२०–२१ ४. हेतुर्जात इति ख. पु. ।
५. शा.भा.पृ.२.पं.२२. ६. अत्रेत्थं सूत्रार्थवर्णना इति ख. पुस्तके ।
७. विचाराद्यशक्तेरिति क. पुस्तके ।

प्रदर्श्येति ब्रूमः । ननु — धर्मं जिज्ञासेदिति वक्तव्यम् । प्रकृतिप्रत्यययोर्हि प्रत्ययार्थस्य प्राधान्यमित्युत्सर्गः । धर्मजिज्ञासापदे पुनः प्रकृत्यर्थप्राधान्यप्रदर्शनायायं प्रयत्नः ।

(१)"धर्माय (२)हि जिज्ञासा धर्मजिज्ञासा" कथं पुनः प्रकृत्यर्थो ज्ञानं, प्रत्ययार्थ इच्छा ? यस्मादीदृश एवार्थे सन् स्मर्यते "धातोः कर्मण" (पा.सू.३.१.७.) इति । एवं तर्हि ज्ञानस्य प्राधान्यं न धर्मस्य । न ह्यनन्यार्था क्रिया प्रधानं भवतीति । धर्मकर्मिकैव सा प्रधानम् । अतो धर्मार्था जिज्ञासा ।

---

प्रति धर्मस्य प्राधान्यम्,(३)तच्च प्रधानं यत्नेन व्याप्तुमिष्यते । अतश्च प्राधान्यं(४) वक्तुं द्वितीयेच्छेति । ननु धर्मं जिज्ञासेदिति वक्तव्यमित्येतमभिप्रायमजानतः प्रश्नः । प्रकृतिप्रत्यययोर्हि इत्यभिप्रायं विवरणम्—यदि हि द्वितीयेच्छा न प्रदर्श्यते ततो धर्मप्राधान्यं न स्यात् । द्वितीयेच्छाप्रदर्शनेन हि धर्मस्य प्राधानं शक्यते दर्शयितुम् । यदि तु न तथा प्रदर्श्यते तदा प्रत्ययार्थत्वादिच्छायाः प्राधान्यं स्यात् प्रकृत्यर्थो विज्ञानं तद्विशेषणं स्यात् । ज्ञानविशेषणश्च धर्मः स्यात, न तु प्रधानम् । तेन धर्मजिज्ञासापदे प्रकृत्यर्थस्य प्राधान्यप्रदर्शनाय द्वितीयेच्छा प्रदर्शिता । द्वितीयेच्छायां हि दर्शितायां धर्मस्य प्राधान्यं, तत्प्राधान्यं च तादर्थ्ये ज्ञानस्य, तादर्थ्यं च ज्ञानस्येच्छायाः तादर्थ्ये भवतीति द्वितीयेच्छाप्रदर्शनेन धर्मस्य प्राधान्यमुक्त्वा प्रकृत्यर्थप्राधान्यप्रदर्शनं कृतं भवतीति । तेनायमर्थः— धर्माय जिज्ञासा धर्मजिज्ञासेति ।

कथं पुनः प्रकृत्यर्थो ज्ञानं प्रत्ययार्थ इच्छा यस्मादीदृश एवार्थे सन् स्मर्यते "धातोः कर्मण" इति । धात्वर्थस्येच्छाकर्मत्वात् कर्मणश्चेष्यमाणस्य प्रधानत्वात् । एवं तर्हि ज्ञानस्यैव प्राधान्यं न धर्मस्य अधात्वर्थत्वात् । न ह्यनन्यार्था क्रिया प्रधानं भवति क्लेशात्मकत्वात् क्रियायाः । अन्यार्थाया एव प्राधान्यम् । तेन धर्मज्ञानस्य धर्मार्थत्वात् धर्मस्यापीच्छां प्रति प्राधान्यम् । अतो धर्मार्था जिज्ञासा । एवञ्च तादर्थ्यस्य प्रतीयमानत्वाच्चतुर्थीसमास एवायं धर्माय जिज्ञासा धर्मजिज्ञासेति । तदिदं धर्मस्य प्राधा-

---

१. शा.भा.पृ.२.पं.२५
२. हि शब्दो नास्ति मुद्रितभाष्यपुस्तकेषु ।
३. तत् इति ख. पुस्तके ।
४. लब्धुमिति ख. पुस्तके ।

तादिदमाह—(१)"सा हि तस्य ज्ञातुमिच्छा" इति । उक्ता धर्मार्था जिज्ञासा । स पुनः कथं जिज्ञासितव्यः (२)को धर्मः ? कथंलक्षणः ? कान्यस्य साधनानि ? कानि साधनाभासानि ? किंपरश्चेति । एवमविज्ञातो धर्मो नानुष्ठानायालं भवति । अननुष्ठितो धर्मो न धर्मकार्यं करोतीत्युक्तम्-(३)"आसां प्रतिज्ञानां पिण्डस्यैतत्सूत्रम्—अथातो धर्मजिज्ञासेति" । कथं किंपरता नाम ? अधिकाराभिप्रायमेतदुच्यते-"क्व पुरुषपरत्वं ? क्व वा पुरुषो गुणभूत ? इति" च ।

धर्मः प्रसिद्धोऽप्रसिद्धो वेति च कोऽभिप्रायः ? यदि पुनर्वेदा-

---

न्यमाह—सा हि तस्य ज्ञातुमिच्छेति । तस्य धर्मस्य सा इच्छा, किमर्थम् ? ज्ञातुम् । कथं ज्ञातो धर्मो भवेदिति । स कथं जिज्ञासितव्यः ? । केन प्रकारेण जिज्ञासा क्रियमाणा धर्मार्थं भवतीति । एवं जिज्ञासितव्यः । को धर्मः ? किंरूपो धर्मः । कथंलक्षणः ? सापेक्षत्वनिरपेक्षत्वलक्षणयोः (४)किंप्रकारप्रमाणकः ? । कान्यस्य साधनानि ? कानि साधनानां करणेतिकर्तव्यतारूपाणि ? किंपरश्च ? किमधिकारपर्यन्तश्चेति । एवमविज्ञातो धर्मो नानुष्ठायालं भवति । एवं विज्ञातोऽनुष्ठातुं शक्यते । तेनेत्थं जिज्ञासा क्रियमाणा धर्मार्था भवति । ननु-मा नामानुष्ठीयताम् । तथाऽपि किमिति तादर्थ्यं न भवतीत्याह—अननुष्ठितो हि धर्मो न धर्मकार्यं करोतीति । किं पुनर्धर्मस्य कार्यम् ? । अधिकारसिद्धिरित्युक्तम् । आसां प्रतिज्ञानां पिण्डस्यैतत्सूत्रमिति । यत उक्तन्यायेन धर्मार्था जिज्ञासा सूत्रेणोक्ता एवं क्रियमाणा जिज्ञासा धर्मार्था भवति । तस्मात् सर्वासां प्रतिज्ञानां पिण्डस्यैतत् सूत्रमिति । कथं किंपरता नामेति । अयमभिप्रायः—धर्मो हि नियोगः । स हि स्वनिष्ठो न कञ्चित्प्रति गुणभूत इति । अधिकाराभिप्रायमेतदुच्यते इत्यस्यार्थः—अधिकारः पुरुषस्यैश्वर्यं कर्मणि । तदभिप्रायमेतदिति । एतदुक्तं भवति-पुरुषाधिकारपर्यन्तो धर्म इति । परशब्दश्च पर्यन्ताभिप्रायेण क्व पुरुषपरत्वं क्व वा पुरुषो गुणभूत इति चाधिकाराभिप्रायम् ।

यदि पुनर्वेदादेवाय(५)मर्थो गम्यते किमत्र जिज्ञास्यत इत्यस्यार्थः—वेदाद्वे-

---

१. शा.भा.पृ.२.पं.२५. २. शा.भा.पृ.२.पं.२६–२७

३. शा.भा.पृ.२.पं.३०–३१. ४. किंप्रमाणकः इति क. पुस्तके ।

५. अयमर्थोऽवगम्यते किमत्र जिज्ञासितव्यं इति ख. पुस्तके ।

देवायमर्थो गम्यते किमत्र जिज्ञास्यते ? सत्यम् ; विप्रतिपन्नास्तु महर्षयः केचित्प्रमाणान्तरपूर्वकमर्थं वर्णयन्ति । केचिन्मन्त्रार्थवादानामपि यथाश्रुते एवार्थे प्रामाण्यमिच्छन्ति अकार्येऽप्यर्थे वेदः प्रमाणमिति वदन्तः । अतोऽस्यां विप्रतिपत्तौ सत्यां प्रारभ्यते जिज्ञासा तत्त्वावगमाय । तत्त्वेनापरिज्ञातोऽर्थोऽनुष्ठीयमानो विहन्त्यनुष्ठातारम् , ज्ञात्वाऽनुष्ठितो निःश्रेयसेन संयुनक्तीत्यारभ्यते जिज्ञासा ॥ १ ॥

इति प्रथमं धर्मजिज्ञासाधिकरणम् ॥ १ ॥

अथ द्वितीयं धर्मलक्षणाधिकरणम् ॥ २ ॥

## चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

सर्वविचाराणां प्रतिज्ञापूर्वकत्वात्तदभिधीयते—(१)"चोद-

---

दार्थेऽवगम्यमाने वेदोऽपि विवक्षितार्थ एवावगम्यते । अनवगम्यमाने त्वध्ययनविधि(२)सिद्ध्यर्थमेवाध्ययनम् । सर्वथा न जिज्ञासावकाशोऽस्ति । सत्यं विप्रतिपन्नास्त्विवति । सत्यं गम्यते । किन्तु गम्यमानेऽप्यर्थे विप्रतिपत्तिरस्ति । तेन तन्निवृत्तये जिज्ञासोचिता । केचित्प्रमाणान्तरपूर्वकमर्थं वर्णयन्ति, वेदस्य पौरुषेयत्वमिच्छन्तः । केचित् मन्त्रार्थवादानामपि यथाश्रुतमेवार्थं वर्णयन्ति—सिद्धरूपेऽकार्येऽप्यर्थे वेदः प्रमाणमिति वदन्तः । कार्यमात्रप्रामाण्यपक्षे हि कार्यानुगुण्याद्गुणवादादिभि(३)र्व्याख्यानम् । इतरथा श्रौत एवार्थः स्यात् । तत्त्वेनापरिज्ञातोऽर्थोऽनुष्ठीयमानोऽपि विहन्त्यनुष्ठातारमधिकारसिद्धिं न प्रापयति । ज्ञात्वा चानुष्ठितो निःश्रेयसेना(४)धिकारिणं योजयतीति प्रारभ्यते धर्मजिज्ञासा ॥ १ ॥

इति प्रथमं धर्मजिज्ञासाधिकरणम् ॥

अथ द्वितीयं धर्मलक्षणाधिकरणम् ॥ २ ॥

## चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

---

१. शा०भा० ३.९ २. सिध्यर्थत्वमेवाध्ययनस्येति ख. पुस्तके । ३. व्याख्यातः । ४. अधिकारेण योजयति" इति ख. पुस्तके ।

नेति क्रियायाः प्रवर्तकं वचनमाहु"रिति । कार्येऽर्थे वेदस्याप्रामाण्यं दर्शयति "तल्लक्षणो धर्म" इति वदन् ।

---

कार्येऽर्थ इति । न कार्यावगमं विना प्रवृत्तिरुपपद्यते । तेन कार्याभिधायकतयैव वचनस्य प्रवर्त्तकता । कार्याभिधायकेन(१) च कार्यमेव लक्ष्यते, तेन कार्य एव वेदः प्रमाणम् । तल्लक्षणो धर्म इति । अस्यार्थः—चोदनालक्षणसूत्रेण चोदनालक्षणः कार्यरूप एवार्थो न सिद्धरूप इति प्रतिज्ञातम् । तदनेन भाष्येण व्याख्यायते । धर्मशब्दश्च वेदार्थमात्रपरः ।

(२)अत्रापरेऽपरिपक्वविद्यावलपोद्रेकतिरस्कृतविवेकाः परिचोदयन्ति—कथं पुनः कार्यरूपो वेदार्थः ? यावता वेदान्तानां सिद्ध एवार्थः "विज्ञानमानन्दं ब्रह्मे"(बृ.३-९-२८) ति प्रतीयते ।

स्यान्मतम्—अपरिपूर्णत्वात्तत्र योग्यविध्यध्याहारः क्रियत इति । (३)तन्न तु । अपरिपूर्तेः कारणाभावात् । अथोच्येत—वृद्धव्यवहार एव शब्दानां स्वार्थे व्युत्पत्तिः । प्रवृत्तिनिवृत्त्यात्मकत्वाच्च व्यवहारस्य,कार्यावगमपूर्वकत्वाच्च प्रवृत्तिनिवृत्त्योः(४)कार्यान्वित एवार्थः सर्वशब्दाभिधेयः। न चेह कार्यमस्ति । (५)तेन कार्यान्वयं विना अपरिपूर्णत्वात् कार्यमध्याह्रियत इति । तदेतत् स्वसमयपरिकल्पितम् । विनापि व्यवहारेण सिद्धार्थेष्वपि वाक्येषु कार्यान्वयरहितेषु व्युत्पत्तिसंभवात् 'पुत्रस्ते जात' इत्येवमादिषु ।

नन्वर्थविशेषविषयां प्रतीतिमनुमाय शब्दतद्भावभाविनीं शब्दस्य स्वार्थे शक्तिनिरूपणा व्युत्पत्तिरुच्यते । न च व्यवहारं विना परबुद्धिरनुमातुं शक्यते । उच्यते—हर्षादिनिबंधनमुखप्रसादादिभिरपि लिङ्गैः शक्यानुमानैव परेषामपि बुद्धिः । मुखप्रसादादिर्हर्षमनुमापयति । स च हर्षहेतुम् । प्रियार्थप्रतिपत्तिश्च हर्षहेतुः । सा च वाक्यनिबन्धनेति "पुत्रस्ते जात" इत्यनेन हर्षहेतुभूतार्थप्रतिपत्तिः कृतेति ज्ञायते । हर्षहेतुश्च पुरुषस्य पुत्रजन्मैव केवलमस्तीत्यवगच्छन् विशिष्टार्थविषयां शब्दस्य शक्तिमध्यवस्यति । आवापोद्धाराभ्यां च प्रतिपदं (६)व्यवहार इव व्युत्पत्तिरत्राप्युपपद्यत इति निरवद्यम् ।

---

१. 'च' इति क. पुस्तके नास्ति ।

२. अत्रापरोऽपरि''''''कः परिचोदयति" इति क. पुस्तके. ।

३. तत्र. इति ख. पुस्तके ।

४. कार्यान्वयिन एवार्थास्सर्वशब्दाभिधेयाः. इति ख० पुस्तके ।

५. तेनेह इति ख० पुस्तके । ६. व्यवहारवत् इति ख० पुस्तके ।

अपि च व्युत्पन्नेतरपदविभक्त्यर्थो वर्त्तमानापदेशोऽपि 'काष्ठैः पचती'ति काष्ठपदार्थे व्युत्पद्यते कार्यान्वयरहित एव । किं च व्यवहारेऽपि व्युत्पत्तौ यद्यप्यन्विताथतैव पदानां, तथापि न कार्यान्विताभिधायितया व्युत्पत्तिः । किन्तु अर्थान्तराभिधायितयैव । यो हि विशेषान्विताभिधानमिच्छति इच्छत्यसावर्थान्तरान्विताभिधानम् । तावता च प्रयोगप्रतिपत्त्युपपत्तौ न शक्यते विशेषान्विताभिधानकल्पना । तथा च लोके सिद्धार्थान्येव भूयिष्ठानि वाक्यानि दृश्यन्ते— कुशलं ते ? (१)कुशलं, इत्येवमादीनि । किं च कार्यमपि तदुच्यते यदपेक्षितोपायम् । तेन सिद्धेव कर्मणामपेक्षितोपायता (२)कार्यपरेषु वाक्येषु गम्यते । अतः सिद्ध एव वेदार्थः ।

तदेतद्बालभाषितं बालेष्वेवादरणीयतां लभते । नहि वृद्धव्यवहारमन्तरेण व्युत्पत्तिः सम्भवति । विशिष्टार्थविषया हि प्रतिपत्तिरर्थविशेषाभिधानकल्पनानिमित्तम् । न च हर्षो हर्षहेतुविशेषानुमाने प्रभवति । न च पारिशेष्येण हेतुविशेषनिश्चयः । कालत्रयवर्तिव्यवहितविप्रकृष्टानां हर्षहेतूनां पारिशेष्यावधारणानुपपत्तेः । व्यवहारः पुनर्विशिष्टार्थविषय एव प्रत्यक्षमुपलभ्यमानस्तद्विषयामेव प्रतीतिमनुमापयन् शब्दस्य विशिष्टार्थाभिधानकल्पनायां हेतुर्व्युत्पत्तावादिमार्गभूतः कार्यान्विताभिधायकत्वमेव सर्वशब्दानामापादयति । अत एव (३)'काष्ठैः पचती'ति वर्त्तमानापदेशेऽपि या व्युत्पत्तिः साऽपि कार्यान्वितार्थान्तरसम्बन्धानुगुण्यात्कार्यान्वयिन्येव ।

यच्चेदमर्थान्तरान्वितमात्राभिधाने पदानि व्युत्पद्यन्त इति, तदपि बालिशभाषितम् । सर्वेषु वृद्धव्यवहारवाक्येषु कार्यान्वितार्थप्रतीतेर्नार्थान्तरमात्रान्विता(४)भिधानकल्पना संभवति । यदि कार्यान्वयोऽपि क्वचिद्व्यभिचरति तदाऽर्थान्तरमात्रान्विताभिधानं कल्प्येत । न च तदस्ति ।

ननु च-'निधिमानेष भूभागः, 'प्रतिरोधकवानयमध्वे'ति विनाऽपि कार्यान्वयं प्रवृत्तिनिवृत्तिकरवाक्यमुपलभ्यते । वाक्येन हि निधिम-

१. 'कुशलं मम' इति ख. पुस्तके ।

२. कार्यपरेषु वाक्येषु स्वतस्सिद्ध एव वेदार्थः. इति ख. पु. ।

३. काष्ठैः पचतीति ख. पुस्तके नास्ति ।

४. अभिधानं कल्प्येत इति ख. पुस्तके । ततो 'यदि' इत्यादिः 'अस्ति' इत्यन्तो ग्रन्थः ख. पुस्तके नास्ति ।

कार्यरूप एवेति दर्शयति—चोदना हि भूतमिति। यदि कार्य एव-चार्थे वेदस्य प्रामाण्यं कथं तर्हि भूताद्यर्थावगतिर्मन्त्रार्थवादेषु?

स्तायां बोधितायां तदुपादित्सोः प्रवृत्तिः। प्रतिरोधकवत्तायां च तज्जिहासोर्निवृत्तिरिति।

अत्र ब्रूमः—यत्र तावत्प्रवृत्तिनिवृत्ती विद्येते तत्र तत्तत्कारणीभूता कार्यावगतिरस्ति। न हि तां विना ते भवतः। शब्दानन्तर्याच्च शब्देनैव सावगतेति कल्पयति पार्श्वस्थः। न च कार्यार्थः शब्दो न श्रूयत इत्येतावता शब्दस्याकारणत्वम्, अध्याहारादिलभ्यस्यापि वाचकत्वाविरोधात्। योग्यताविशेषेण चाध्याहार्यविशेषावगमसिद्धेः। न च प्रमाणान्तरेणापि कार्यावगमो घटत इति शब्दस्य तत्रौदासीन्यं शक्यं कल्पयितुम्। शब्दश्रवणे प्रवृत्तिदर्शनादानन्तर्येण शब्दस्यैव तत्र कारणत्वावगमात्। प्रमाणान्तरेणापि त्वसावर्थो लभ्यत इति कामं शब्दोऽनुवादः स्यात्, न कारणम्। न चानुवादकत्वं पुरुषवचसां दोषः। तेन साक्षाच्छ्रुत्याऽध्याहारेण वा सर्वव्यवहारवाक्येषु कार्यान्वयाव्यभिचारात्तदन्विताथार्भिधानं लिङादीनां कार्याभिधानमेवेति सिद्धम्। तेन सर्वपदानि तावत्कार्यान्वितमेवार्थमाहुः।

न च प्रतिपदं विषयाभावः। प्रणाड्यापि तादर्थ्योपपत्तेः। प्रणाडीसमाश्रयणे च परस्परपदार्थान्तरसम्बन्धावगम एव प्रमाणम्। अन्यथा प्रतिपदं विषयभावेऽनुबन्धभेदाद्भिन्नेषु नियोगार्थेषु संभेदानामरुणैकहायनीन्यायवैलक्षण्यात्। परस्परसम्बन्धावगमश्च क्रिययैव स्यात्। एतच्च प्रतिपदाधिकरणे (पू. मी. २-१-६) निपुणतरमुपपादयिष्यामः। लोके तु यः सिद्धार्थमात्रपरत्वेन प्रयोगः स लोकवचसां प्रमाणांतरप्रतीतार्थपरत्वाल्लाक्षणिको द्रष्टव्यः। कार्यान्वयो हि परस्परान्वयाव्यभिचारीति लाक्षणिकोपपत्तिः। न चापेक्षितोपायतैव कार्यता। कृतिसाध्यं कार्यम्। साधनमुपायः। साध्यत्वोपायत्वे च भिन्ने। किन्तु क्लेशात्मकं कर्मापेक्षितोपायतया कार्यं प्रतीयत इति कार्यता साधनतां न व्यभिचरतीति तादर्थ्यभ्रमो मन्दानाम्। तथा च सुखं स्वयमेव कार्यम्।

एवं सर्वपदानां कार्यान्विताभिधायकत्वाद्यदि वेदान्तेषु कार्यं योग्यमध्याहारादिभिर्लभ्यते तदा कार्यार्थतैव वेदान्तानामपि। अथ न, ततोऽनभिधायकत्वमेव, व्युत्पत्तिविरहात्। अतो विधिनिराकरणमपि वेदान्तेषु न क्षतिमावहति। तस्मात्सिद्धं कार्यं एव वेदस्य प्रामाण्यम्।

चोदना हि भूतमिति। यदि हि कार्य एवार्थे वेदस्य प्रमाण्यं कथं तर्हि

तेषामपि हि कार्यार्थतां द्वितीये पादे वक्ष्यति । तदुक्तम्—(१)"शक्नोत्यवगमयितु"मिति । न च प्रमाणान्तरावगम्योऽयमर्थ इति (२)"नान्यत्किंचनेन्द्रिय"मिति दर्शयति ।

(३)"नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदने"ति शब्दस्यार्थासंस्पर्शितां वदन् प्रतिज्ञादोषमाह । कथं पुनरर्थासंस्पर्शिता शब्दस्य ? उच्यते—अर्थसंस्पर्शि हीष्यते प्रमाणम् । तस्य बाधकज्ञानोत्पत्तौ सत्यां पुनः प्रतिपक्षविज्ञानं तन्निमित्तमेवोत्पद्यते । शब्दे पुनः स्पष्टेऽपि बाधकज्ञाने पुनः शब्दनिमित्तमेव प्रतिपक्षविज्ञानमुदेति—अङ्गु-

---

मन्त्रार्थवादेषु भूताद्यर्थावगतिः ? अकार्यभूतत्वात् तेषाम् । तत्राह भाष्यकारश्चोदना हीति । तद्व्याचष्टे—तेषामपीति । अस्यार्थः—भूतादिकोऽप्यर्थः कार्यान्वयित्वात्तेन रूपेणाकार्य एव । तेन चोदनैव कार्यप्रतिपादिकमेव वाक्यं भूतादिकमप्यवगमयितुं शक्नोतीति कार्यरूप एव वेदार्थ इति न प्रतिज्ञाहानिः । ननु—भूतादिकोऽप्यर्थो मन्त्रार्थवादविषयः प्रमाणान्तरावगम्य इत्यर्थः ।(?)

नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदनेति शब्दस्यार्थासंस्पर्शितां वदन् प्रतिज्ञादोषमाहेति । न कश्चिच्चोदनालक्षणो नाम । यदि हि कश्चिदर्थं चोदना प्रमिमीते तदा चोदनालक्षणो नाम प्रसिद्ध्येत् । चोदना हि शब्दात्मिका शब्दश्चार्थं व्यभिचरति । तथा हि—असत्यप्यर्थे नदीतीरे फलानि सन्तीति ज्ञानमुत्पद्यते ।

नन्वेवं प्रत्यक्षमपि व्यभिचारि स्यात् । तत्रापि विनाप्यर्थेनैन्द्रियकं ज्ञानं दृश्यते शुक्तिकायां रजतमिदमिति । न तत्रैन्द्रियकं ज्ञानं व्यभिचरति । एकं हि तत्र ज्ञानमिदमिति चाक्षुषम् । अपरमपि रजतमिदमिति रजतावलम्बि स्मरणज्ञानम् । तयोर्विवेकाग्रहणनिबन्धनो भ्रमोऽयं, न पुनरैन्द्रियकं विज्ञानं व्यभिचरति । बाधकं च तत्र ज्ञानं विवेकग्राहकम् । यदि च शाब्देऽपि विज्ञाने एवमेवाङ्गीक्रियते तदा ज्ञानोदये विवेकेऽवधारिते पुनर्भ्रमो नोत्पद्येत । उत्पद्यते तु बाधकेऽपि विज्ञानेऽङ्गुल्यग्रादिवाक्येषु ज्ञानम् । तथा प्रत्यक्षादिषु दोषवशादिन्द्रियं न सम्पूर्णं कार्यं करोति । तेन विवेकाग्रहणात् भ्रमः । शाब्दे तु (४)विज्ञाने शब्द

१. शा.भा.पृ.३.पं.१३. २. शा.भा.पृ.३.पं.१३.
३. शा.भा.पृ.३.पं.१५. ४. ज्ञाने इति ख. पुस्तके ।

ल्यग्रे हस्तियूथमास्ति। तथा न शुक्तिकारजतादिष्वन्यार्थस्य संभवः। तस्मादर्थासंस्पर्शित्वाच्चोदनायास्तल्लक्षणो धर्म इति प्रतिज्ञा नोपपद्यते। (१)उच्यते—अर्थं चावबोधयत्यर्थासंस्पार्शि चेति चित्रम्। यदि तावद्बाधकज्ञानावगम्यमर्थासंस्पर्शित्वं नैव तत्प्रमाणजन्यम्। (२)विशेषाग्रहणात् स्मृतिज्ञानं तदिति प्रतिपादयिष्यामः। वेदे पुनर्बाधकज्ञानाभावात् अर्थासंस्पार्शिताशङ्कापि नास्ति।

---

एव (३)करणम्। न च तदन्तर्गतो दोषोऽस्ति। पुरुषगतास्तु दोषाः (४)सामग्रीबाह्या इति न ते कार्यक्षतिहेतवः। (५)तस्माच्छाब्दं ज्ञानं व्यभिचरति। यच्च व्यभिचरति न तन्निश्चायकम्। (६)निश्चायकं च प्रमाणम्। तेन (७)निश्चायिका चोदना अर्थासंस्पर्शिनीति न तल्लक्षणो नाम कश्चिदप्यस्तीति तात्पर्यार्थः।

बाधकज्ञानोत्पत्तौ सत्यां विवेकेऽवधारिते (८)तमेव व्यभिचरतीति प्रतिपक्षविज्ञानं विवेकग्रहणनिबन्धनम्। भ्रान्तिज्ञानं न तन्निबन्धनं बाधकावस्थाभाविनिर्दोषेन्द्रियादिसामग्रीप्रभवम्, किन्तु दोषखण्डितशक्तिकज्ञानजननकारणचक्रोत्थम्। शब्दे पुनः स्पष्टेऽपि बाधकज्ञाने अवधारितेऽपि विवेके शब्दनिमित्तमेव सम्यग्ज्ञानं सामग्रीभूतादुष्टशब्दजन्यमेव। प्रतिपक्षज्ञानं तत्प्रतिपक्षासद्भूतार्थग्राहीत्यर्थः। एतच्च नन्वतथाभूतमिति भाष्येण (९)व्यभिचारदर्शनोत्थं संशयरूपमर्थासंस्पर्शित्वनिबन्धनमुपन्यस्तवानाचार्यः। उच्यते—अर्थं चावबोधयत्यर्थासंस्पार्शि चेति चित्रमेतत्। नैव कदाचिद्विज्ञानं (१०)व्यभिचरति, येनानिश्चयः स्यात्। बाधकज्ञानमपि नैवार्थव्यभिचारितां दर्शयति। किन्तु ग्रहणस्मरणयोर्विवेकमवधारयति। वेदे पुनरीदृशोऽपि बाधो नास्तीत्यतिदूरोत्सारितमेवानिश्चयलक्षणम-

---

१. तदुच्यते. इति. ख. पु. पा. २. विशेषग्रहण स्मृति ज्ञाने इति.क.पु.

३. कारणम् इति ख. पु.। ४. सामग्री वा बाध्यः इति क पु.।

५. तस्माच्छाब्दन्द्वय यच्च इति अनन्वितोऽपपाठः क. पुस्तके।

६. निश्चायकं इति नास्ति क. पु.। ७. निश्चयात्मिका इति ख पु.।

८. तमेव व्यभिचरति इति नास्ति ख. पुस्तके।

९. व्यभिचरति शब्दोत्थं संशयरूपं इति क. पुस्तके।

१०. व्यभिचरति वेद्यं, इति ख. पुस्तके।

ननु च सत्यपि बाधकज्ञाने लौकिकेषु वाक्येषु शब्दादेव ज्ञानमुत्पद्यते निमित्तभावात् । अङ्गुल्यग्रे हस्तियूथशतमिति । तद्द्वा परिहृतैवार्थासंस्पर्शिताशङ्का । नैवम् ; अनभिज्ञो भवान् बाध्यबाधकभावस्य । अङ्गुल्यग्रे हस्तियूथशतमिति प्रमाणान्तरदर्शनमत्र बाध्यते, न पुनर्हस्तियूथशतमिति । तदिदमाह–(१)"विप्रतिषिद्धमिदमभिधीयते ब्रवीति च वितथं चेति" । अतथार्थासंस्पर्शित्वम् ।

ननु चेत्यादिना प्रागुक्तमनुभाषते । नैवमिति । अत्रायमभिप्रायः—सर्वत्र पौरुषेयेण वचसा न साक्षादर्थ एव प्रतीयते । पुरुषेच्छापरतन्त्रत्वात् । असत्यप्यर्थे पुरुषा वाक्यानि प्रयुञ्जाना दृश्यन्ते । तेनार्थं प्रति नियमाभावान्न तेभ्योऽर्थसिद्धिः । वक्तुरभिप्रायं तु स्वकारणं सूचयेयुः । स चाभिप्रायः प्रमाणपूर्वकश्चेत् ततस्तस्य प्रमाणस्य (२)प्रमाऽविनाभावात्तन्मुखेन वाक्यार्थं निश्चयाऽनुमानमेव । तेनानुमानस्यायं बाधः । तदाह—प्रमाणान्तरदर्शनमत्र बाध्यते (३)न पुनर्बाह्यं वस्तु हस्तियूथशतरूपमिति । एतदुक्तं भवति—अनुमानावसेयं प्रमाणान्तरदर्शनमत्र बाध्यते न पुनर्बाह्यं वस्तु हस्तियूथशतरूपं इति, तत्र वचनस्याव्यापारात् । यत्र विषये यत्प्रमाणं प्रवृत्तं तत्र तस्य बाधो भवति, न वचनस्य बाह्येऽप्यर्थे प्रवृत्तिः, तत्र तस्य प्रवृत्तिनियमाभावादित्युक्तम् । तदुक्तमनभिज्ञो भवानिति । न चायमनुमानस्यापि बाधः । किन्तु (४)अलिङ्गे लिङ्गस्य साधारणरूपं पश्यन्नलिङ्गतामविविञ्चन् लिङ्गतामन्यत्र दृष्टां स्मरन् लिङ्गव्यवहारं प्रवर्त्तयन्नलिङ्गज्ञानेन लिङ्गव्यवहारान्निवर्त्तते । (५)तथा हि श्रुतिलिङ्गाधिकरणे दर्शितम् । तदिदमाह—विप्रतिषिद्धमिदमभिधीयते ब्रवीति च वितथं चेति । ब्रवीतीति च ज्ञानं जनयति वितथमपि ज्ञानं न जनयतीति विप्रतिषिद्धम् । ज्ञानाजनकत्वमेव वितथत्वं नान्यत् । अत एव तच्चेत्प्रत्ययितादित्युक्तम् । यत एव लिङ्गभूतं पौरुषेयं वाक्यं अत एव प्रत्ययितस्य नियमेन प्रमाणान्तरपूर्वकार्थाभिधायिनो वचनं सत्यम् । तथा श्रोतुरिन्द्रियविषयमप्रत्ययितवचनमपि सत्यम् । यत्पुनरप्रत्ययितवचनं श्रोतुश्च न प्रमाणान्तरपूर्वकं न तत्सत्यमित्युक्तम् । प्रमाणान्तरपक्षे हि सर्वत्रैवार्थासंस्पर्शि-

---

१. शा.भा.पृ.३.पं.१६. २. प्रमेयाविनाभावात् इति ख. पु. ।

३. बाह्यं वस्तु इति नास्ति ख. पुस्तके ।

४. लिङ्गे वचने लिङ्गसाधारणं इति ख. पु. । ५. यथा इति ख. पु. ।

एव तच्चेत्प्रत्ययितादित्युक्तम्। प्रत्ययितस्य हि वचनमव्यभिचारि प्रमाणान्तरपूर्वकं, यत्रोपलभ्यमानविषयम्। यत्र तु द्वयं नास्ति तत्र प्रमाणान्तराविपर्ययाद्विपर्ययः। वाक्यार्थे पुनरुक्तो विपर्ययः। कस्मात्पुनः पौरुषेये (१)वचसि प्रमाणान्तर(२)विपर्ययाद्विपर्ययः ? ज्ञातं ह्यर्थं परस्मै प्रतिपादयितुं पुरुषाः प्रयुञ्जते वाक्यानि। न चाप्रतीतोऽर्थो ज्ञातो भवतीति प्रमाणान्तरसंवादिना पौरुषेयेण वचनेन भवितव्यम्। (३)तदिदमुक्तम्- (४)"अशक्यं हि तत्पुरुषेण ज्ञातुमृते वचना"दिति।

नन्वशक्यं हि तत्पुरुषेण ज्ञातुमृते प्रमाणान्तरादिति वक्तव्ये

ता स्यात्, तुल्यत्वात्सामग्र्याः। (५)लिङ्गपक्षे तु यदेव प्रमाणान्तरकार्यतया वचनं निश्चीयते तदेव लिङ्गभूतमर्थाव्यभिचारि भवति नान्यदिति युज्यते।

ननु—यावद्वाक्यस्यापि विपर्ययोऽस्ति तदार्थासंस्पर्शिता प्रसक्तेत्याशङ्क्याह—वाक्यार्थे पुनरुक्तो विपर्यय इति। अस्यार्थः—योऽयं विपर्ययः नासौ वाक्यार्थे, किं तर्हि ? लिङ्गार्थे। एतच्चोक्तमनभिज्ञो भवानिति। कस्मात्पुनः पौरुषेये वचसि प्रमाणान्तरस्यानुमानस्य विपर्ययाद्विपर्ययः, न पुनः शब्दविपर्ययादिति। अत्रोत्तरम्। ज्ञातं हीति। अयमभिप्रायः—पुरुषाणां हि वाक्यप्रयोगः प्रतीतार्थप्रत्यायनार्थः। (६)स च प्रतीताव्यभिचारीति प्रमाणान्तरप्रतीतिपर्युपस्थापकेन तेन भवितव्यम्। तथा च प्रतीत्युपस्थापकत्वाद(७)नुमानत्वं गम्यते। तेन विपर्ययोऽप्यनुमानस्यैव न शब्दस्येति। तदिदमाहेति। यदेतत् ज्ञातार्थप्रतिपादनार्थत्वात् प्रयोगस्य प्रमाणान्तरसापेक्षत्वं तदिदमाह—अशक्यं हीति ग्रन्थेन। (८)यत्पुरुषेण वाक्यं प्रयुज्यते तत्प्रतीतार्थप्रतिपादनाय। न च प्रमाणान्तरं विना प्रतीतिरस्ति। तस्मात्प्रमाणान्तरसापेक्षं लौकिकं वचनमिति।

(९)ऋते प्रमाणान्तरादिति वक्तव्य इति। सामान्यं परित्यज्य किमिति

१. वचने इति.ख.पु.
२. प्रमाणान्तरविपर्ययः इत्येव क.पु.
३. तदिदमाह. इति ऋजुविमलापाठः
४. शा.भा.पृ.३.पं.२८.
५, लिङ्गपक्षे हि इति ख. पुस्तके।
६. तेन प्रती इति ख. पु.।
७. अनुमानत्वं तस्य. इति ख. पुस्तके।
८. यत् पुनः पुरुषेण इति ख. पु.।
९. गम्यते प्रमाणम् इति अधिकं ख पु.।

ऋते वचनादिति कोऽभिप्रायः? उच्यते–ननु च कार्यार्थत्वेऽपि पौरुषेयतैव वचसः प्राप्नोतीत्यस्य परिहारार्थमिदमुच्यते–ऋते वचनादिति । ननु च प्रमाणान्तरसंवादितैवं न प्रदर्शिता भवति । बाढं प्रदर्शिता, सापेक्षत्वनिराकरणदर्शनात् नान्तरीयकानपेक्षत्वसिद्ध्यर्थं तु विशेषोदाहरणम् ।

नन्वृते वचनादित्युक्तेऽपि अपरस्मात्पौरुषेयाद्वचनात् प्राप्नोत्येव पौरुषेयत्वं चोदनायाः । उच्यते––वचनादित्युक्ते प्राप्नोत्येव कार्येऽर्थे वचनस्य स्वातन्त्र्यम् । अतः पुरुषपरम्परायामपि न प्रमाणान्तरगोचरो धर्म इति सि-

---

विशेष आश्रीयत इत्यर्थः । उच्यत इत्यनेनैतद्दर्शयति—आशङ्कापरिहारार्थमिदमुक्तमिति । का पुनराशङ्का ? । इयमसौ । यद्यपि चोदना कार्यमर्थं प्रतिपादयति तथापि पौरुषेयी चोदना प्राप्नोति वचनस्य स्वातन्त्र्यादर्शनात् । ततश्च (१)प्रत्ययान्तरसापेक्षत्वादप्रामाण्यमापद्यत इति । कः परिहारः ? । अयमुच्यते—यदि चोदना कार्यमर्थं प्रतिपादयति तदा न पौरुषेयी । पुरुषा हि प्रमाणान्तरप्रतीतार्थप्रतिपादनाय वाक्यं प्रयुञ्जते । न च कार्यं प्रमाणान्तरप्रमेयम् । तेन तत्प्रतिपादकस्य न पौरुषेयत्वम् । अतोऽदृष्टमपि स्वातन्त्र्यं कल्प्यते, कार्यप्रतीतिबलेन। चैत्यवन्दनादिषु (२)तु पौरुषेयत्वेन स्मरणम् । तेनानापेक्षत्वं चोदनायाः । एतदेव दर्शयितुं वचनादृत इति विशेषाभिधानम् । ननु चेति वाक्यमेवैवंपरमिति मन्वानस्य चोद्यम् । बाढमिति वाक्यं सापेक्षत्वपरं विशेषसङ्कीर्तनस्यैतत्प्रयोजनमिति परिहारः । सापेक्षत्वनिराकरणदर्शनादिति । सापेक्षत्वं निराक्रियमाणं दृश्यते यस्माद्वचनस्य तस्मान्नान्तरीयकमनपेक्षत्वं सिध्यतीत्यर्थः ।

ननु च यद्यपि (३)कार्यमर्थं चोदना प्रतिपादयति तथापि पौरुषेयत्वं चोदनायाः किमिति न भवति ? । प्रमाणान्तरशून्यत्वादिति चेत्––न ; अपरस्मात्पौरुषेयाद्वचनादवगातिसिद्धेः । तदाह— अपरस्मादिति भाष्येण । तद्व्याचष्टे––नन्वृते वचनादित्युक्तेऽपीति । (४) अत्रोत्तरं भाष्यम्–तदपि हि तेनैव तुल्यमिति । तस्य व्याख्यानमुच्यते–वचनादित्युक्त

---

१. प्रत्ययान्तरापेक्षत्वात् इति ख. पु.। २. तु. इति नास्ति ख. पुस्तके ।
३. साध्यमर्थं इति ख. पुस्तके। ४. भाष्यं इति नास्ति ख. पु. ।

द्धम् । कथं पुनरिदं सिध्यति ? पुरुषपरम्परोपदेशान्यथानुपपत्त्या किमप्युपलंभकमस्तीति शक्यते कल्पयितुम् । न स्वातन्त्र्यं बचनस्य । नैतदेवम् । (१)"उपदेशो हि व्यामोहादपि भवति । असति व्यामोहे वेदादपि भवति" । मूलद्वये सम्भवत्येतस्मिन् परिगणितप्रमाणव्यतिरिक्तं न प्रमाणान्तरमस्तीति शक्यते वक्तुम् । अतः प्रमाणान्तराविपर्ययासम्भवात् न श्रुतश्चार्थासंस्पर्शिता शक्यते वक्तुं चोदनायाः । तस्मात्सुष्ठु प्रतिज्ञातं 'चोदनालक्षणोऽर्थो धर्मः' इति ।

---

इति । नन्वविदुषामित्युपदेशान्यथानुपपत्त्या उपलम्भ(२)कारणानुमानं शक्यते । तद्याचष्टे–कथं पुनरिदं सिध्यतीति । नैतदेवमुपदेशो हीति भाष्येण परिहरति । अस्यार्थः—न तावदुपलम्भकारणान्तरं शक्यानुमानम्, परिगणितप्रमाणसामग्रीव्यतिरिक्तस्याभावनिश्चयात् । उपदेशस्तु (३)व्यामोहादप्युपपद्यते । असति व्यामोहे वेदादप्युपपद्यते । अतः प्रमाणान्तरस्यानपेक्षणान्न तद्विपर्ययेणा(४)प्रामाण्यं चोदनायाः । स्वतश्चार्थप्रतिपादकतयार्थसंस्पर्शिनेति(५)सम्भवी प्रतिज्ञातार्थः ।

"अपि च पौरुषेयाद्वचना"दिति भाष्यम् ; (६)तत् पौरुषेयस्य वचसो लिङ्गत्वेन गमकत्वमिति दर्शयति । पूर्वं हि प्रमाणान्तरप्रतीतप्रत्यायकतया पौरुषेयस्य वचनस्य न स्वातंत्र्येणार्थप्रतिपादकत्वम् । अपि तु अन्तर्भावितपूर्वप्रमाण(७)स्यैव । तथा च प्रमाणान्तरोपस्थापकतया लिङ्गत्वमेवेत्युक्तम् । लिङ्गव्यभिचाराच्च शब्दस्यार्थासंस्पर्शिताशङ्कापि नास्ति इत्युक्तम । अधुना(८)त्वनुमानबाह्यत्वबुद्धिर्नास्तीति कथ्यते । कथम् ? पुरुषवचनादर्थानिश्चयात् । वक्तृबुद्धिनिश्चये त्वा(९)नुमानत्वम् । अर्थो हि न कारणं वचनस्य । वक्तृबुद्धिस्तु कारणमेव । कार्यतस्तु कारणावगतिरनुमानमेव । अनुमानमपि पौरुषेयवाक्यसमुत्थज्ञाने यथा व्युत्पत्तिस्तथौत्पत्तिकसूत्रे ( पू. मी. १-१-५. ) वक्ष्यामः । तमिमर्थमस्य

---

१. शा.भा.पृ.४.पं.४. उपदेशा हि इति बहुवचनान्तपाठः मुद्रितभाष्यपुस्तके ।
२. कारणानुमानमाशङ्कते इति ख. पु. । ३. व्यामोहेनापि इति ख. पु. ।
४. प्रामाण्यम् इति ख. पुस्तके । ५. सम्भवति इति ख. पु. ।
६. तदिति नास्ति क. पुस्तके । ७. एवेति नास्ति ख. पुस्तके ।
८. अनुमानादन्यत्वबुद्धिः इति ख. पुस्तके । ९. अनुमानत्वमेव इति ख. पुस्तके ।

किं च पुरुषवचनाद्विज्ञातोऽयमनेनार्थ इति निश्चयो भवति । न पुनः प्रमाणान्तरबुद्धिरुपजायते । तदुक्तम्–(१)"अपि च पौरुषेयाद्वचनादेवमयं पुरुषो वेदेति भवति प्रत्ययो, नैवमयमर्थ इति" । किंवाऽर्थान्तरावगतौ प्रमाणान्तरावगतिर्भवति? बाढम्, अर्थानुसारि हि तदा प्रमाणमवकल्पते ।

ननु–वेदस्येतदपि कल्पनीयमेव, न; प्रसिद्धकारणत्वात्संविदः, अप्रसिद्धमूलत्वाच्चार्थस्य । वेदेत्येतदपि तावत्पुरुषवचनान्नावगतिर्भवति, विक्षेपस्य सम्भवाच्चित्तानाम् । किमुतार्थे; तद्दर्शयति–(२) "विप्लवते खल्वपि कश्चित्पुरुषकृताद्वचनात्प्रत्यय" इति ।

---

भाष्यस्य व्याचष्टे–किंचेत्यादिना । किंवार्थावग(३)त्यनुमानात्प्रमाणान्तरं शाब्दमित्यवगतिर्भवति ? बाढं भवति । अर्थानुसारि(४)हि तदा कारणभूतमर्थमुपस्थापय(५)च्छाब्दमनुमानात्प्रमाणान्तरमित्यवकल्पते ।

ननु वेदेत्यपि वक्तृबुद्धिः कल्पनीया पौरुषेयाद्वाक्यात् । ततश्च तत्कल्पकतया किमिति प्रमाणान्तरं न भवति ? न; प्रसिद्धं हि कारणं वाक्यस्य वक्तृबुद्धिः। (६)अतस्तत्कल्पना । कार्यतः कारणानुमानम् । अप्रसिद्धं च (७)कारणमर्थः। ततस्तदवगतिर्नानुमानम् । विप्लवते खल्वित्यनेन दूरोत्सारितं पुरुषवचनादर्थनिश्चयं दर्शयति । (८)तथा हि-प्रतारका अन्यथा जानन्तोऽप्यन्यथा वाक्यानि प्रयुञ्जते । तथा प्रमादिनो दुष्टसामग्रीकाश्चान्यवाक्यविवक्षायामन्यदेव वाक्यमुच्चारयन्ति । तेषां वाक्यात् वक्तृबुद्धिरपि निश्चेतुं न शक्यते, दूरेणार्थः । तदाह—वेदेत्येतदपीति । वक्तृवचनान्नार्थवगतिः, विक्षेपस्य प्रतारणाशयप्रमादलक्षणस्य चित्तगस्य सम्भवात् । एतच्चोपलक्षणम्(९)उच्चारणदोषोऽपि द्रष्टव्यः । न तु वेदवचनस्य मिथ्यात्वे किंचन प्रमाणमस्तीत्युक्तम् ।

---

१. शा.भा.पृ.४.पं.५. २. शा.भा.पृ.४.पं.६.

३ अनुमानप्रमाणात् प्रमाणान्तर. इति क. पुस्तके ।

४ अर्थानुसारि ह्यकारण इति क. पु. । ५ शाब्दमिति नास्ति० क. पु० ।

६ अतश्च कल्पना इति क. पु० । ७ मूलमर्थ इति क. पुस्तके ।

८ तथाहीत्यारभ्य 'वाक्यात्' इत्यन्तो ग्रन्थस्त्रुटितः क० पुस्तके ।

९ उच्चारणकारणदोषो द्रष्टव्यः इति ख० पुस्तके ।

किमिदं सामान्यतो दृष्टम्? द्विविधस्यापि निरस्तत्वात्। किमन्यदवशिष्यते येनेदमुच्यते—"ननु सामान्यतो दृष्ट"मिति। सत्यमेवम्? किन्तु विषयान्तरे सामान्यतो दृष्टमनपास्तं मन्यते। विप्लवते खल्वपि कश्चित्पुरुषकृताद्वचना(दित्युक्तम्)। तदान्यथैवार्थोऽन्यथा शब्दाद्विज्ञानम्; तदिदमुपपन्नार्थं भवति। अस्यां किमुपपत्तौ(?) प्रसक्ता खल्वर्थासंस्पर्शिता शब्दस्य—अशब्दत्वात् विप्लुतार्थवदिति। सत्यं यदि विप्लुतौ शब्दादयथार्थत्वम्, अयथार्थस्य विषये शब्दादवगम्ये (स)ति, नायथार्था(त्)। तदिदमुक्तं—(१)"नान्यत्वा"दिति। अथ एवायथार्थत्वे हेतुः शब्दाविषये स्यात्। अथापि शब्दादेव विप्लुवः तथाप्येतदनुमानं नैवोपपद्यते। अदुष्टप्रतिज्ञापनसापेक्षं हेतुवचनं भवति। दुष्टश्चायं पक्षः, संविदः प्रत्यक्षत्वात्। तदिदमुक्तं—(२)"प्रत्यक्षस्तु वेदवचनात् प्रत्यय" इति। प्रतीतिः प्रत्ययः।

ननु च नैव कार्यो धर्मः। कस्तर्हि? गुणः। तथा च केचित् बुद्धिगुणं मन्यन्ते। केचिदात्मगुणम्। तस्मात् 'क्रियायाः प्रवर्त्तकं

---

ननु सामान्यतो दृष्टं प्रमाणमस्तीति भाष्यम्। तदाक्षिपति—किमिदं सामान्यतो दृष्टमिति। द्विविधस्यापि प्रत्ययान्तरापेक्षित्वार्थासंस्पर्शित्वलक्षणस्याप्रामाण्यहेतोर्निरस्तत्वात्। सत्यमेवमिति समाधिः। विषयान्तरे लौकिक(३ वाक्यगम्यात् सिद्धरूपादन्यस्मिन् विषये कार्यरूपे सामान्यतोदृष्टमनपास्तं मन्यते। पूर्वं हि पुरुषकृताद्वचनाद्विप्लवाभिधानाद्वचनादेव विप्लव उक्तः। ततश्च व्यभिचारिणो वचनस्यार्थासंस्पर्शित्वनिबन्धनमप्रामाण्यम्। सत्यं यदीति परिहारः। अत्रायमभिप्रायः—यत्र विप्लवः तत्र यदि शब्दादयथाभूतस्यार्थस्यावगमः स्यात्। किंतु शब्दस्तत्र लिङ्गम्, तेन तत्र तस्य वक्तृ(४)बुद्धिव्यवस्थापकत्वम्। वक्तृबुद्धिमुखेन चार्थावगमः। तेनायथार्थत्वस्य वक्तृबुद्धिर्विषयः, न शब्दः। अथापीत्यादि अभ्युपगम्यवादः।

ननु च नैव कार्यो धर्म इति। अस्यार्थः—यदि कार्यात्मको धर्मः (५)स्यात्

१. शा.भा. पृ.४.पं. ९. २. शा.भा.पृ.४.पं.१२. ३ वाक्यावगतात् इति ख०। ४ पर्यवस्थापकत्वं इति ख०। ५ स्यादिति नास्ति क० पुस्तके।

( ) एतत्कुण्डलान्तर्गताः पाठाः विद्यावाचस्पति.म.म. कुप्पुस्वामिशास्त्रिपादैरुल्लिखिताः।

वचनं, चोदनालक्षणोऽर्थो धर्म इति वचनं च नोपपद्यते, अकार्यत्वाद्धर्मस्य । अतस्तन्निराकरणाय चोदनालक्षणस्तत्रोपसंहारमुखेनोपन्यस्तवान् भाष्यकारः(१)–"तस्माच्छ्रेयस्करो धर्म" इति । एवमपि कथं पुनर्निरासः? शब्दार्थसम्बन्धस्य लोकव्यवहारगम्यत्वात् । कार्ये चार्थे धर्मशब्दं लौकिकाः प्रयुञ्जते । "यो यागमनुतिष्ठति"इत्येवमादिना प्रदर्शिते अर्थशब्दस्यान्वयप्रयोजनप्रदर्शनार्थं भाष्यकारेण(२)"उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्चे"ति । पुनरपि च प्रश्नपूर्वकमिदमुक्तं (३)"कोऽर्थः? यो निःश्रेयसाय ज्योतिष्टोमादिः। कोऽनर्थः? यः प्रत्यवायाय श्येनादि"रिति निःश्रेयसप्रत्यवायलक्षणं धर्माधर्मत्वमुक्तम् । एवञ्चोपदर्शयतोभयं चोदनालक्षणमित्युक्तं भवति। तत्र यो निःश्रेयसाय तस्यैव

तदा कार्यप्रतिपादकचोदनालक्षणो धर्मः स्यात् । यावता कार्यात्मको धर्मो न भवति। कस्तर्हि? बुद्धिगुणः आत्मगुणो वा विवक्षितः। (४)अतः कथं चोदनालक्षणो धर्मः स्यादिति । श्रेयस्करो धर्म इत्युक्ते कथं कार्यस्य धर्मत्वम्? अपूर्वाधिकरणे तस्यैव श्रेयस्करत्वस्य(५)स्थापितत्वात् । अत्र च पक्षे यागाद्यनुष्ठातरि धार्मिकशब्दप्रयोगो नियोगानुष्ठाननिमित्तकः । तथा ह्यनधिकृत यागाद्यानुष्ठातर्यपि धार्मिकशब्दो न प्रयुज्यते नियोगसिद्धिमन्तरेण । नियोगसिद्धिश्च चोदितयागाद्यनुष्ठानसमधिगम्येति तेनाशयेनोक्तम्—यो यागमिति । सूत्रस्याप्येवं योजना—चोदनालक्षणः कार्यरूपो वेदार्थः नेन्द्रियादिलक्षणः क्रियाकारकसंसर्गादिः । तत्रार्थो यो निःश्रेयसफलः स धर्मः, नानर्थः श्येनादिनियोगः ॥

उभयमिह चोदनयेत्यादि भाष्यमर्थशब्दस्यान्वयप्रयोजनप्रदर्शनार्थम् । (६)पुनरपि कोऽर्थ इति प्रश्नं कृत्वा यो निःश्रेयसायेत्युत्तरमुक्तम्। तथा कोऽनर्थ इति प्रश्ने पुनरुत्तरमुक्तं यः प्रत्यवायायेति । अनेन च ग्रन्थेन निःश्रेयसप्रत्यवायहेतुत्वेन धर्माधर्मत्वमुक्तम् । एवं चोपदर्शयता भाष्यकारेणोभयमप्यर्थानर्थत्वेन चोदनालक्षणमित्युक्तम् । इद तर्हि तथा च सत्ययुक्तं यदुक्तं तत्र यो निःश्रेयसाय तस्यैव धर्मता कथं नाम स्यात्?

१. शा.भा.४.१३. २. शा.भा.४.२१.

३. शा.भा.पृ.४.२१. ४ अतःइति नास्ति क० पु० ।

५ ज्ञापितत्वात् इति क० पु० । ६ पुनरपि इति नास्ति ख० पुस्तके ।

प्रत्यवायहेतोर्मा भूदिति। इदं तर्ह्ययुक्तं(१) "कथं पुनरनर्थः कर्तव्यतयोपदिश्यत" इति । कथं कर्तव्यतयाऽनुपदिश्यमानोऽर्थश्चोदनालक्षणो भवति? कथं वा चोदनालक्षणस्य सतो धर्मत्वनिवृत्त्यर्थमर्थशब्दान्वय उपपद्यते? पुनरपि च स्पष्टीकरोति-(२) "नैव श्येनादयः कर्तव्यतया विज्ञायन्त" इत्युत्तरेण। कर्तव्यतया च नोपदिश्यते चोदनालक्षणश्चेति संकटमिवोपलक्ष्यते। यदपि च कथं पुनरसावनर्थ इति प्रश्नमुल्लिख्य "हिंसा हि सा सा च प्रतिषिद्धे"त्युक्तं तदपि पूर्वापरविरुद्धम् । प्रत्यवायलक्षणमनर्थत्वमुक्त्वा पुनः प्रतिषेधलक्षणमुक्तवान् तस्मादसामञ्जस्यम्। अथ प्रतिषेधप्रत्यवाययोरप्यविरोधितोच्यते, प्रत्यवायस्य प्रतिषेधहेतुत्वात्, तदयुक्तं, नञर्थस्यानन्यार्थत्वात्। नञर्थपर्यवसाय्येव प्रतिषेधविधिः न पुनस्तदर्थस्यान्यार्थतामवगमयितुं क्षमः। अत्राह—अनिरूपित-

प्रत्यवायहेतोर्मा भूदिति। इदं तर्हीति पूर्वेण सहैकग्रन्थः। कथं पुनरनर्थः कर्तव्यतयोपदिश्यत इति भाष्यम्। (३)तद्व्याचष्टे—कथं कर्तव्यतयानुपदिश्यमानोऽर्थश्चोदनालक्षणो भवति? कथं वा चोदनालक्षणस्य सतो धर्मत्वनिवृत्त्यर्थमर्थशब्दान्वय उपपद्यते?। अत्रायमभिप्रायः—यत्किल चोदनालक्षणं तत्कर्त्तव्यतयोपदिश्यते। यच्च कर्त्तव्यतयोपदिश्यते न तदनर्थः। कर्त्तव्यतावगमादेवानर्थत्वनिवृत्तेः। अथोच्येत—अनर्थ एव श्येनादिनियोगः; न तर्हि कर्त्तव्यतयोपदिश्यते। यच्च कर्त्तव्यतया नोपदिश्यते न तत् चोदनालक्षणम्। अतश्चोदनालक्षणनिवृत्त्यर्थमर्थग्रहण(४)मिति। तन्नोपपद्यते। अचोदनालक्षणत्वेनैव व्यावृत्तिसिद्धेः। एतच्चाक्षेपानुगुणमिति कृत्वा व्याख्यातम्। यदप्यत्रोत्तरं तेनापि प्रत्युत चोद्यमेव प्रकटीकृतम्। तदाह—पुनरपि च स्पष्टीकरोतीति। नञर्थस्यानन्यार्थत्वादिति । न हि निषेधेन नञर्थस्याकरणे प्रत्यवायपरिहारार्थता। यदि नञ्विधिर्नञर्थस्य प्रत्यवायपरिहारार्थतां गमयेत् ततो गम्येताकरणे प्रत्यवाय इति। तदा चैतदपि सिध्येत्—प्रतिषिद्धं प्रत्यवायायेति। न त्वेवमस्ति। आक्षेपमिदानीं परिहरति—(५)अत्राहानिरूपितनियोगव्यापारस्येदं चोद्यमित्यादिना। अयमभिप्रायः—यदि

---

१. शा.भा.पृ.४.पं.२२. २. शा.भा.पृ.४.पं.२५.

३ अनुभाष्य व्याचष्टे इति ख० पु० ४ इति नोपपद्यते इति ख० पुस्तके।

५. अत्राहेत्यादिना इति क० पुस्तके।

नियोगव्यापारस्येदं चोद्यम्—कर्तव्यताविषयो नियोगः न पुनः कामाधिकारेऽपि नियोगो यागस्य कर्त्तव्यतां वदेत् स च यागः फलसाधनभूतोऽकर्त्तव्ये फले न कर्त्तव्यः स्यादिति फलस्याप्यर्था-न्नियोग एव कर्त्तव्यतां वदेत् । ततश्च फलेऽपि विध्याक्षिप्तौपादानिकी प्रवृत्तिरिति श्येनफलं हिंसा "न हिंस्या"दित्यनेन प्रतिषेद्धुं न शक्यते, प्रतिषेधस्य पुरुषार्थत्वात् । औपादानिकप्रवृत्तिनिषेधे च क्रत्वर्थप्रसक्तेः, "नानृतं वदे"दितिवत् । तथाऽप्रतिषिद्धपुरुषाभिलषितशत्रुक्षयफ-लत्वाच्छ्येनादिनियोगो नानर्थः (१)स्यात् । स हि नियोगोऽनर्थः यः प्रतिषिद्धफलः । न च कामाधिकारे नियोगो यागस्य कर्त्तव्यतां वदति, फलत एव कर्त्तव्यतासिद्धेः । यद्यपि नियोगः कर्त्तव्यतया प्रती-यते तत्साधनतया च यागः, तथापि कामाधिकारेषु काम्यमानफल-सिद्धिपर्यन्तत्वाच्छास्त्रस्य न नियोग एव स्वसिद्ध्यर्थं पुरुषं प्रयुङ्क्ते । रागाक्षिप्तप्रवृत्तित्वात् पुरुषाणां फलत एव प्रवृत्तिसिद्धेः । तथा च यागे फले च प्रवृत्तिर्नौपादानिकीति तत्प्रतिषेधो न क्रत्वर्थः स्यादिति श्येनफलस्यापि प्रतिषेधो नानुपपन्न इति निषिद्धफलत्वादनर्थः श्येना-दिनियोगश्चोदनालक्षणो न धर्म इति न किंचिदनुपपन्नमिति ।

भाष्याक्षरयोजना—उभयमिह चोदनया लक्ष्यते—अर्थोऽनर्थश्चेति । अर्थो ऽनिषिद्धफलः, अनर्थश्च निषिद्धफलः । कोऽर्थः ? यो निःश्रेयसायानिषि-द्धफलो ज्योतिष्टोमादिः । कोऽनर्थः ? यः प्रत्यवायाय(२)निषिद्धफलः श्येनो वज्र इषुरित्येवमादिः । तत्रानर्थो धर्म उक्तो मा भूदित्येवमर्थमर्थग्रहणम् । कथं पुनरसावनर्थ इति औपादानिकीं फले प्रवृत्तिं मन्वानस्य चोद्यम् । हिंसा हि सा, सा च प्रतिषिद्धेति । कामिनां(३)स्वतः फले प्रवृत्तत्वात्तदर्थितयैव कर्माणि प्रवृत्तेः "न हिंस्या"दिति प्रतिषेधाविरोधात् । कथं पुनरनर्थः कर्त्तव्य-तयोपदिश्यत इति पूर्वोक्तमेव चोद्याभिप्रायं विवृणोति । उच्यते नैव श्येनादयः (४)कर्त्तव्यतया विज्ञायन्त इति । नैव विधिना श्येनादयः (५)कर्त्तव्या इति प्रतिपाद्यन्ते, फलार्थितयैव प्रवृत्तेः, यो हि हिंसितुमिच्छेत्तस्यायमभ्युपाय इति हि तेषामुपदेश इति । फले स्वयं प्रवृत्तेस्तत्तदिच्छयैव कर्मण्यपि प्रवर्त्तते इति भावः । एतदेव स्फुटीकरोति—श्येनेनाभिचरन्यजेतेति हि समामनन्ति नाभिचरि-तव्यमिति । अभिचारे स्वतः प्रवृत्तिं दर्शयति ।

---

१. स्यादिति नास्ति क० पुस्तके । २. निषिद्धाय इति ख. पुस्तके ।
३. स्वयं इति क० पु० । ४ कर्तव्या विज्ञायन्ते इति क० पुस्तके ।
५. कर्तव्यतया इति ख पु० ।

कर्तव्यतामाह । कथं तर्हि कार्येऽर्थे प्रामाण्यं वेदस्येत्युक्तम् ? युक्तं तद्विषयत्वान्नियोगस्य । कोऽयं विषयविषयिभावः ? यस्मिन्नर्थे पुरुषो नियुज्यते स विषयः । तस्मान्नैव विधिः कर्तव्यतामाह । विषयतया तूपादत्ते । कस्मात् ? यद्यदुपादीयते तत्तद्विधेयमिति तन्त्रव्यवहारः । यत्तूपादानहेतुतां प्रतिपद्यते तदधिकृतौ कारणम् । तस्मादधिकार-

टीकार्थस्तु-अनिरूपितनियोगव्यापारस्य न निरूपितः उपादानलक्षणो नियोगव्यापारो येन तस्येदं चोद्यम् । यागकर्त्तव्यतानुष्ठानविषयो (१)नियोगः । तेन नियोगः साध्यते । न तु नियोगो यागस्यानुष्ठानं ज्ञापयति । कथं तर्हि कार्येऽर्थे वेदस्य प्रामाण्यमिति । यदि यागादेः कर्त्तव्यता न ज्ञाप्यते कथं वा कार्येऽर्थे वेदस्य प्रामाण्यम् ? (२)कार्याप्रतिपादकत्वादिति भावः। युक्तं तद्विषयत्वान्नियोगस्येति । अत्रेदमभिप्रेतम्—यद्यपि यागादेः कर्तव्यता न ज्ञाप्यते तथापि यागविषयो नियोगः कर्तव्यतया प्रतिपाद्यत इति कार्यप्रतिपादकत्वाद्युक्तं (३)कार्यं प्रति प्रामाण्यम । कोऽयं विषयविषयिभाव इति पृच्छतोऽयमाशयः—कर्मणि प्रेरकत्वान्नियोगस्य कर्मणो विषयत्वं नियोगस्य विषयित्वम् । तथा च विधित एव कर्मणि प्रवृत्तिरिति । यस्मिन्नर्थे पुरुषो नियुज्यते स विषय इति नैव कर्मणि प्रेरकतया विषयिभावः । किं तर्हि ? यत्र कर्मणि पुरुषो नियुज्यते कार्यं बोध्यते इति । कार्यबोधनमेव हि पुरुषस्य नियोजनम् । एतदुक्तं भवति—कर्मणि यागादौ कार्यभूतो नियोगः प्रतीयते, न पुनः कर्मण्येव प्रेरयति । एतच्चापूर्वाधिकरणे वक्ष्यामः । तस्मान्नैव विधिः कर्त्तव्यतामाहेति । (४)साधितार्थमुपसंहरति विषयतया तूपादत्ते स्वीकरोति । यतश्च विधिर्न कर्त्तव्यतां कर्मणोऽवबोधयति तस्माद्यद्यदुपादीयते तत्तद्विधेयमिति तन्त्रे व्यवहारः, न पुनर्यद्यत्कर्त्तव्यतया ज्ञाप्यते तत्तद्विधेयमिति मीमांसासिद्धांते व्यवहारः ।

ननु मा भवतु यागकर्त्तव्यताज्ञापनद्वारेणाभिचारे वैधी प्रवृत्तिः । स्वत एव तत्र किमिति वैधमुपादानं न भवति । तत्राह—यत्तूपादानहेतुतां प्रतिपद्यते तदधिकृतौ (५)कारणमिति । अस्यार्थः—अभिचारस्तावदधिकारिविशेषणतया अधिकारे कारणम् । (६)यच्चोपादाने हेतुः

१. नियोगस्य इति ख पुस्तके । २. कार्याप्रतिपादकत्वात् इति ख० पु० ।

३. कार्येऽर्थे वेदस्य प्रामाण्यम् इति ख पु० ।

४ साधितमर्थं, इति० ख० पु० । ५. करणमिति ख० पु० ।

६. यच्चोपादाने हेतुभूतं तदधिकारे कारणं भवति इत्यधिकं ख० पुस्तके ।

निमित्तत्वमङ्गीकृत्यैतदुक्तम्–"हिंसा हि सा सा च प्रतिषिद्धे" ति। उपादानगतो हि प्रतिषेधः क्रत्वर्थः स्यान्नाधिकारगतः। 'न हिंस्याद्भूतानी"ति चाधिकारगतोऽयं प्रतिषेधः पुरुषार्थश्च। तस्माद्भिचारस्यानर्थतां प्रतिपादयितुं क्षमो नाग्नीषोमीयादेः, क्रत्वर्थत्वात्।

अथ कस्मान्नोभयार्थः प्रतिषेधोऽयम्–'न हिंस्याद्भूतानी'ति? न ह्येकस्य विधेः प्रयोक्तृत्वाप्रयोक्तृत्वे भवतः। अथ क्रत्वर्थ एवायं कस्मान्न भवति? प्रयोक्तृत्वाप्रयोक्तृत्वयोः प्रयोक्तृत्वं

---

नासावुपादेयः। तेनाभिचारे नौपादानिकी प्रवृत्तिरिति सिद्धम्। यत एवमधिकारनिमित्तभूतं वैधमुपादानं नास्ति अत एव 'न हिंस्या' दिति प्रतिषेधोऽवतरति। तस्मादधिकारनिमित्तमव्यभिचारमभिप्रेत्यै· (१)तदुक्तम्—हिंसा हि सा सा च प्रतिषिद्धेति।

नन्वेवमपि किमिति क्रत्वर्थता प्रतिषेधस्य न भवति? तत्राह— उपादानगतो हि प्रतिषेधः क्रत्वर्थः स्यात्। प्रतिषेध्यायाः प्रवृत्तेः क्रतुप्रवृत्त्यधीनत्वेन क्रतुसम्बन्धात्। नाधिकारगतः, स्वतन्त्रत्वात्तत्र प्रवृत्तेः।

नन्वेवमग्नीषोमीयादिहिंसापि किमिति न प्रतिषिध्यते? ततश्च प्रतिषिद्धा(२)नर्थफलानुसम्बन्धित्वाद्यथानर्थतया श्येनादेर्न धर्मत्वं एवं प्रतिषिद्धाङ्गानुबन्धित्वाज्ज्योतिष्टोमादेरपि स्यात्, तत्राह—न हिंस्याद्भूतानीति चाधिकारगतोऽयं(३) प्रतिषेधो नोपादानगतः। औपादानिकी चाङ्गेषु प्रवृत्तिः। तत्र स्वयं प्रागप्रवृत्तेः। (४)फले हि स्वतः प्रवृत्तिः। फलार्थितया च प्रधाने। प्रधानोपकारकतया चाङ्गेषु। प्रधानप्रवृत्त्यैवाङ्गेषु प्रवृत्तिरिति वक्ष्यते। तस्मात्क्रतुसम्बन्धात्प्रतिषेधोऽपि क्रत्वर्थः। पुरुषार्थश्चायं प्रतिषेधः। तस्मादभिचारस्यानर्थतां ज्ञापयितुं क्षमो नाग्नीषोमीयादेः, क्रत्वर्थत्वात्तस्य।

अथ कस्मान्नोभयार्थः क्रतुपुरुषार्थः प्रतिषेधो यन्न हिंस्यात सर्वा भूतानीति। तत्रोत्तरम्—न ह्येकस्य विधेः पुरुषार्थत्वपक्षे प्रयोजकत्वं क्रत्वर्थत्वपक्षे त्वप्रयोजकत्वं संभवति, विरोधात्।

अथ क्रत्वर्थ एवायं प्रतिषेधः प्रयुक्तिलाघवात्कस्मान्न भवति?

---

१. अङ्गीकृत्य इति ख० पुस्तके। २. अनर्थासम्बन्धित्वात् इति ख० पुस्तके।

३. स्वतन्त्रप्रवृत्तिगतोऽयं इत्यधिकं ख. पुस्तके।

४. फले हि स्वतः प्रवृत्तः फलार्थिनः। या च प्रधाने प्रधानोपकाराय चाङ्गेषु इति क० पुस्तके।

श्रौतम्, अनपेक्षावगमात्। अप्रयोक्तृत्वं तु वाक्यान्तरपर्यालोचनयाऽवगतम्। न च 'न हिंस्याद्भूतानी'ति वाक्यान्तरावगतिर्भवति, अनारभ्यविधानात्। तस्मादधिकारावगत एवायं प्रतिषेधः। भवति च चोदनालक्षणः तद्विषयत्वात् श्येनविधेः। तस्माद् "भयमिह चोदनया लक्ष्यत" इत्येवमाद्युपपन्नार्थं भाष्यम्।

(१)"नन्वशक्तमिदं सूत्र"मिति लौकिकवैदिकवाक्ययोर्विवेकप्रदर्शनार्थम्। 'अथ वा अर्थस्य सत' इति यथावाक्यमप्येकार्थत्वं सम्भवतीति प्रदर्शयितुम्॥

इति द्वितीयं धर्मलक्षणाधिकरणम्॥

---

(२)अश्रोत्तरम्—प्रयोजकत्वाप्रयोजकत्वयोः प्रयोजकत्वं श्रौतं अनपेक्षावगतेः। प्रथमं हि लिङादयः कार्यं बोधयन्ति। तच्चानुष्ठापकम्। (३)अप्रयोजकत्वं तु वाक्यान्तरपर्यालोचनयाऽवगम्यम्। सन्निहितेऽधिकारविधौ वाक्यान्तरगता लिङादयश्चानुवादका एव। न च 'न हिंस्यात्सर्वा भूतानी'ति वाक्यान्तरावगतिरस्ति, अनारभ्य विधानात्। तस्मादधिकारगत-एवायं प्रतिषेधो नोपादानगतः। भवति च चोदनालक्षणः श्येनविनियोगः। तद्विषयत्वात्प्रमेयत्वाच्छ्येनविधेः। श्येनयागश्च प्रतिषिद्धाभिचारफलत्वादनर्थक इति सिद्धं प्रत्युदाहरणम्। तस्मादुभयमिह चोदनया लक्ष्यत इत्युपपन्नार्थं भाष्यम्।

नन्वशक्तमित्येवमादि भाष्ये वाक्यभेददोषेण सूत्रमाक्षिपति। तच्चानुपपन्नम्, पौरुषेयवचसां प्रमाणान्तरप्रतीतार्थप्रत्यायनपरत्वेन प्रमाणान्तरवशाद्वाक्यभेदादयो दोषा एव न भवन्तीति। तदिदं भाष्ये समर्थ्यते—नन्वशक्तमिदं सूत्रमिति। लौकिकवैदिकवाक्ययो(४)र्विवेकप्रदर्शनार्थमिति। अस्यार्थः—यदेवं लौकिकवैदिकयोर्वाक्ययोः प्रमाणान्तरापेक्षनिरपेक्षत्वात्प्रमाणान्तरवशेन स्वातन्त्र्येण चार्थप्रत्यायकत्वं तदेव चोद्यपूर्वकं भाष्येणोच्यत इति। अथवाऽर्थस्य सतश्चोदनालक्षणस्येति भाष्यमेकवाक्यत्वमाह। तच्चानुपपन्नम्। अस्मिन्नपि पक्षे विशिष्टानुवादलक्षणवाक्यभेदापत्तेः।

---

१. शा. भा. ४. २५. २. उत्तरम् इत्येव क. पु.

३. अप्रयोजकम्। ननु वाक्यान्तर. इति क. पु.

४. वाक्ययोः इति नास्ति क० पुस्तके।

अथ तृतीयं धर्मलक्षणपरीक्षाधिकरणम् ॥

## तस्य निमित्तपरीष्टिः ॥ ३ ॥

'तस्य निमित्तपरीष्टि'रिति हेत्वभिधानावसरः कथ्यते । कथं पुनः कार्येऽर्थे चोदनैव निमित्तम् ? अन्यस्य प्रत्यक्षादेरसम्भवात् । कथमसम्भवः ?

इति निमित्तपरीक्षाधिकरणम् ॥

अथ प्रत्यक्षलक्षणाधिकरणम् ॥

## सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनि-

---

अत्र टीकाकारः प्रतिसमाधत्ते—अथ वार्थस्य सत इति यथावाक्यमप्येकार्थता सम्भवतीति प्रदर्शयितुम् । अत्रायमभिप्रायः—विध्यावृत्तिलक्षणो वाक्यभेदो नास्ति । अन्वयभेदमात्रं तु भवत्येवेति ।

इति द्वितीयं धर्मलक्षणाधिकरणम् ॥

अथ तृतीयं धर्मलक्षणपरीक्षाधिकरणम् ॥

## तस्य निमित्तपरीष्टिः ॥ ३ ॥

तस्य निमित्तपरीष्टिरिति हेत्वभिधानावसरः कथ्यत इति । अनेन सूत्रं तात्पर्यतो व्याचष्टे । चोदनालक्षणसूत्रेण श्रुत्यर्थाभ्यां वेदार्थस्वरूपं तत्र च प्रमाणं प्रतिज्ञातम् । तत्र किं स्वरूपं तावत् भेदाभेदरूपेण कथ्यताम् ? उत प्रमाणप्रतिज्ञायां हेतुरिति संशये प्रधानत्वात् स्वरूपस्य तदेव भेदाभेदाभ्यां कथनीयमिति प्राप्ते भेदाभेद(१)निर्णयस्यानपेक्षत्वसव्यपेक्षत्वात् प्रामाण्ये हेत्वनपेक्षत्वमधुना कथनीयमिति सूत्रेण कथ्यते । तथा च भाष्यम्-इदानीं तस्य निमित्तं परीक्षिष्यामह इति । तस्मादनपेक्षत्वरूपप्रामाण्यहेत्वभिधानावसरकथनं सूत्रेण क्रियत इति ।

इति तृतीयं निमित्तपरीक्षाधिकरणम् ॥

अथ चतुर्थं प्रत्यक्षादिलक्षणाधिकरणम् ॥

## सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनि-

---

१. नियमस्य. इति क० पु०

मित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

अथ कस्मादनुमानादेरनिमित्तत्वम्? अनुमानादीनां हि निमित्तग्रहणपूर्वकं स्वार्थे प्रामाण्यम्। निमित्तं चात्र प्रत्यक्षग्राह्यमेव वर्णादि। तस्मात्तदप्यप्रमाणम्।

ननु च शाब्दं प्रमाणमात्रं प्रमाणान्तरसापेक्षमेव लौकिकवाक्यव्यवहार उपलभ्यते। सत्यं प्रमाणान्तरविषयमेवोपलभ्यते। न तु

---

मित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

सत्सम्प्रयोगे पुरुषस्येंद्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादित्यनेन वर्त्तमानोपलम्भनत्वात् प्रत्यक्षस्य कार्यस्य चावर्त्तमानत्वादनिमित्तत्वमुक्तम्। अत एव पृच्छति—अथ कस्मादनुमानादेरनिमित्तत्वमिति। अयमभिप्रायः—यद्यपि वर्त्तमानैकविषयत्वात्प्रत्यक्षमनिमित्तं तथाप्यनुमानादीनामवर्त्तमानविषयाणामपि कथमनिमित्तत्वमिति। अनुमानादीनां हि निमित्तग्रहणपूर्वकमिति। अयमाशयः—लिङ्गसादृश्यादीनां निमित्तानां ग्रहणे सति स्वार्थेऽनुमेयादावनुमानादीनि प्रवर्त्तन्ते। कार्ये चार्थे वर्णादि निमित्तं, नान्यत; तस्य प्रत्यक्षप्रतीतत्वादन्यस्य चाप्रतीयमानत्वात्। वर्णादेश्च न लिङ्गत्वादिकमुपपद्यते। तस्माल्लिङ्गादिग्रहणमन्तरेण प्रतीयमानत्वान्न कार्येऽर्थेऽनुमानादेरपि निमित्तत्वम्। भाष्यं चैवं योज्यम्—प्रत्यक्षवर्णादिद्वारत्वात् कार्यस्य तस्य च लिङ्गत्वाद्यनुपपत्तेरनुमानादीनामपि कार्येऽनिमित्तत्वमिति।

ननु च शाब्दं प्रमाणमात्रं प्रमाणान्तरसापेक्षमेव लौकिकव्यवहार उपलभ्यत इति। पौरुषेये हि वाक्ये प्रमाणान्तरापेक्षमेव शाब्दम्। एतदेव वाक्यस्य पौरुषेयत्वं यत्प्रमाणान्तरापेक्षस्वार्थप्रतीतार्थप्रत्यायनपरतया प्रयोगः, न वर्णादिकार्यता। अतो लोकावगतसामर्थ्यश्च शब्दो वेदेऽर्थबोधकः। तेन वेदेऽपि शब्देन प्रमाणान्तरसापेक्षमेव कार्यं प्रत्याय्यते। न च तत्प्रमाणान्तरमस्तीत्यभाव एव कार्यस्य प्रसक्तः। सत्यं प्रमाणान्तरविषयमुपलभ्यते न तु प्रमाणान्तरसापेक्षम्। स्वार्थे ह्यौत्पत्तिकी शब्दशक्तिः। अस्यार्थः—प्रमाणान्तरप्रतीतमर्थं शब्दो ब्रवीति स्वरूपेणैव, न तु प्रमाणान्तरप्रतीतत्वेनैव। एतदुक्तं भवति—यत् वस्तुतः प्रमाणान्तरप्रतीतं तदाह, न तु प्रमाणान्तरप्रतीतत्वमेवाहेति। यस्मात् स्वार्थ एव स्वाभाविकी शब्दस्य शक्तिः। तेनानपेक्षार्थमात्रप्रत्यायकत्वादसत्यपि

प्रमाणान्तरसापेक्षम् । स्वार्थे ह्यौत्पत्तिकी शब्दशक्तिः । तदुक्तम्--

इति प्रत्यक्षसूत्रम् ॥

---

प्रमाणान्तरे शब्द एव कार्येऽर्थे प्रमाणमिति ।

ननु-कथं वृद्धव्यवहाराप्रसिद्धं स्वार्थमात्रे शब्दस्य सामर्थ्यम् ? । अत्र ब्रूमः—अत्र स्वार्थप्रतिपादकत्वे स्वाभाविकेऽपि प्रमाणान्तरप्रतीतार्थपरतया प्रयुक्तत्वात् सापेक्षार्थप्रतिपादकत्वमुपपद्यते । तथाभूतस्य च लिङ्गत्वमपि घटते । प्रसिद्धकारणत्वात् प्रतीतिविषयीभूतस्यार्थस्य । वाक्यप्रयोगो हि पुरुषाणां प्रतीतार्थपूर्वकः । सत्यमेवमेतत्, तथापि लोके स्वातन्त्र्यमदृष्टपूर्वं न शक्यते कल्पयितुम् । उच्यते—लिङादिशब्दस्तावत्प्रमाणान्तराविषयं कार्यमर्थमवबोधयति । शब्दान्तराण्यपि च कार्यस्यानन्यार्थत्वात् तत्परानेव स्वार्थानभिदधति । तदन्वयिनश्च तेऽप्यर्थाः प्रमाणान्तरस्य विषयभूताः । तेनार्थस्वभावालोचनया(१)परं न सापेक्षता ।

ननु च-लोके प्रमाणान्तरप्रतीतार्थविषयत्वात् प्रयोगस्य कथ(२)मनन्यगोचरे कार्ये लिङादिप्रयोगः ? सत्यमेवं पौरुषेये । किन्तु अपौरुषेये वेदे कार्याभिधायकत्वं तावल्लिङादेरवसीयते, न त्वप्रवृत्तिः । (३)[नत्वपेक्षितोपायतैव] । न चापौरुषेयत्वाच्छक्यं वक्तुम्-कथमनन्यगोचरमर्थमाहेति ।

ननु चा-नन्यगोचरे कथं सम्बन्धग्रहः ? । अगृहीतसम्बन्धस्य च कथमभिधायकत्वम् ? । अत्रोच्यते—लिङादियुक्तवाक्यश्रवणानन्तरं तदुभावभाविनीं प्रयोज्यवृद्धस्य प्रतिपत्तिं प्रवृत्त्यानुमाय पार्श्वस्थः प्रवृत्तिहेतुभूतोर्थोऽनेनास्माच्छब्दा(४)त्प्रतीत इति कल्पयति । (५)प्रवृत्तिहेतुभावश्च कार्यावगतेर्दृष्टः । सर्वो हि यावत् ममेदं कार्यमिति नावबुध्यते तावन्न प्रवर्त्तते ।

नन्वपेक्षितोपायावगमात् प्रवृत्तिः । मैवम्; अपेक्षितोपायोऽपि यावत्कार्यतया नावसीयते तावन्न(६)प्रवर्तते । नन्वपेक्षितोपायतैव कार्यता । न; कार्यता कृतिसाध्यता । (७)उपायता तु साधनता । अन्या

---

१. तावत् इति. ख० पु० २. अन्यागोचर. इति. क० पु०

३. [ ] एतच्चिह्नान्तर्गतो भागः ख० पुस्तके नास्ति ।

४. प्रतीयत इति. ख०पु० ५. प्रतिपत्तिहे. इति. क० पु०

६. प्रवृत्तिः इति. क० पु० ७. अपेक्षितोपायता इति. ख० पु०

अथ पञ्चमं शब्दार्थसम्बन्धनित्यत्वाधिकरणम् ॥

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

(१)"वृत्तिकारस्त्वन्यथेमं ग्रन्थं वर्णयांचकार" इति व्याख्यानान्तरोपन्यासः कस्मै प्रयोजनाय? यदि तावद्दूषणाभिप्रायः, तदयुक्तम्? सम्यगर्थाभिधानात्। उपरितनस्य सूत्रत्रयस्यार्थान्तर·

---

हि साधनता, अन्या साध्यता । किन्तु लोके श्रेयःसाधनतया कार्यावगमः । तेन (२)च रूपेण कार्याभिधायका लिङादयः । यदि परं पौरुषेये वाक्ये सापेक्षकार्यावबोधकत्वं प्रमाणान्तरावगम्या च श्रेयःसाधनभूतायाः क्रियाया एव कार्यता । तेन लोके क्रियैव कार्यतया शब्देनाभिधीयते । वेदे तु स्वर्गकामपदपर्यालोचनया स्वर्गसाधनानुगुणकालान्तरस्थायिकार्याभिधानसामर्थ्यमवधार्यते । न च तत्प्रमाणान्तरावगम्यमिति कार्यार्थतैवानपेक्षत्वम् । न च प्रमाणान्तरावगम्यमाना कार्यार्थतैव प्रतीयमाना त्यागमर्हति । अनपेक्षितार्थाभिधायकत्वेऽपि लोके सापेक्षत्वोपपत्तेः । नन्वेवं तर्हि वृद्धव्यवहारप्रसिद्धार्थग्रहणं वेदे न स्यात् । नैवम्; व्यवहारप्रसिद्ध एवार्थः । स तु प्रमाणान्तरनिरपेक्ष इति स्थितम् ॥

इति प्रत्यक्षलक्षणाधिकरणम् ॥

अथ शब्दार्थसम्बन्धनित्यत्वाधिकरणम् ॥

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति । वृत्तिकारस्तु—यदि तावद्दूषणाभिप्रायमिति । यदि परमतं दुष्टमित्यभिप्रेत्योपन्यासः सोऽयुक्तः । सूत्रत्रयस्यापि सम्यगर्थत्वात् । उपयोग्यर्थान्तरवर्णनार्थत्वेऽपि वृत्तिकार

---

१. शा. भा. ६–९. २. चरूपेण इति नास्ति क० पु०

प्रदर्शनार्थमिति चेत्, तत्रापि वृत्तिकारग्रहणमयुक्तम् । अर्थान्तरकथनेन वा विना किं न सिध्यति ? उच्यते-द्वयमप्यस्ति दूषणमर्थान्तरकथनञ्च । किमत्र दूषितम् ? निमित्तपरीक्षणं न कर्तव्यमित्येतत्तावदयुक्तम् । नञोऽश्रुतत्वात्, अस्त्यर्थस्य नित्यप्राप्तेः ।

यदपि हेत्वभिधानं-प्रसिद्धानि प्रमाणानीति, तदप्ययुक्तम्, विप्रतिपत्तिदर्शनात् । स्वयं चोक्तं-ननु-व्यभिचरति प्रत्यक्षमिति । निमित्तपरीक्षणेन चाव्यभिचारितोक्ता । सूत्रकारेण च तदेव प्रतिज्ञातं परीक्ष्यतया । कथमत्र नञोऽध्याहार उपपद्यते ? वक्तव्यं च निरालम्बनतानिराकरणार्थम् । तच्च नोक्तं वृत्तिकारेण । तस्माद्दूषणम् । वक्तव्यं पुनः किमन्यदर्थान्तरम् ? उच्यते-पूर्वोक्तस्य

---

ग्रहणानर्थक्यम् । अस्याप्यर्थस्य स्वाभिप्रेतत्वात् । अर्थान्तरकथनस्याप्युपयोगो न दृश्यते । उच्यते—द्वयमप्यस्तीति । वृत्तिकारग्रहणं परमतत्वप्रदर्शनार्थम् । निमित्तपरीक्षानिषेधस्तावदयुक्तः । सूत्रे नञोऽश्रुतत्वात्। क्रियापदान्तराश्रवणे चास्त्यर्थस्य नित्यप्राप्तेः ।

योऽपि हेतुः प्रमाणानां सिद्धत्वं नाम(१)तस्याप्यसिद्धेः । वादिनां प्रमाणसंख्या(२)स्वरूपविषयादिषु विवादात् । केचिदेकं द्वे त्रीणि चत्वारि पञ्च षट् चेति संख्याविवादः । स्वरूपविवादस्तु(३)"कल्पनापोढमभ्रान्तं प्रत्यक्ष"मित्यादि विषयविवादः । सामान्यमेवानुमानस्य विषय इत्येवंविधः । स्वयं चोक्तं-ननु व्यभिचरति प्रत्यक्षमिति । तेन प्रमाणान्यपि व्यभिचरन्तीति विप्रतिपत्तिरस्ति । निमित्तपरीक्षणेन चाव्यभिचारितोक्तेति । सिद्धान्तेऽपि यदव्यभिचारित्वमुक्तं तत्परीक्षां कृत्वैव । तेन परीक्षानिषेधस्त्वानुमानविरुद्धः । सूत्रकारेण च तदेव प्रतिज्ञातं परीक्ष्यतया चोदनालक्षणसूत्रेण कार्येऽर्थे प्रमाणं चोदनेति प्रतिज्ञातम् । तेन प्रमाणमेव परीक्ष्यतया प्रतिज्ञातम् । अन्यथा लोकप्रसिद्धत्वात् किं प्रमाणप्रतिज्ञया । सूत्रकारस्य च प्रमाणप्रतिज्ञाप्याऽऽर्थी संमता । कार्यो धर्म इति सिद्धे चोदनालक्षणग्रहणात् प्रामाण्यहेत्वाभिधानाच्च । वक्तव्यं च निमित्तपरीक्षणम् । अन्यथा प्रत्यक्षस्य निमित्तपरीक्षणेनाव्यभिचारित्वेऽप्रदर्शिते निरालम्बनता ज्ञानानामापद्येत । वक्तव्यं पुनः किमन्यदर्थान्तरम् । किम-

---

१. सोप्यसिद्धः इति. ख० पु० २. स्वरूपादिषु. इति. ख० पु०

३. न्यायबिन्दु. १. ४.

सूत्रत्रयार्थस्य साधनभूतमन्यदर्थान्तरमनेनोक्तं प्रदर्शयितुम् । तथाच तत्सतोऽर्थत्ययो लक्षणाभिधानं च सर्वप्रमाणानाम् ।

यत्पुनः प्रत्यक्षलक्षणस्यान्ते(१) "यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्य" इत्यवधारणम्, किमनेनावधार्यते ? उच्यते—यस्येदं द्वयं नास्ति नासौ मिथ्याप्रत्यय इत्यवधार्यते । कः पुनरसौ ? नामजात्यादियोगेनो-

थंमन्यदर्थान्तरं सूत्रत्रयस्य वक्तव्यं पुनरित्यर्थः । एतदुक्तं भवति—किमर्थं सूत्रत्रयस्यापरमर्थान्तरमुच्यते । यावता स्वातन्त्र्येणैव किमित्येत-न्नोच्यते । पूर्वोक्तसूत्रत्रयार्थाक्षेपलब्धमिति । उच्यते—पूर्वोक्तसूत्रत्रयार्थ-स्य साधनभूतमन्यदर्थान्तरमनेनोक्तमिति प्रदर्शयितुम् । अस्यार्थः—यदेवेदं पूर्वसूत्र-त्रयं अनेनैव पूर्वोक्तार्थसाधनभूतमर्थान्तरमुक्तं, न पुनरर्थाक्षेपलभ्यमि-ति दर्शयितुं पूर्वोक्तसूत्रत्रयार्थत्वेनैवार्थान्तरमुक्तं न स्वातन्त्र्येणेति । किं पुनस्तत् ? यदर्थतो न लभ्यते इत्यत्राह—तथा च तत् सतोऽर्थत्ययो लक्षणाभिधानं च सर्वप्रमाणानाम् । अनिमित्तपरे हि सत्संप्रयोग-सूत्रे पूर्वव्याख्याने तत्सतोऽर्थत्ययो न लभ्यते । ततश्चान्यसंप्रयो-गेऽप्यन्यविषयविज्ञानप्रत्यक्षत्वान्निरालम्बनपक्षसिद्धेः पूर्वोक्तं सर्वमेव न सिद्ध्येत् । लक्षणाभिधानं च सर्वप्रमाणानाम् । पूर्वोक्तव्याख्याने हि न लक्षणपरता, किं त्वनिमित्तपरता । अस्मिंस्तु व्याख्याने लक्षणपर-त्वेन तत्सम्प्रयोगसूत्रस्य प्रदर्शनार्थतया सर्वप्रमाणलक्षणाभिधानं सिध्यति । सर्वप्रमाणलक्षणोपयोगस्त्वव्यभिचारप्रदर्शनेन निरालम्ब-नत्वनिरासः ।

"यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्य इत्यनेन (२)भाष्येण बाधकारणदोषज्ञानाभावेऽपि (३)मिथ्याप्रत्ययः पूर्वपक्षिणा शङ्कितो निराकृत इति प्रतिभाति, स एवासमीचीन इत्यवधारणात् । तत्र टीकाकारः पृच्छति—किमनेनावधार्यत इति । उत्त-रम्—यस्येदं द्वयं नास्तीति । कः पुनरसाविति—पुनरपि विशेषनिर्द्धारणाय प्रश्नः । नामजात्यादि(४)योगेनोत्पद्यते य इति विशेषणोत्तरम् । नामयोगेन यथा—देवदत्त इति । जातियोगेन यथा—गौरयमिति । गुणयोगेन यथा—शुक्ला-

१. शा० भा० ८.१. २. भाष्येण इति नास्ति० क० पु० ३. मिथ्याप्रत्ययः इति नास्ति ख० पु० ४. योजनया इति० ख० पु०

त्पद्यते यः। न चेदं द्वयमस्ति तस्य। तथा च परैरर्थान्तरालम्बनता ने-
ष्यते—अस्य निर्विकल्पकप्रमितविषयतैवेष्यते विकल्पमात्रमेवायमिति
वदद्भिः। स एव च संवृतिरित्युक्तम्। ननु चास्मिन्नपि राद्धान्ते नि-
र्विकल्पकप्रत्ययप्रमितविषयतैवेष्यते सविकल्पकानां जात्यादिप्रत्य-

---

ऽयमिति। क्रियायोगेन—पचतीति। द्रव्ययोगेन—दण्डीति। नचेदं
द्वयमस्ति तस्य। न हि लौकिकानां बाधकज्ञानं कारणदोषज्ञानं वा तत्र
विद्यते। परीक्षकाणां तु यौक्तिको बाधोऽस्त्येव। कथं पुनरवगम्यते
नामजात्यादियोगेनोत्पद्यमानस्य(१) निर्विशङ्कितज्ञानस्य विकल्पसंज्ञक-
स्य लौकिकानां बाधकारणदोषज्ञानाभावेऽपि यौक्तिकबाधबलेन परेषां
मिथ्याभावोऽभिमत इति? । अत्राह—तथा चेत्यादि। अर्थान्तरभूता व्यक्ति-
तो ये जात्यादयस्ते विकल्पप्रत्ययस्यावलम्बनमिति परैर्नेष्यते। किन्तु
निर्विकल्पकेन प्रत्ययेन प्रथमभाविनेन्द्रियजेन या व्यक्तिः प्रतीता सैव
सविकल्पकेन प्रत्ययेनाप्यालम्ब्यते। तामेव चावलम्बमानमपि जात्या-
दियोगितया विकल्पमात्रमेवेदं न बाह्यवस्त्ववच्छेदकमुत्पद्यत इति
परैरुक्तम्। (२)एवं च ब्रुवाणैः परैर्मिथ्यात्वमभ्युपगतमिति गम्यते। स
एव च संवृतिरित्युक्तम्। स एव विकल्पप्रत्ययः संवृतिरिति च(३)
यस्मात् परैरुक्तं तस्मात्परैर्मिथ्यात्वमिष्टम्। केन पुनः(४) कारणेन
विकल्पप्रत्ययः संवृतिरित्युच्यते? संव्रियतेऽनेनेति। विकल्पप्रत्ययो
हि स्वाकारेण जात्यात्मकेन पररूपं स्वलक्षणस्यात्यन्तिकभेदं संवृणो-
ति आच्छादयति।

तदाह कीर्त्तिः—

> पररूपं स्वरूपेण यया संव्रियते धिया।
> स्वकार्यप्रतिभासिन्या भावनाश्रितया तया॥
> तया संवृतिनानात्वात् प्रकृत्या भेदिनः स्वयम्।
> अभेदिन इवाभान्ति भावा रूपेण केनचित्॥
> तस्याश्चाभिप्रायवशात् सामान्यं(५) सम्प्रकीर्त्तितम्।
> तदसत्परमार्थेन च यथा सङ्कल्पितं तथेति॥

ननु चास्मिन्नपि राद्धान्त इति। परेषामपि सिद्धान्ते नैवास्य मिथ्याश-

---

१. निर्विशङ्कितेति नास्ति क० पु०

२. परश्च ब्रुवाणैः परः इति क० पु० ३. यस्मात् परैरुक्तं इति क० पु० नास्ति।

४. प्रकारेण. इति क० पु० ५. परिकीर्तितम् इति. ख० पु०

यानाम्। इयांस्तु विशेषः—पूर्वानुभूतार्थानुसन्धानेनास्मिन्नपि निर्विकल्पकप्रत्ययप्रमितविषयता नापैति। अनुसन्धानप्रत्ययस्यापि नार्थान्तरानुसन्धानेन विषयान्तरत्वं सविकल्पकस्य शक्यते वक्तुम्। तस्मादर्थान्तरविषयत्वान्नैवास्य मिथ्याशङ्कोपपद्यते। द्वयस्य चाभावः। तस्मात्तदर्थमिदमवधारणं मन्दतरफलमेव प्रतिभाति।

ननु च त्वयैवेदमुक्तं—इयांस्तु विशेष इति। अनेन विशेषेण परैरिदमुक्तमनुसन्धीयमानोऽर्थः संहितार्थान्तरविषयत्वान्नैवास्य एकप्रत्ययविषयोऽर्थः परिच्छेद्यतामस्य प्रत्ययस्य प्रतिपद्यते। आलम्बनतां तु प्रतिपद्यते। तस्मान्न परिच्छेदकत्वमनुसन्धानप्रत्ययस्येच्छन्ति

---

ङ्कोपजायते, यस्मान्निर्विकल्पकप्रत्ययप्रमितमेव स्वलक्षणं स विकल्पकानां विषय इष्यते। तल्लक्षणं च परमार्थतोऽस्त्येव। सदर्थविषयं तु ज्ञानं(१) सत्यं, न मिथ्या, यथा निर्विकल्पकज्ञानम्। इयांस्तु विशेषः—निर्विकल्पकेन सह पूर्वानुभूतं यत्स्वलक्षणं तस्य यदनुसंधानमर्थान्तरघटनं योजनं तेनेदमुत्पद्यते सविकल्पकज्ञानम्। निर्विकल्पकं तु न पूर्वानुसन्धानेनोत्पद्यते। अस्मिन्नपि सिद्धान्ते निर्विकल्पकप्रमितविषयता पुनः समानैव। अनुसन्धानप्रत्ययस्यापि समानविषयत्वे सविकल्पकं मिथ्या निर्विकल्पकं सत्यमिति न युक्तम्। द्वयस्य चाभावः। न हि लौकिकानां द्वयमिदमस्तीति। तस्मान्मिथ्यात्वशङ्काभावान्नास्ति पूर्वः पक्ष इति निराकरणमनुपयोगि।

ननु च त्वयैवेति पूर्वपक्षसमर्थनम्। अनेनैव विशेषेण जात्याद्यनुसन्धानेनैव जायत इति परैरिदमुक्तं—निर्विकल्पकेन यत् स्वलक्षणं(२)बाह्यार्थरूपं प्रतीयते तद्विकल्पप्रत्ययस्य परिच्छेद्यं न भवति, आलम्बनं तु भवतीति। एषोऽभिप्रायः—न हि बाह्यं वस्तु जात्यादिभिर्योजयितुं शक्यते, तस्य विकल्पैरसंस्पर्शात्। किन्तु(३) तदगृह्णन्तोऽपि विकल्पास्तद्ग्रहाभिमानिनो भासन्ते। तदभिमानानुरोधेन तदालम्बना इत्युच्यन्ते। परमार्थतस्तु निरालम्बना एवेति। एवं च मिथ्यात्वमुक्तमेव परैः। तस्मान्न परिच्छेदकत्व(४)मनुसन्धानप्रत्ययस्येच्छन्ति स्मृतिवदेतद्विकल्पज्ञानमि

---

१. सत्यं. इति नास्ति. क० पु० २. वाक्यार्थं. इति क० पुस्तके

३. तद्गृह्णन्तोऽपि विकल्पास्तद्गुणाभिमानिनः इति एक० पु०।

४. अस्य. इत्यधिकं ख० पु०।

स्मृतिवदिति वदन्तः । इष्यते चास्मिन् राद्धान्ते सविकल्पकस्यापि प्रमाणत्वम् । न च परेषामप्यनुसन्धानप्रत्यये विकल्पमात्रवादिनाम् । द्वयमस्तीति सिद्धम् । तस्मादस्य प्रमाणत्वमिच्छता कृतमिदमवधारणम् ।

कथं पुनरनुसन्धानप्रत्ययं कल्पनां मन्यन्ते ? जातिजातिमतोरभेदात्, अनुसन्धानप्रत्यये भेदाभ्युपगमाच्च । अयं गौरिति लौकिकाः प्रतिपद्यन्ते, नेदं गोत्ववद्द्रव्यमिति । ननु च—भेदप्रत्ययेऽप्यभेदोपचारो दृष्टः—कुन्तान् प्रवेशयेति । सत्यमभेदोपचारः । न पुनरयं

---

ति वदन्तः । यथा स्मृतिज्ञानं बाह्यं वस्तु न गृह्णाति अस्फुटावभासित्वात्, बाह्यस्य च स्फुटरूपत्वात् । न च ग्राहकसामग्रीभेदेन स्फुटास्फुटावभासभेदः, वेद्याभेदात् । अतो बाह्यावभासाभावेऽपि तदध्यवसायिनोपजायमानं तदालम्बनमिव भाति स्मृतिज्ञानम् । तथा विकल्पकज्ञानमपि । तदुक्तं (१)कीर्त्तिनैव—'शास्त्रचिन्तकाः खल्वेवं विवेचयन्ति, न तु प्रतिपत्तारः । ते तु दृश्यविकल्पावर्थावेकीकृत्य बाह्यमेवानुमन्यमानाः प्रवर्त्तन्त' इति । इष्यते चास्मिन् मीमांसकानां राद्धान्ते सविकल्पकस्यापि प्रमाणत्वम् । न च परेषामनुसन्धानप्रत्यये विकल्पमात्रवादिनाम् । द्वयमिदं बाधकारणदोषरूपं लौकिकानां साक्षादस्तीति सिद्धं सर्वेषाम् । तस्मात् पूर्वपक्षसम्भवादस्य विकल्पप्रत्ययस्य प्रमाणत्वमिच्छता भाष्यकारेण कृतमिदमवधारणम्—स एवासमीचीनः प्रत्यय इति ।

कथं पुनरनुसन्धानप्रत्ययं कल्पनां मन्यन्ते । अयमभिप्रायः—जात्यादिकं हि परमार्थतोऽस्त्येव । तद्विशिष्टतया स्वलक्षणं गृह्यमाणं पारमार्थिकमेव । अतः सत्याऽर्थप्रतिपत्तिः (२)कल्पना न भवतीति । पूर्वपक्षी त्वाह—जातिजातिमतोरभेदादनुसन्धानप्रत्यये भेदाभ्युपगमाच्चेति । जातिर्जातिमतः स्वलक्षणात भिन्ना नास्ति, अथ च विकल्पप्रत्यये भिन्नेव प्रतिभाति, तद्विशिष्टत्वेनावगतेः । कथं पुनरवगम्यते भिन्ना जातिर्न भवतीति ? तत्राह—अयं गौरिति हि लौकिकाः प्रतिपद्यन्ते, नेदं गोत्ववद्द्रव्यमिति । अस्यार्थः—जातिमतोऽभिन्ना जातिः प्रतीयते न भिन्ना । यदि भिन्ना प्रतीयेत इदं द्रव्यं गोत्ववत् इत्यवगतिः स्यात् । न चासावस्ति । ननु च भेदप्रत्ययेऽप्यभेदोपचारो दृष्टः—कुन्तान् प्रवेशयेति । अस्यार्थः—यद्यपि प्रतीतौ भेद एवावभाति, तथाऽपि समानाधिकरणशब्दप्रयोगमात्रं भवत्येवोपचारात । यथा

---

१. अयमेव धर्मकीर्तिर्बौद्धाचार्यः । २. कल्पना न भवति इति क० पु० नास्ति० ।

गौरित्यत्रोपचारबुद्धिर्लौकिकानाम् । तस्मादुपचरितोऽयं प्रत्यय इति न शक्यते वक्तुम् । न च स्वलक्षणपर्यवसाय्येवायं प्रत्ययः, अर्थान्तरानुसन्धानात् । अतो मन्यामहे कल्पनैवेयमिति ।

यद्ययमन्यथाग्राही प्रत्ययः स्यात् कथं न विपर्येति ? उच्यते– यत्र हि द्रव्यं द्रव्यान्तरात्मनाऽवसीयते तत्र विपर्ययो भवति । नचेदं गोत्वादि द्रव्यान्तरं नीलपीतादिवद्विशेषेभ्यः; पृथक्त्वेनाग्रहणात् । यत एव हि विशेषास्सामान्यप्रत्ययेनावलम्ब्यते, अत एव च

---

पुरुषसमानाधिकरणकुन्तशब्दप्रयोगः, न पुनः प्रतीतौ तादात्म्यावभासः । उत्तरम्—सत्यमयमभेदोपचारः 'कुन्तान् प्रवेशये'ति; न पुनरयं गौरित्यत्र लौकिकानामभेदोपचारबुद्धिः, प्रत्यये तादात्म्यावभासात् । उपचारो हि शब्दप्रयोगमात्रम्, न बुद्धौ तादात्म्यसंवित्तिः । तस्मादुपचरितोऽयं प्रत्यय इति न शक्यते वक्तुम् । प्रत्ययस्यौपचारिकत्वाभावात् । शब्दप्रयोगमात्रं ह्युपचरितो भवति । ननु तर्हि जातिरभिन्ना भवतु, तथाऽपि कथं कल्पनात्वम्? तत्राह–न च स्वलक्षणपर्यवसाय्येवायं प्रत्ययः, अर्थान्तरानुसन्धानात् । अस्यार्थः—यद्यपि भिन्ना जातिर्नास्ति तथाऽप्ययं प्रत्ययः स्वलक्षणरूपो यो विषयस्तन्मात्रपर्यवसायी न भवति, विशेषप्रत्ययत्वात् । अर्थान्तरेण जात्यादिनाऽनुसन्धाय योजयित्वा जायमानत्वात् । अतोऽर्थान्तरयोजनायामर्थान्तरसम्बन्धरहितेऽपि स्वलक्षणे जायमानत्वात् कल्पनैवेयमिति मन्यामहे ।

अत्र चोदयति—यद्ययमन्यथाग्राही प्रत्ययः स्यात् कथं न विपर्येति ? यो ह्यन्यदन्यरूपेणावभासयति यथा शुक्तिकारजतादिज्ञानम्, तस्य 'नेदं रजत'मिति विपर्ययो भवति । न गवादिषु प्रत्ययविपर्ययोऽस्ति । तस्मान्नायमन्यथाग्राहीति । अत्र समाधिः–यत्र हि द्रव्यं द्रव्यान्तरात्मनाऽवसीयते तत्र विपर्ययो भवति । यथा–शुक्तिकायां रजतात्मनाऽवसीयमानायाम् । नचेदं गोत्वादि द्रव्यान्तरं नीलपीतादिवद्विशेषेभ्यः । यथा नीलात् पीतं द्रव्यान्तरं न तथा विशेषेभ्यो गोत्वादि । कस्मात् ? पृथक्त्वेनाग्रहणात् । यत् खलु यतोऽर्थान्तरं तत् ततो भेदेन गृह्यते यथा—अङ्गुलीभ्योऽङ्गुष्ठः । न च विशेषेभ्यो भेदेन गृह्यते जातिः । अतो न भिन्नेति ।

ननु चायं गौरिति प्रत्यये भेदेनैव(१)जातिर्भाति, तत्राह—यत एव हीति । यस्माद् विशेषाः सामान्यप्रत्ययेनावलम्ब्यन्ते तस्मात् पृथक्त्वेन

---

१. जातिरवभाति० इति० ख० पुस्तके ।

प्रमाणविपर्ययाभ्यामयमन्यो विकल्पाख्यः प्रत्ययः इति विकल्पविदः । गुणकल्पनाऽप्यनेनैव व्याख्याता–पृथगग्रहणादिति ।

ननु च नाम्नः पृथगेव ग्रहणम् । न; तत्राप्ययं विष्णुमित्र इत्यभेदप्रत्ययात् । इयांस्तु विशेषः—जातिगुणकल्पनाभ्यां यदेकत्राभिन्नयोर्भेदकल्पना इतरत्र भिन्नयोरभेदकल्पना । तस्मादुपाधिविशेषोऽयं न कल्पनाविशेषः ।

---

ग्रहणं नास्ति । अत एव हि प्रमाणविपर्ययाभ्यामन्यो विकल्पाख्यः प्रत्यय इति विकल्पविदः । यत एवार्थान्तरात्मनाऽर्थान्तरं न गृह्णातीति न विपर्येति अत एव विकल्पविदो वदन्ति–प्रमाणादयमन्यो विकल्पाख्यः प्रत्ययः, अन्यथाग्राहित्वात् । विपर्ययाच्चान्य एवेति, साक्षाद्बाधाभावात् कारणदोषाभावाच्चेति । गुणकल्पनाऽप्यनेनैव व्याख्याता—पृथगग्रहणादिति । (१)योऽयं भिन्नजातिनिराकरणे हेतुः,(२)अनेनैव गुणकल्पनाऽपि व्याख्याता । यथा हि व्यतिरिक्ता न प्रतीयते जातिरिति जातिकल्पना, तथा गुणोऽपि गुणिनो भिन्ना(३)नावभासते । शुक्लमिदमिति हि लौकिकाः प्रतियन्ति, नेदं शुक्लवद्द्रव्यमिति । पृथगग्रहणादिति हेतुर्द्वेधा विवरणीयः । यदा व्यक्तिः प्रतीयते तदा तावत् पृथङ्न गृह्यते जातिः । तथा यदि भिन्ना जातिः स्यात् तदा व्यक्त्यग्रहेऽपि कदाचिद् गृह्येत, न च गृह्यते। तस्मान्न भिद्यते जातिः ।

ननु च नाम्नः पृथगेव ग्रहणमिति नामकल्पनामाक्षिपति । नाम हि नामिनो भिन्नम्, भिन्ने हि तस्मिन् नामयोजनाकल्पना न युक्ता । समर्थयन्नाह—न; तत्राप्ययं विष्णुमित्र इत्यभेदप्रत्ययात् । अस्यार्थः—यद्यपि भिन्नं नाम तथाऽपि न भेदेनैव प्रतीयते किन्तु अभेदेनैव । अयं विष्णुमित्र इति प्रत्ययः, भिन्ने चाभिन्नप्रत्ययो ऽ(४)प्यपरमार्थः कल्पनैव स्यात् । इयांस्तु विशेषः—जातिगुणकल्पनाभ्यां यदेकत्र जातिकल्पनायामभिन्नयोर्जातिजातिमतोर्भेदकल्पना । अन्यत्र नामकल्पनायां भिन्नयोर्नामनामिनोरभेदक (ल्पनेति । तस्मादुपाधिविशेषोऽयं कल्पनाप्रकारविशेष इत्यर्थः । न पुनः) कल्पनात्वे विशेषोऽस्ति, असत्यविषयत्वस्य तुल्यत्वात् ।

---

१. योऽयमिति नास्ति० क० पुस्तके ।　　२. तेनैव० इति० ख० पु०

३. नावभाति० इति० ख०　　४. अपरमार्थविषयः इति० ख० पु०

( ) एतत्कुण्डलान्तर्गतो भागः ख० पुस्तके नास्ति ।

ननु च कर्मकल्पनायां द्वयमप्येतन्न सम्भवति, भिन्नयोरेव क्रियाकारकयोः सम्बन्धोऽवगम्यते, व्यपदिश्यते च । (१)एवमत्राप्यभेदोपचार एवावगम्यते । व्यपदिश्यते च "पचति देवदत्त" इति सामानाधिकरण्यदर्शनात् ।

ननु च वैयधिकरण्यमपि दृश्यते—'ओदनं पचति' 'काष्ठैः पचति' पच्यते देवदत्तेनेति । किमिदं प्रलप्यते वैयधिकरण्यदर्शनादिति । जात्यादावपि वैयधिकरण्यं दृश्यते—गोभावो गोत्वं, पटस्य शुक्लत्वं, अस्येयं संज्ञेति । भिन्नाभिन्नकल्पनां प्रत्यभिन्नस्यायं व्यपदेशः । न पुनर्भिन्नस्य चार्थान्तरस्यावगतिरस्ति । तस्मादियमपि च कल्पना—देवदत्त इति । द्रव्येऽप्येवम्, दण्ड्ययमित्यभेदोपचारात् । तस्मात्पञ्चविधेयं कल्पना । नेयं प्रमा-

---

ननु चेति कर्मकल्पनामाक्षिपति—द्वयमप्येतद्भिन्नाभिन्नत्वकल्पनं कर्मकल्पनायां नैव सम्भवति । भिन्नं हि कारकात् कर्म भेदेनैव प्रतीयते—काष्ठैः पचति, देवदत्तेन पच्यत इति । नैवमित्यादिना समाधानम् । अत्रापि कर्मकल्पनायामप्यभेदोपचारः अभेदप्रतीतिरेव दृश्यते, पचति देवदत्त इति सामानाधिकरण्यदर्शनात् ।

ननु वैयधिकरण्यमपि दृश्यत इत्यनेनैतदाह—वैयधिकरण्यदर्शनात् भेद एवावसीयते । सामानाधिकरण्यं तु व्यपदेशमात्रमिति । किमिदं प्रलप्यत इति । अस्यायं भावः—यथा वैयधिकरण्यं दृश्यते तथा सामानाधिकरण्यमपि । न चैकस्य वस्तुनोऽभिन्नत्वं भिन्नत्वं च सम्भवति । तस्मान्नास्त्येव भिन्नमभिन्नं वा वस्तु । परस्परं विरोधेनानयोः प्रतीत्योः पराहतत्वात् । अविद्यमानवस्त्ववभासि च प्रत्ययो विकल्पमात्रमेवेति । अक्षरार्थस्तु—यथा कर्मणि वैयधिकरण्यं दृश्यते तथा जातिगुणनामस्वपि । न च तानि भिन्नानि, अभेदावगमात् । अतोऽविद्यमानमेव कदाचिद्भिन्नतया कल्प्यते, कदाचिदभिन्नतयेति मन्तव्यम् । द्रव्येऽप्येवं दण्ड्ययमित्यभेदोपचारात् । अस्यार्थः—दण्ड्ययमिति प्रतीतिः पुरुषमेव प्रतिपद्यते । न च पुरुषमात्रपर्यवसाय्येवायं प्रत्ययः, विशेषप्रत्ययात् । पूर्वपक्षमुपसंहरति—तस्मात्पञ्चविधेयं कल्पना न प्रमाणम् । अविद्यमानजा-

---

१. 'नैवम्' इति व्याख्यानसम्मतः पाठः ।

णम् । नाप्यप्रमाणम् । उच्यते—भवति कल्पनाज्ञानं यदि प्रत्यक्षसमधिगम्यता ज्ञानस्य स्यात् । आनुमानिकत्वं तु ज्ञानस्य वक्ष्यति ।

नन्वप्रत्यक्षज्ञानपक्षे ज्ञानस्याकारमात्रमालम्बनम्, अन्यथा ज्ञानस्योत्पत्तिर्नोपपद्यते । कोऽयमन्यथाभावः? अयमन्यथाभावः। शुक्तिका हि रजतवत्प्रकाशते । शुक्तिकालम्बनं हि तद् ज्ञानं, न रजतालम्बनम् । कथमवगम्यते? शुक्तिकासम्प्रयुक्ते चक्षुषि दर्शनादन्धस्यानुत्पादात्, न ह्यन्धश्शुक्तिकां रजतमिति व्यपदिशति। चक्षुष्मानेव हि शुक्तिकां रजतमिति मन्यते—रजतसन्निकृष्टं मे चक्षु-

---

त्याद्यध्यासेनोपजायमानत्वात् । नाप्यप्रमाणम् । बाधकारणदोषज्ञानयोस्साक्षादनुत्पत्तेः । उच्यते इत्यादिना सिद्धान्तमुपक्रमते । तत्र चेदमाकूतम्—जात्याद्यवभासीनि तावदेतानि ज्ञानान्युत्पद्यन्ते । न चाविद्यमानमेवाकारं ज्ञानमवगमयति । स्वलक्षणरूपवत्सत्त्वेनावभासनात्। तत्र विद्यमानता कदाचित् बहिरर्थरूपतया कदाचित् (१)ज्ञानाकारतया । तत्र यदा विज्ञानं (२)प्रत्यक्षं न भवतीति स्थितं तदा पारिशेष्यादर्थाकारतैवावशिष्यते । तथा च विद्यमानार्थाकारग्रहणात्र कल्पनारूपतेति । तदाह—भवति कल्पनाज्ञानं, यदि प्रत्यक्षसमधिगम्यता ज्ञानस्य स्यात् । आनुमानिकत्वं तु ज्ञानस्य वक्ष्यति ।

नन्वप्रत्यक्षज्ञानपक्षे ज्ञानस्याकारमात्रमालम्बनमन्यथा ज्ञानस्योत्पत्तिर्नोपपद्यते । अनेन बलात् प्रत्यक्षता ज्ञानस्याङ्गीकरणीयेत्यापादयति । कोऽयमन्यथाभाव इति पृच्छति । उत्तरम्—(३)अयमन्यथा भावः—शुक्तिका हि रजतवत् प्रकाशते इति । अनेन "ननु—व्यभिचारात् परीक्षितव्यं निमित्तम्, इति भाष्यं व्याचष्टे। तस्य चार्थः—शुक्तिकायां रजतमिदमिति ज्ञानमिन्द्रियतद्भावभाविप्रत्यक्षमेव ज्ञानम् । तच्च बहिः रजताकाराभावात् ज्ञानगतमेव रजताकारमवभासयतीति । शुक्तिकालम्बनं च तज्ज्ञानं न रजतालंबनमित्यनेन ये मीमांसकास्ते द्वे एते विज्ञाने, इदमित्येकं ग्रहणात्मकं, रजतमित्यपरं स्मरणात्मकमित्याहुः तान्निराकरोति । एकमेवेदं विज्ञानमन्यथाग्राहि जायते । तच्च रजतरूपेण शुक्तिकामेवालम्बते न रजतम् । कथमवगम्यत इति प्रश्नः । शुक्तिकासंप्रयुक्ते चक्षुषि तद्भवति । अन्धस्यानुत्पादात् । न ह्यन्धः शुक्तिकां रजतमिति व्यपदिशति । चक्षुष्मानेव हि शुक्तिकां रजतमिति मन्यते—रजतसन्निकृष्टं मे चक्षुरिति । अस्यार्थः—यदि

---

१. बहिर्ज्ञानाकारतया इति क०पु० । २. अप्रत्यक्षमिति स्थितम् इति० ख०पु० ।
३. अयमन्यथाभावः इति नास्ति०ख०पु० ।

रिति । अतः शुक्तिकालम्बनं च तत् ज्ञानं न रजतालम्बनम्। न चाप्रत्यक्षज्ञानपक्ष एतत्सम्भवति । अतोऽविद्यमानाकारालम्बनमपि ज्ञानमस्तीति प्रतिपत्तव्यम् । सेयं पञ्चविधा कल्पना ।

ननु चाविद्यमानाकारालम्बनज्ञानपक्षे निरालम्बनतैव ज्ञानस्य प्राप्नोति । नैवम्; निरालम्बनपक्षे न ह्यन्यस्यान्येन व्यपदेश उपपद्यते । भवति चायं व्यपदेशः रजतमिति शुक्तिकायाः । निरालम्बनज्ञानपक्षे हि कस्य केन च व्यपदेशो भिन्नत्वाच्छुक्तिकारजतज्ञानयोः ।

---

रजतमिति स्मरणज्ञानमेतत्स्यात् तदा चक्षुर्निरपेक्षत्वात्स्मरणस्यान्धस्यापि स्यात् । न चान्धस्येदमस्ति । यदा तु शुक्तिकालम्बनमेकमेव ग्रहणज्ञानं तदा चक्षुरपेक्षित्वात् स्यादन्धस्या(१)नुत्पादाच्चक्षुष्मत एवोत्पत्तिर्युक्ता । अनेन च-यत्प्रत्यक्षं न तद् व्यभिचरति । इदमिति ग्रहणज्ञानं रजतमिति स्मरणाद्भिन्नं यद्व्यभिचरतीति । भवदभिमतमेकमेवेदं रजतमिति ज्ञानं तत्प्रत्यक्षमेव न भवति । कीदृशं तर्हि प्रत्यक्षम् ?, तत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम् । यद्विषयं विज्ञानमुत्पद्यते तेनैवेन्द्रियसंप्रयोग इन्द्रियाणां या पुरुषस्य बुद्धिर्जायते तत् सत् प्रत्यक्षम् । यथा इदमिति विज्ञानम् । यत्तु अन्यसम्प्रयोगे शुक्तिकासम्प्रयोगे अन्यविषयं रजतग्राहि विज्ञानमुत्पद्यते न तत्प्रत्यक्षम् । किं तर्हि स्मरणमेव । कथं पुनरवगम्यते-इदमन्यसंप्रयोगे, इदं नान्यसंप्रयोग इति ? शुक्तिका हि संप्रयुक्ता । अतः शुक्तिकाविषयमेवेदमपि ज्ञानं यतो रजतमिति शुक्तिकामेव व्यपदिशति । यस्माच्छुक्तिकासंप्रयुक्ते चक्षुषि रजतसन्निकृष्टं मे चक्षुरिति मन्यत-इति भाष्यार्थो दर्शितः । न चाप्रत्यक्षज्ञानपक्ष एतत् सम्भवति । अतः प्रत्यक्षं ज्ञानम् । प्रत्यक्षं चेज्ज्ञात्यादिकमपि ज्ञानरूपमेव । तस्मात्स्वाकारभूतजात्याद्याकारतया बाह्यं वस्तु गृह्णत् कल्पनाज्ञानमेवेदमापतितम् ।

ननु चाविद्यमानाकारालम्बनज्ञानपक्षे निरालम्बनतैव ज्ञानस्य प्राप्नोति । अस्यार्थः—यदाकारावभासि यत् ज्ञानं तत्तदालम्बनमुच्यते । शुक्तिका च न रजताकारा । तस्माद्रजताकारस्य ज्ञानस्य न शुक्तिकालम्बनम् । तस्मान्निरालम्बनमेवेदमापद्यत इति चोद्यम् । नैवमिति । अस्यार्थः-निरालम्बनत्वे हि रजतज्ञानस्य शुक्तिकायां रजतमिति व्यपदेशो न स्यात्, भिन्नत्वाच्छु-

---

१. अनुत्पादः इति क० पु० ।

नन्वर्थालम्बनपक्षेऽप्यन्याकारस्य विज्ञानस्यान्याकारमालम्बनज्ञानमिति नोपपद्यते । इदमेव ह्यालम्बनस्यालम्बनत्वं यदुतार्थाकारमेव ज्ञानमुत्पादयतीति । अन्यथा हि चक्षुरादिवद्व्यापृतस्यापि ज्ञानोत्पत्तावालम्बनव्यपदेशो न स्यात् । केन चोक्तमालम्बनस्याकारनिरपेक्षैवेयं कल्पनेति । कथं तर्हि कल्पना? अर्थान्तरानुसन्धानतया । किमिदमर्थान्तरानुसन्धानतयेति ? इदमिदं यस्य लक्षणान्तरेणैकतापत्तिः, स्वात्मनि च भेदाध्यासः । कथं तर्ह्यवि-

---

क्तिकारजतज्ञानयोः । एकमत्र शुक्तिकालम्बनम्, अपरं तु निरालम्बनम् । अस्ति चायं व्यपदेशः । तस्मादेकमेवेदं ज्ञानं शुक्तिकामेव रजताकारेणालम्बते ।

नन्वर्थालम्बनपक्षेऽपीति । आलम्बनस्य ज्ञानमालम्बनज्ञानम् । एतदुक्तं भवति–आलम्बनमेव ज्ञायते न त्वनालम्बनमित्यस्मिन्नपि पक्षेऽन्याकारमालम्बनमन्याकारग्राहि च ज्ञानमिति नोपपद्यते । इदमेव ह्या(१)लम्बनस्यालम्बनत्वं यदुतात्माकारमेव ज्ञानं जनयति । यदि पुनः कारकतामात्रमेवार्थस्य स्यात्तदा चक्षुरादीनां ज्ञानोत्पत्तौ व्यापृतानामपि यथाऽऽलम्बनभावो नास्ति तथार्थस्यापि स्यात् । तस्माद्यदालम्बनमभिमतं तदाकारेण ज्ञानेनापि भवितव्यम् । अन्यथाऽऽलम्बनत्वानुपपत्तेरिति । केन चोक्तमिति । अत्रायमाशयः—शुक्तिकालम्बनमिदं ज्ञानमभिमतम्, शुक्तिकाकारमेव तावदिदमुत्पद्यते । न पुनस्तदाकारं गृह्णाति । यदि परं तमेवार्थान्तरमेवार्थान्तरयोजनया गृह्णाति तेन तदाकारग्राहित्वात्तदालम्बनं तावदविरुद्धम् । अक्षरार्थस्तु—केनेदमुक्तमालम्बनीभूतस्यार्थस्याकारमनपेक्ष्यैवेयं (२)कल्पनोपेयत इति ? किन्तु आलम्बनीभूतस्वलक्षणाकारग्राहिण्ये(३)वेयमिति । कथं तर्हि कल्पनेति । स्वलक्षणग्राहित्वे सति निर्विकल्पकवत् कल्पनात्वं न युक्तमित्यर्थः । अर्थान्तरानुसन्धानतयेति ह्यार्थान्तरेणानुसंधानं योजनं तद्भावादित्यर्थः । किमिदमर्थान्तरानुसन्धानतयेति स्वरूपविचारणाय प्रश्नः । इदमिदं यत् स्वलक्षणान्तरेणैकतापत्तिः । गौरयमिति ज्ञाने व्यक्त्यन्तरेण सहैक्यं तावदवभाति । स्वात्मनि च भेदाध्यासः । यद्यप्यसाधारणैकात्मकं स्वलक्षणं तथापि द्व्यात्मकमिव प्रतिभाति । कथं तर्हीति ।

---

१. अवलम्बनस्यावलम्बनत्वम् इति ख० पुस्तके ।

२. कल्पना जायत इति ख० पु० पा०  ३. इयं कल्पना इति ख० पु०

द्यमानजात्यादिविषया एव जात्यादिप्रत्ययाः ? स्वलक्षणे ह्यविद्यमानभेदाभेदाध्यासादविद्यमानविषया इत्युच्यन्ते।

कोऽयमध्यासो नाम ? विवेकाग्रहणात् स्वरूपमात्रग्रहणात् भेदाननुसन्धानात् सामान्याध्यासः। अभिन्नस्य चार्थस्यान्तरेण सादृश्यं सदृशाननुसन्धानात् भेदाध्यासः। सदृशानवधारणं तु भेदाननुसन्धानात्। सेयं पञ्चविधा कल्पनेति। कया युक्त्या सम्भवत्वालंबनव्यतिरिक्तं रूपमस्याः ? अर्थान्तरानुसन्धानदूषितं तु। न

---

यद्यालम्बनाकारनिरपेक्षेयं कल्पना न भवति, स्वलक्षणं चालम्बनं (१)तच्च विद्यमानमेवेति कथमविद्यमानविषया जात्यादिप्रत्ययाः ? अत्रोत्तरम्—स्वलक्षणे ह्यविद्यमानभेदाभेदाध्यासादविद्यमानविषया इत्युच्यन्ते जात्यादिप्रत्ययाः।

कोऽयमध्यासो नामेति पृच्छतोऽयमभिप्रायः–पूर्वपक्षिणा हि विज्ञानं साकारं प्रत्यक्षमित्यभ्युपगतम्। तत्र यद्यपि ज्ञानस्यैवाकारः तथापि स्वलक्षणासंस्पर्शात् स्वलक्षणभेदाभेदावभासो न घटते। तेन वरं ज्ञाने चार्थे चाविद्यमानस्याकारस्याध्यारोपोऽध्यासो युक्तः इति। विवेकाग्रहणादित्युत्तरम्। (२)अत्रायमाशयः—साकारे हि विज्ञाने तदीयोऽयमाकारः स्वलक्षणस्य यद्यपि न भवति, तथापि विवेकमगृह्णतः स्वलक्षणसम्बन्धितेत्युपपद्यते। सर्वथाऽविद्यमानेऽ(३)नुपपत्तिः। स्वरूपमात्रग्रहणात् भेदाननुसन्धानात् सामान्याध्यासः। यदिदं ज्ञानं साधारणाकारं जातं तस्य स्वलक्षणात् भेदो नानुसन्धीयते। केवलं स्वरूपमात्रं गृह्यते। तेन स्वलक्षणमेव सामान्याकारेणानुसन्धीयते। अभिन्नस्यार्थान्तरेण सादृश्यं सदृशाननुसन्धानात् भेदाध्यासः। सादृश्यानवधारणं तु भेदाननुसन्धानात्। यदेतत्साधारणाकारं विज्ञानमुपजायतेऽर्थान्तरभूतं तस्य स्वलक्षणेन सहात(४)द्व्यावृत्ततया सादृश्यं नानुसन्धीयते, भेदस्याऽनुसन्धीयमानत्वात्। ततश्च तदपि साधारणाकारं ज्ञानं स्वलक्षणेन सहाननुसंधीयमान (भेदं स्वलक्षणतादात्म्येनैवावभाति। एवं चैकमिदं स्वलक्षणसाधारणासाधारण) रूपं ज्ञात्मकमिवाश्रीयते। साधितमर्थमुपसंहरति–सेयं पञ्चविधा कल्पना। न चालम्बनव्यतिरिक्तं स्वलक्षणव्यतिरिक्तं रूपं ग्राह्यमत्रास्ति। अर्था-

---

१. तच्च इति॰ नास्ति क॰ पु॰ २. अत्रेति नास्ति ख॰ पु॰
३. अनुपपत्तेरिति॰ ख॰ पु॰ ४. व्यावृत्तितया इति क॰ पु॰
( ) कुण्डलान्तर्गतो भागः क॰ पुस्तके नास्ति॰

चार्थान्तरमर्थान्तरानुसन्धितयाऽऽलम्बनमिति । अतोऽर्थान्तरानुसन्धानात् स्वलक्षणालम्बनमपि कल्पनेत्युच्यते । तस्मात्स्वसंवेद्यज्ञानपक्ष एवैतदेकालम्बनत्वेऽपि ज्ञानान्यत्वसंवेदनमुपपद्यते । अन्यथा ह्यालम्बनमात्रावगतिरेव स्यान्न स्वलक्षणसामान्यावगतिः । स्वलक्षणव्यतिरिक्तं च न सामान्यमस्तीति प्रदर्शितं—रूपान्तराग्रहणात् तदग्रहे तद्बुद्ध्यभावादिति। अर्थान्तरस्यानुसन्धानाच्च। अनुसन्धानं च ज्ञानभेद उपपद्यत इत्युपपन्नस्सामान्यविशेषव्यवहारो लौकिकः । एवं चानित्ये नित्यबुद्धिः, असुखे सुखबुद्धिः, अनात्मन्यात्मबुद्धिरित्युपपन्नास्संसारहेतवो विपरीतग्रहाः । तदिदमुक्तम्–(१)"प्राग्बाधकज्ञानोत्पत्तेः कथमिदमवगम्यत" इति ।

---

न्तरानुसन्धानरूपत्वं तु अर्थान्तरानुसन्धानमभिमतम् । न चार्थान्तरं स्वलक्षणमालम्बनं कल्पनाज्ञानस्यार्थान्तरानुसन्धितया अनुसन्धानमनुसन्धिः तद्भावेनेति । स्वलक्षणालम्बनमपि कल्पनेत्युच्यते । तस्मात्(२)स्वसंवेद्यज्ञानपक्ष एवैतदुपपद्यते—ज्ञानान्यत्वसंवेदनम्, न स्वलक्षणकालम्बनतेति; ज्ञानाकारस्यापि भासमानत्वात् । यदि त्वप्रत्यक्षं ज्ञानं स्यात् तदाऽऽलम्बनमात्रावगतिरेव स्यात् । न च बाह्यमेव सामान्यमस्ति, यद्ग्रहणादाकारद्वयावगमो घटते । रूपान्तराग्रहणात् सामान्यं नास्तीति प्रतिपादितमेव यतः । नन्वेवमपि सर्वदैव सामान्यप्रत्ययेन भवितव्यम्, ज्ञानाकारस्य सन्निहितत्वात् । तत्राह—अर्थान्तरस्यानुसन्धानाच्चेति । एतदुक्तं भवति—सर्वदैव विकल्पज्ञान(३)मर्थान्तराकारेणोत्पद्यते । तेनोत्पत्तिपक्षे सामान्यप्रतीतिरनुत्पत्तौ स्वलक्षणमात्रावगम इति । एवं च यदा ज्ञानमेव साकारं प्रत्यक्षं तदाऽनित्ये नित्यबुद्धिरसुखे सुखबुद्धिरनात्मन्यात्मबुद्धिरित्युपपन्नास्संसारहेतवो विपरीतग्रहाः । नित्यात्मसुखानां ज्ञानाकारत्वात् । तदिदमुक्तम्—प्राग्बाधकज्ञानोत्पत्तेः कथमवगम्यत इति । एषा च भाष्ययोजना—ननु–प्रत्यक्षं व्यभिचरति । कल्पनाज्ञानं प्रत्यक्षम् । तयाऽविद्यमानार्थान्तरानुसन्धानात् व्यभिचरति ।

ननु कथमविद्यमानमर्थान्तरमनुसन्धातुं शक्यते ? स्यादेतदेवं यद्येकान्तेनेदमविद्यमानं स्यात्, स्वलक्षणे ह्येतदविद्यमानम् । ज्ञाने

---

१. शा. भा. पृ. ६ पं. २४.        २. स्वसंवेद्यसाकारज्ञानपक्ष एव इति क० पु०

३. अर्थान्तराकारं नोपपद्यते इति ख० पु०

एकालम्बनाभिप्रायेण सामान्यविशेषज्ञानयोः । न ह्यन्यसम्प्रयुक्ते चक्षुष्यन्यालम्बनस्य ज्ञानस्योत्पत्तिस्सम्भवति, अन्धस्यानुत्पादादित्युक्तम् । अत एवेदमुच्यते—नान्याकारमालम्बनमन्याकारस्य ज्ञानस्योत्पत्तिहेतुरिति ।

कथं तर्हि विपरीतग्रहाः अनात्मन्यात्मादयः ? उच्यते—

---

तु विद्यमानत्वाच्छक्यतेऽनुसन्धातुम् । ननु ज्ञानमप्रत्यक्षम् । मैवम्; शुक्तिका हि रजतवत्प्रकाशते, न च रजताकारः शुक्तिकायामस्ति। अतो ज्ञानस्यैवायमाकारः प्रथते। तच्चाप्रत्यक्षे ज्ञानेऽनुपपन्नम् । न चेदं रजतज्ञानं स्मरणं, पुरोऽवस्थितस्य तेनाकारेण व्यपदेशात्। अतः प्रत्यक्षमेवेदं ज्ञानं, तच्च रजताकारावभासीति । तत्रोत्तरम्—नेदं रजतज्ञानं प्रत्यक्षं यद्विषयं ज्ञानमुत्पद्यते तेनैवेन्द्रियसम्प्रयोगे यत् ज्ञानं जायते तत् प्रत्यक्षम् । न च रजतेनेन्द्रियं सम्प्रयुक्तम् । तस्मान्नेदं प्रत्यक्षम् । स्मरणमेव । तच्च बहिः रजताकारसम्भवात् बाह्यालम्बनमेवेति सिद्धं ज्ञानस्याप्रत्यक्षत्वम् ।

ननु-कथमिदं ज्ञायतेऽतत्सम्प्रयोगे रजतमिदमिति ? उच्यते—बाधकज्ञानोदये सति तत्र च रजताभावे ख्यापिते अतत्सम्प्रयोगजत्वं ज्ञायते । यत्र तर्हि बाधकप्रत्यय एव न जायते तत्र न शक्यते ऽतत्सम्प्रयोगजत्वं वक्तुम, यथा जात्यादिप्रत्यये । तस्माज्जात्यादिप्रत्ययः प्रत्यक्षः अविद्यमानजात्याद्याकारत्वेन व्यभिचरतीति। कथं पुनर्बाधकप्रत्ययो जात्यादिप्रत्यये नास्ति ? तत्राह–एकालम्बनाभिप्रायेणेति । स्वलक्षणज्ञानेऽपि स्वलक्षणमेवालम्बनं सामान्यज्ञानेऽपि तदेवेति प्रागुक्तम् ।

कथं पुनरे(१)कमालम्बनम ? न ह्यन्यसम्प्रयुक्ते चक्षुष्य(२)न्याकारस्य ज्ञानस्योत्पत्तिस्सम्भवति, अन्धस्यानुत्पादादित्युक्तम्। अत एवेदमुच्यत इति राद्धान्तमुपक्रमते । अस्यार्थः-स्वलक्षणमात्र(३)मालम्बनमिन्द्रियसम्प्रयुक्तम् । अन्याकारस्य स्वलक्षणमन्याकारस्य ज्ञानस्योत्पत्तिहेतुर्न भवति । यदि तथा स्यात्, तदेन्द्रियसम्प्रयोगाभावात्तादृशनार्थेनेन्द्रियसम्प्रयोगानपेक्षत्वेऽन्धस्यापि स्यात् । न चासावस्ति । तस्मादुभयाकारत्वात् ज्ञानस्योभयाकारमेवालम्बनम् ।

कथं तर्हि विपरीतग्रहा अनात्मन्यात्मादयः ? अयमभिप्रायः—तत्रापि ताव-

---

१. एकालम्बनता इति ख० पु० २. अन्यालम्बनस्य इति मूलपुस्तकपाठः

३. आलम्बनमिति नास्ति ख० पु०

विषयान्तरमदृशमालम्ब्य (१)अगृहीतविवेकं यत् ज्ञानमुत्पन्नं तत्सदृशविषयान्तरे स्मृतिहेतुतां प्रतिपद्यते स्मरामीति ज्ञानशून्यस्य । उपपन्नानि तावत् शुक्तिकादिषु रजतादिज्ञानान्यनात्मादिषु । स्वप्नादिषु कथम्? स्वप्नादिषु च तावत्पूर्वोक्तेभ्यो विशेषमभिधाय निरालम्बनवादेषु पुनरविशेषं वक्ष्यति, आत्मवादे चानात्मादिषु । तस्मान्नार्थान्तरानुसन्धानाध्यासनिमित्तं शुक्त्यादिज्ञानम् ।

---

दृविपरीतग्रहाः केचित्सम्मताः । तत्र यदि यथाज्ञानमेव वस्तु, न तर्हि विपरीतत्वम् । अथ विपरीतत्वं, न तर्हि यथाज्ञानमेवालम्बनमिति । उत्तरम्—उच्यत इत्यादि । विषयान्तरं रजताच्छुक्तिकां रजतसदृशीमालम्ब्येदमित्यगृहीतविशेषं रजतात् भेदावगमहेतवो ये शुक्तिकायां विशेषास्तानिन्द्रियदोषेण सतोऽप्यगृहीत्वा साधारणानेव शुक्तिकाया धर्मान् गृह्णतो यत् ज्ञानमुत्पन्नं तत्सदृशान्तरे स्मृतिज्ञानहेतुतां प्रतिपद्यते । दोषवशात् खण्डितशुक्तिके मनस्यनुभूतावमर्शाभावेन स्मरामीति ज्ञानशून्यस्य । तेन गृह्यमाणस्मर्यमाणयोर्भेदो नावसीयते । विज्ञानद्वयं चैतत्इदमिति प्रत्यक्षं, रजतमिति स्मरणम्, अन्यथा रजतावगत्यसम्भवात् । न हि तदिन्द्रियजम्, तेन संप्रयोगाभावात् । असंयुक्तं चेन्द्रियं विज्ञानं न जनयति । अन्धस्यानुत्पादात् । स्मरणमेवेदम् । उपपन्नानि तावच्छुक्तिकादिषु रजतादिज्ञानानि स्मृतिरूपतयाऽनात्मादिषु । स्वप्नादिषु पुनः कथम्? आत्मादीनां कदाचिदप्यननुभूततया स्मरणानुपपत्तेः । स्वप्नमदमूर्छादिषु च स्मृतिसंस्कारोद्बोधहेतोरभावात् कथं स्मृतिरिति । स्वप्नादिषु तावत्पूर्वेभ्यो रजतादिप्रत्ययेभ्यः संस्कारोद्बोधहेत्वभावेन स्मृतित्वं न सम्भवतीति विशेषं पूर्वपक्षेऽभिधाय पुनः सिद्धान्ते अदृष्टस्योद्बोधहेतुत्वादविशेषं स्मृतित्वमेव वक्ष्यामः । आत्मवादे चानात्मादिषु परमार्थात्मतयैव विद्यमानत्वाद्विपरीतग्रहत्वमेव नास्तीति वक्ष्यति । तस्मान्नार्थान्तरानुसन्धानाध्यासनिमित्तं(२)जात्यादिग्रहणम् । परमार्थतो ज्ञानबलेनैव जात्यादिभावात्, यथाज्ञानमेवालम्बनाभ्युपगमात् ।

---

१. अगृहीतविशेषं इति व्याख्यानसम्मतम् ।

२. शुक्त्यादिज्ञानमिति मूले०

यत्तु रूपान्तराग्रहणात्तदग्रहे तद्बुध्यभावादित्युक्तम्, तदसिद्धम्, अर्थान्तरानुसन्धानज्ञानस्य हि स्वलक्षणज्ञानान्यत्वमिष्टम्। तच्चाप्रत्यक्षज्ञानवादिनोऽर्थ एव प्राप्नोति। तस्मादसिद्धमिदं रूपान्तराग्रहणात्तदग्रहे तद्बुध्यभावादिति। तस्मात्सूक्तमन्यसम्प्रयुक्ते चक्षुषि अन्यविषयं ज्ञानं न प्रत्यक्षमिति।

कथं तर्हि विपर्ययः? अग्रहणादेवेति वदामः। अग्रहणनिमित्तता च दर्शिता भाष्यकारेण (१)"यदि चक्षुरादिभिरुपहतं मन" इति। कथमनेनाग्रहणनिमित्तता दर्शिता भवति? यदन्यविषयं ज्ञानमित्यस्याः प्रतिज्ञाया हेतुत्वेनोपन्यासात्। युक्तं च

(२)यत्तु रूपान्तराग्रहणात्तदग्रहे तद्बुध्यभावादित्युक्तम्, तदसिद्धम्। यस्मादर्थान्तरानुसन्धानज्ञानस्य स्वलक्षणज्ञानादन्यविषयत्वमिष्टम्, अन्यथा कल्पनैव वक्तुं न शक्यते। ननु सत्यमिष्टमेवार्थान्तरविषयत्वम्। तत्तु ज्ञानाकारग्राहित्वेन। तत्राह—तच्चाप्रत्यक्षज्ञानवादिनोऽर्थ एव प्राप्नोति। तस्मादसिद्धं हेतुद्वयम्। तस्मात्सूक्तमन्यसंप्रयुक्ते चक्षुष्यन्यविषये ज्ञानं न प्रत्यक्षमिति।

कथं तर्हि विपर्यय इति। इदमिति ज्ञानं गृह्यमाणसत्यविषयं न विपरीतार्थम्। रजतमित्यपि स्मृतिरविपरीतार्थैवेति। अग्रहणादेवेति वदामः। अस्यार्थः—विवेकाग्रहणात् गृह्यमाणस्मर्यमाणयोरिव ग्रहणस्मरणयोरपि भेदं न मन्यते। तेन ग्रहणव्यवहारं स्मरणं प्रवर्त्तयति। स्मरणं नाम गृहीतग्रहणम्, तत्र गृहीतत्वाननुसन्धाने ग्रहणमात्रमेवावभाति। तद्ग्रहणव्यवहारहेतुतां प्रतिपद्यमानं व्यवहाराविसंवादकत्वाद्व्यवहारे विपर्ययमावहति। अग्रहणनिमित्तता च विपर्ययस्य दर्शितैव भाष्यकारेण—यदि चक्षुरादिभिरुपहतं मन इति। कथमनेनाग्रहणनिमित्तता दर्शिता भवति? यदन्यविषयं विज्ञानमित्यस्याः प्रतिज्ञाया हेतुत्वेनोपन्यासात्। अस्यार्थः—यदन्यविषयं विज्ञानमन्यसम्प्रयोगे भवति न तत्प्रत्यक्षम्। तत्र पुनः पृष्टम्—कथं पुनरन्यसम्प्रयोगेऽन्यविषयविज्ञानं भवतीति। तत्र हेतुरयम्—यदि चक्षुरादिभिरुपहतं मन इति। नन्वेवमपि कथमग्रहणनिमित्तता दर्शिता भवति? तत्राह—युक्तं च दुष्टतायाः कार्यकरणाक्षमत्वम्, न पुनः कार्यान्तरसामर्थ्यम्। न हि दुष्टत्वादयः शाल्याद्यङ्कुरप्रसवसमर्थतां भजन्ते। यच्चोक्तं—भस्मकस्य दोषस्य कार्यान्तरोत्पादकत्वमिति, तत्र शरीरस्य वह्नेर्बलपुष्ट्यादिकं कार्यम्, तत्र तत्तु नास्त्येव, यत्तु जरणं तद्

१. शा. भा. पृ. ६ पं. २५ यदा हि चक्षुरादिभिः इति मुद्रितभाष्यपुस्तकपाठः।

२. यत् पुनरुक्तं इति० ख०

दुष्टतायाः कार्याक्षमत्वं, न पुनः कार्यान्तरसामर्थ्यम् । (१)तस्मादग्रहणनिबन्धन एव विपर्यय इति । अतस्सिद्धम्—'यस्य च दुष्टं करणं यस्य च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्य' इति ।

(२)ननु सर्व एव निरालम्बनः स्वप्नवत्प्रत्ययः, कुतस्तत्संप्रयुक्तत्वमतत्संप्रयुक्तत्वं वा, येन विशेषेण प्रत्यक्षाप्रत्यक्षयोर्विशेष उपलभ्येत । कथं पुनः सर्व एव निरालम्बनः प्रत्ययः ? (३)"प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षितस्स्वप्ने" । ननु च—शुक्तिकायां रजतज्ञानं स्मरामीति प्रमोषात्स्मृतिज्ञानमुक्तम् । युक्तं रजतादिषु । तत्र हि शुक्तिकायां यद्भास्वरं रूपं चक्षुषा परिच्छिन्नं तद्रजतस्मृतेरुद्बोधकमित्युपपद्येतापि । स्वप्नादिषु पुनः कस्यचिदग्रहणादर्थान्तरे स्मृत्युद्बोधपरिहारः शक्य इव प्रतिभाति । तस्माद्वासनानिबन्धनमेवेदं ज्ञानजालमिति प्र-

---

तिमात्रस्य, तदपेक्षया च न दोषत्वम् । अनन्तरमुपसंहरति—तस्मादग्रहणनिबन्धनोऽपि विपर्यय इति । अधिकरणार्थमुपसंहरति—अतस्सिद्धमिति ।

ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः । कुतस्तत्संप्रयुक्तत्वमतत्संप्रयुक्तत्वं वा; येन विशेषेण प्रत्यक्षाप्रत्यक्षयोर्विशेष उपलभ्येत इत्यनेन सङ्गतिमाह । यदि परमार्थतोऽर्थः स्यात् तदा संप्रयोगजं प्रत्यक्षमिति शक्यते वक्तुम् । सर्वप्रत्ययानां तु निरालम्बनत्वे पारमार्थिकार्थाभावे नेदं सिद्ध्यतीति प्रत्यक्षलक्षणाक्षेपेण सङ्गतिरित्यर्थः । कथं पुनः सर्व एव निरालम्बनः प्रत्ययः ? । उत्तरम्—प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षितः स्वप्ने । एतदेवासिद्धमिति मत्वाऽऽह-ननु च शुक्तिकायां रजतज्ञानं स्मरामीति प्रमोषात् स्मृतिज्ञानमुक्तम् । एवं च स्वप्नज्ञानमपि स्मृतिरूपत्वात्सालम्बनमिति भावः । युक्तं रजतादिष्विति विशेषमाह—तत्र भास्वरं यद्रूपं शुक्तिकावर्ति चक्षुषा परिच्छिन्नं तद्रजतस्मृतेरुद्बोधकमित्युपपद्येतापि स्मृतित्वम् । स्वप्नादिषु पुनः कस्यचिदग्रहणादर्थान्तरे स्मृत्युद्बोधपरिहारः(४)शक्य इव प्रतिभाति । कस्मात्? बाह्यस्यार्थस्य स्मर्यमाणस्य गृह्यमाणस्य च कारणत्वानुपपत्तेः । तस्माद्वासनानिबन्धनमेवेदं ज्ञानजालमिति प्रतिपद्यामहे । नन्वेवमपि क्वचिदर्थः क्वचिद्वासना कारणमिति कथमिद-

---

१. तस्माद्भ्रमानिबन्धना एव विपर्ययाः इति मूलपुस्तकपाठः ।

२. शा. भा. पृ. ७. पं. ३. ३. शा. भा. पृ. ७. पं. ३.

४. शक्य इति. इति ख० पु० ।

तिपद्यामहे । सदृशदर्शनात् सदृशेऽर्थान्तरे स्मृतेरुद्बोधः । स्वप्ने पुनः कस्यचिदग्रहणादित्युक्तम् । तस्माद्वासनैव निमित्तमिति लघ्वी कल्पना । नार्थान्तराश्रयणम्, अव्याप्तेः । अतः कुड्यादिष्वपि ज्ञानं वासनानिमित्तमेव, न कुड्याद्यर्थनिमित्तमिति स्थितिः ।

उच्यते—कार्यसिद्ध्यर्थं हि कारणं कल्प्यते, न पुनः कार्यविनाशाय । स्वप्नादिषु बहिरवभासा संवित्, सा च बाह्यार्थमन्तरेण न संभवति । येन च विना यन्न संभवति तत्तस्य कारणम् । तस्मादर्थ एव कारणमिति युक्तं कल्पयितुम् । निरालम्बनता तु नैव संवेद्यते प्रत्यक्षावबोधेन । तस्मादक्षजं ज्ञानं न वासनानिमित्तमित्युक्तम् ।

ननु—स्वप्नोपलब्धं मिथ्येति प्रतिबुद्धस्य ज्ञानमुत्पद्यते । न च मिथ्याभावस्य कारणकल्पना युक्ता ।

---

मेकान्तेन निश्चीयते—वासनैव निमित्तमिति ? तत्राह—सदृशदर्शनात् सदृशेऽर्थान्तरे स्मृतेरुद्बोधः **शुक्तिकारजतादिष्वेव सम्भवति** । स्वप्ने पुनः **कस्य चिद्ग्रहणात्स्मृत्युद्बोधो न सम्भवतीत्युक्तम् । वासना तु रजतादिज्ञानेष्वपि सम्भवति** । तस्माद्वासनैव निमित्तमिति लघ्वी कल्पना । **सर्वत्र सम्भवात्** । नार्थान्तराश्रयणम्, मव्याप्तेः **स्वप्नादिषु । साध्यमुपसंहरति**—अतः कुड्यादिष्वपि ज्ञानं वासनानिमित्तमेव न कुड्याद्यर्थनिमित्तमिति स्थितिः ।

उच्यते—कार्यसिद्ध्यर्थं हि कारणं कल्प्यते, न पुनः कार्यविनाशायेति **सर्वजनासिद्धम्** । स्वप्नादिषु च बहिरवभासा **ज्ञानातिरिक्तग्राहिणी** संवित् । सा च **तादृशी बाह्यमर्थ**मन्तरेण न सम्भवति । **प्रतिभासविरोधात्** । येन च विना यन्न भवति तत् तस्य कारणम् । तस्माद**र्थेन विनाऽनुपपत्ते**रर्थ एव कारणमिति युक्तं कल्पयितुम् । **ननु च स्वप्नादिषु केन प्रत्ययेन निरालम्बनत्वमेव ख्याप्यते ? तत्राह**—निरालम्बनता तु नैव संवेद्यते प्रत्यक्षावबोधेन, **किन्तु विवेको गृह्यते । यस्मात्स्वप्नेऽर्थ एव कारणं** तस्मादक्षजं ज्ञानं न वासनानिमित्तमित्युक्तं **भाष्यकारेण** ।

ननु च प्रबुद्धस्य स्वप्नोपलब्धं मिथ्येति ज्ञानमुत्पद्यते । न च मिथ्याभावस्य कारणकल्पना युक्ता । अस्यार्थः—**स्वप्नादिज्ञानं तावन्मिथ्येति सिद्धम् । तच्च यदि बाह्यालम्बनमेव, ततो मिथ्याभाव एव न घटते । जाग्रतस्सम्यक्प्रत्ययवत् । न चार्थत्वे सत्यपि मिथ्यात्वे कारणमन्यत्कल्पयितुं युक्तम् । तस्मादर्थशून्यत्वैव मिथ्यात्वमिति ।**

ननु चाकारणस्य मिथ्याप्रत्ययस्याप्युत्पादो न घटते । सत्यं न घटते, न त्वगत्यनुगुणं तत् । तदानुगुण्ये हि मिथ्याज्ञानतैव न स्यात् । तस्माद्व्यामोहहेतवो मिथ्याप्रत्ययाः । व्यामोहनिबन्धनाश्च सांसारिक्यो वासनाः । अतो वासनानिबन्धनमेवेदं ज्ञानजालमिति तत्त्वविद्भिरुदितम् ।

ननु—परिहृतमेतत्—स्मरामीति ज्ञानशून्यानि स्मृतिज्ञानान्येतानि । ननु—च स्मृतेरुद्बोधकारणाभावान्नैतत्संभवतीत्युक्तम्, तदसिद्धम्; स्वप्नादावपि हि चिन्ताऽदृष्टादिसंभवात् । स्वप्नेऽपि हि सुखदुःखमनुभूयते । सुखदुःखहेतुश्चादृष्टम् । अतोऽदृष्टहेतुकमेव स्वप्नादिज्ञानम्, किंचिच्चिन्तादिहेतुकमित्युपपन्नं शुक्तिकादिज्ञान-

---

नन्वकारणस्य मिथ्याप्रत्ययस्याप्युत्पादो न घटते। अस्यार्थः—**यथा मिथ्यात्वं सत्यर्थे न घटते, तथार्थाभावे ज्ञानोत्पत्तिरपि न घटते । तेन ज्ञानोत्पत्त्यर्थेनार्थोऽप्यङ्गीकार्य इति ।** सत्यं न घटते, न त्वगत्यनुगुणं तत् । तदानुगुण्ये हि मिथ्याज्ञानतैव न स्यादिति । एतदुक्तं भवति—**यद्यपि ज्ञानोत्पादनाय कारणं कल्पनीयम्, तथाप्यर्थ एव न कल्प्यः । किन्तु वासनामात्रम् ।** तस्माद् व्यामोहहेतवो मिथ्याप्रत्ययाः । **व्यामोहोऽर्थशून्यत्वं मिथ्याप्रत्ययस्य हेतुः । ननु वासना कथं सम्भवति ? तत्राह**—व्यामोहनिबन्धनाश्च सांसारिक्यो वासनाः । एतदुक्तं भवति—**वासनातो व्यामोहो व्यामोहाद्वासनेति अनादित्वात् बीजाङ्कुरवददोष इति ।** अतो वासनानिबन्धनमेवेदं ज्ञानजालमुदितं तत्त्वविद्भिः ।

ननु परिहृतमेतत्स्मरामीति ज्ञानशून्यानि स्मृतिज्ञानान्येतानीति । **अनेन सिद्धान्तमुपक्रमते । स्मरामीत्यस्यांशस्य प्रमोषात्प्रत्यक्षव्यवहारप्रवर्त्तकतया मिथ्यात्वमुपपन्नमर्थालम्बनत्वेऽपि स्वप्नादिज्ञानस्येत्यर्थः ।**

ननु च स्मृतेरुद्बोधकारणाभावान्नैतत् सम्भवतीत्युक्तं, तदसिद्धम्; स्वप्नादावपि हि चिन्ताऽदृष्टादिसम्भवात् । **चिन्ता च न तदानींतन्येव स्वप्नकारणम्, किन्तु कियत्यपि पुरस्तात्काले निर्वृत्तापि संस्कारमुखेन । तेन जाग्रद्दशाभाविनी चिन्तापि स्वप्नस्य हेतुः (रित्यर्थः) । अदृष्टं च । कथमदृष्टस्य हेतुत्वम् ? तत्राह**—स्वप्नेऽपि हि सुखदुःखमनुभूयते, सुखदुःखहेतुश्चादृष्टमिति । **स्वप्नादिज्ञानोत्पादनद्वारेणादृष्टमेव सुखदुःखं जनयत् स्वप्नज्ञानहेतुरित्यर्थः ।** अतोऽदृष्टहेतुकमेव स्वप्नादिज्ञानम**दृष्टस्य हेतोर्गमकम् । स्वप्नादिज्ञानमन्यथाऽसम्भवात्** किञ्चिच्चिन्तादिहेतुकमित्युपपन्नं शुक्तिकादिज्ञानतुल्यत्वम् । अत्रा-

तुल्यत्वं स्वप्नविज्ञानस्य । तदिदमुक्तम्—(१)"**स्तम्भ इति जाग्रतो बुद्धिस्सुपरिनिश्चिता कथं विपर्येष्यति**" ? कथमनेनेदमुक्तम् ? निश्चितमवच्छिन्नमित्यर्थः । कथमवच्छिन्नोऽर्थोऽनवच्छिन्नो भवति ? कथं तर्हि प्रबुद्धो मिथ्येति जानाति ? उक्तं स्मरामीति स्मृतिप्रमोषात् (२)प्रत्यक्षसम्मितं तत् । प्रतिबुद्धस्य चापैति प्रत्यक्षाभिमानः । अमुमेवार्थं स्पष्टीकरोति—(३)"**अथ प्रतीतिस्तथाभावस्य हेतुः, न शक्यते(४) प्रत्ययादयमन्य इति वदितुम्**" । यदि प्रत्ययत्वादिति च । नावगतिं मिथ्येति मन्य-

यमाशयः—यत्र चिन्ता न दृश्यते तत्र स्वप्नज्ञानकार्यबलेनैव कारणकल्पना । यत्र चिन्तादिकमस्ति तत्र तदेव कारणमिति । एतेनेदमपि निराकृतम्-यदाहुः किमिति जाग्रतोऽपि स्वप्नतुल्यविभ्रमा न भवन्तीति । यतः कार्यैकगम्यमदृष्टमतद्दृश्यमाने कार्ये नास्त्येवेति । तदिदमुक्तम्—यदिदमस्माभिरुच्यते-अग्रहणात्मकः प्रमोषो मिथ्यात्वहेतुरिति तदेव भाष्यकारेणोक्तं—जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्येष्यतीति भाष्येण । कथमनेनेदमुक्तम् ? इत्थमुक्तम् । निश्चितमवच्छिन्नमित्यर्थः । कथवच्छिन्नोऽर्थोऽनवच्छिन्नो भवति ? भाष्यकारो हि सुपरिनिश्चयेन मिथ्यात्वाभावं ब्रुवन्ननिश्चयान्मिथ्यात्वमाह । यदि च प्रमोषादन्यथैव मिथ्यात्वं कथं निश्चयेन मिथ्यात्वम् ? तस्मात्सुपरिनिश्चयेन विपर्यासाभावाभिधानादग्रहणमेव मिथ्यात्वकारणम् । नन्वग्रहणान्मिथ्यात्वे सर्वज्ञानानि मिथ्या स्युः, सर्वात्मनार्थस्य केनचित् ज्ञानेनाग्रहणात् अनेनाभिप्रायेण पृच्छति—कथं तर्हि प्रबुद्धो मिथ्येति जानातीति । उत्तरम्-उक्तं स्मरामीति स्मृतिप्रमोषात्स्मृतित्वापरामर्शात् प्रत्यक्षसम्मितं तदिति । प्रत्यक्षसाधारणेन रूपेण प्रतिभासमाना प्रत्यक्षव्यवहारं प्रवर्त्तयतीति व्यवहारविसंवादादप्रामाण्यम् । कथं तर्हि निश्चयः स्मरणमेतदिति ? अत्राह—प्रतिबुद्धस्य चापैति प्रत्यक्षाभिमानः । इन्द्रियदौर्बल्ये हि निश्चिते प्रत्यक्षतानुपपत्तेः स्मृतित्वनिश्चयः । अमुमेवार्थमग्रहणात्मको भ्रम इति स्पष्टीकरोति—अथ प्रतीतिस्तथा भावस्य हेतुः, न शक्यते प्रत्ययादयमन्य इति वदितुम्, यदि प्रत्ययत्वादिति च । कथमनेन भाष्येणेदं स्पष्टीकृतमित्यत्राह—नावगतिं मिथ्येति मन्यते । अन्यतो हि स्वप्नप्रत्ययस्य

१. शा. भा. पृ. ७. प. ६. २. प्रत्यक्षसमानं इति क, पु.

३. शा. भा. पृ. ७. ११. ४. अत्र मुद्रितभाष्यपुस्तकेषु पाठभेदोऽस्ति ।

ते। (१)"अन्यतो हि स्वप्नज्ञानस्य मिथ्याभाव" इति प्रमोषनिमित्ततां दर्शयति । कुतः ? इन्द्रियदौर्बल्योपन्यासान्निद्राक्रान्तं मे मन इत्यादिना। दौर्बल्यं च कार्याक्षमत्वं न कार्यन्तरोत्पत्तिसमर्थत्वमित्युक्तम् ।

ननु च(२) "शून्य"स्त्विति सैव निरालम्बनतोपन्यस्ता प्रत्ययस्यार्थशून्यतां वदता। निरस्ता च सा शुक्तिकारजतज्ञानतुल्यताभिधानेन। स एवायं निरासः पुनराक्षिप्यते। कया युक्त्या ? संवेद्यविषयत्वात् संविदः। सा चात्मनो बुद्धेर्वा ज्ञान एव वा। स एवास्या विषयो युक्तः। तस्मात्सा संवित्। एवं च स एव संवेद्य इति प्राप्नोति। तस्मान्न विषयान्तरं संवेदयितुं क्षमः । शब्दस्पर्शरूपरसगन्धात्मकता विज्ञा-

---

मिथ्याभाव इति प्रमोषनिमित्ततां दर्शयति । कुतः प्रमोषनिमित्ततोक्तेत्यत्राह—इन्द्रियदौर्बल्यं यस्माद्दर्शितं--निद्राऽऽक्रान्तं मे मन-इत्येवमादिभाष्येण, दौर्बल्यं च कार्याक्षमत्वं, न कार्यान्तरोत्पत्तिसामर्थ्यमित्युक्तं वृत्तिकारग्रन्थे। तस्मादग्रहणात्मको भ्रमो नार्थशून्यात्मक इति सिद्धम् ।

ननु "शून्य"स्त्विति सैव निरालम्बनतोपन्यस्तेत्यनेनाधिकरणारम्भमाक्षिपति। आक्षेपे च युक्तिर्निरालम्बनता पूर्वं निरस्तैव। शून्यस्त्विति भाष्येणापि सैवोपन्यस्ता। न चैवमाशङ्कनीयं-पूर्वत्र बाह्यालम्बनाभाव आशङ्क्य निरस्तः, सम्प्रति ज्ञानस्याप्यभाव इति माध्यमिकदर्शनमुपन्यस्य निराक्रियत इति। यस्मात्प्रत्ययस्यैवेयमर्थशून्यतोपन्यस्ता, न पुनः प्रत्ययोऽपि नास्तीति । तस्माद्बाह्यालम्बनशून्यतैवेयमुच्यते । सा च निरस्ता। तस्मात्पुनर्निरासायाधिकरणारम्भोऽनर्थक इति। अत्रोत्तरम्—स एवायं निरासः पुनराक्षिप्यत इति । कया युक्त्येत्याक्षेपयुक्तिं पृच्छति-उत्तरम्—सम्वेद्यविषयत्वात्संविद इति । अस्यार्थः-यत् सम्वेद्यते प्रतिभास्यते तदेव संविदो विषयः। सा चात्मनो बुद्धेर्वा ज्ञान एव वा सा च संवित् आत्मनो धर्मः, बुद्धेर्वा मनसो वेत्यर्थः। बुद्धिशब्देन मन एवोच्यते। ज्ञान एवावस्थितो ज्ञानधर्मो वेत्यर्थः । ततः किमित्यत्राह—स एवास्या विषयो युक्तः। यतस्था संवित् सम्बन्धयति । तस्मान्न विषयान्तरमाश्रयात् संवेदयितुं क्षमा संवित्। तथा च सति शब्दस्पर्शरूपरसगन्धात्मकताश्रयभूतस्य ज्ञानस्यात्मनो बुद्धेर्वा प्रतिपत्तव्या। शब्दादीनां प्रतिभासमा-

---

१. शा. भा. पृ. ७. पं. १२.    २. शा. भा. पृ. ७. पं. १९.

नस्यात्मनो बुद्धेर्वा प्रतिपत्तव्या। किमर्थज्ञानयोराकारभेदं नोप-लभामह इति ज्ञानशब्दः प्रदर्शनार्थ एवाभिप्रेतः। न; संविदाधारे हि संवेद्ये ज्ञानमेवावशिष्यते। बुध्यात्मनोः शब्दादितुल्यत्वात्। ज्ञा-नाविनाभूता च संवित्। सुषुप्त्यवस्थायां संविद आत्मनि बुद्धौ चादर्शनात्। ज्ञानोपसंहृतिर्हि स्वापः। तादिदमालोच्योक्तम्-'अर्थ-ज्ञानयोराकारभेदं नोपलभामह' इति।

क पुनारिदं दृष्टम्-विषय एव (हि) संविदा संवेद्यत इति। संवेद्य-

---

नत्वेन विषयत्वाद्विषयस्य चाश्रयत्वात्, ज्ञानादीनां चाश्रयत्वेन सम्भा-व्यमानत्वात्। किमर्थज्ञानयोराकारभेदं नोलपलभामह इत्यत्र भाष्ये ज्ञानशब्दः प्रद-र्शनार्थ एवाभिप्रेतो बुध्यात्मानावप्युपलक्षयति। नेत्युत्तरम्। नोपलक्षण-मेतत् ज्ञानमेव। यतः संविदाधारे हि सम्वेद्ये ज्ञानमेवावशिष्यते। कस्मात्? बुध्या-त्मनोः शब्दादितुल्यत्वात्। अस्यार्थः--संवित्तावत्प्रत्यक्षा, तदप्रत्यक्षत्वे सर्वा-र्थानां दर्शनानुपपत्तेः। तदुक्तम्--

अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यतीति।

न च(१)निराकारा प्रत्यक्षा युक्ता। एकश्चायमाकारो गन्धाद्यात्मकः प्रतीय(मानस्य विषयत्वे एकस्यास्संविदो विविक्तो विषयः स्यात्। न चाश्रयाश्रयिभावादन्यः सम्बन्धोऽस्ति। तस्मादाश्रय एव विषय इति यु-क्तम्। एवं च सति स एवाश्रय एव संवेद्य)ते। अतोऽसावाकारः संविद एव। सा च संविन्न बुद्धिरूपा नाप्यात्मरूपा, तयोः शब्दादितुल्यत्वात्, संविद्व्यति-रेकेणापि भावात् तादात्म्यानुपपत्तेः। ज्ञानात्मकता तु संविदो युक्ता। ज्ञानाव्यभिचारित्वात्। तदाह—ज्ञानाविनाभूता च संविदिति। ननु सुषुप्त्यव-स्थायां ज्ञाने सत्यपि संविन्नास्तीति यो मन्यते तं प्रत्याह--ज्ञानोपसंहृ-तिर्हि स्वाप इति। तदिदमालोच्योक्तमर्थज्ञानयोराकारभेदं नोपलभामह इति।

अभिप्रायमजानन् पृच्छति—क पुनरिदं दृष्टम्-विषय एव संविदा संवेद्यत इति। यावता संवेद्यतयैव हि संवेद्यतामवगच्छामः, न विषयतया। विषयशब्देना-श्रय एवाभिप्रेतः कथं पुनरत्रानाश्रयस्यासम्बन्धस्य संवेद्यत्वम्? किमत्र सम्बन्धान्तरेण, संवेद्यतैव हि सम्बन्धः। तथा च सत्यप्याश्र-यत्वे गुणं प्रति द्रव्यस्य न संवेद्यता। यदि सम्बन्धान्तरापेक्षा, अनव

---

१. निराकारायाः प्रत्यक्षता इति ख. पु.

( ) कुण्डलान्तर्गतो भागोऽधिकः ख, पुस्तके।

तयैव हि संवेद्यतामवगच्छामो, न विषयतया। केन चोक्तं न संवेद्यतया संवेद्यताऽवगम्यत इति ? किन्तु ? संविदः प्रत्यक्षत्वात्तस्याश्च ज्ञानात्मकत्वाच्छब्दादिरूपता तस्यैवेति मन्यामहे । को हि नाम द्वयोः प्रत्यक्षतामव कल्पयति संविदः शब्दादेश्च । तस्मात्संविद्रूपमेवेदं शब्दादिजातमिति स्थितिः, न बाह्यं किञ्चनास्तीति ।

ननु च–अयथार्था संवित् प्राप्नोति। शब्दाद्याकारत्वे हि संविदो ग्राह्यग्राहकसंवेदनं नोपपद्यते । तस्मात्कल्पना सेति कल्पनीयम् । न च सर्वलोकावगम्योऽर्थः कल्पनेति युक्तम् । न चार्थान्तरानुसन्धानाननुविद्धं क्वचित्कल्पनाशब्दाभिलपनीयं लोके दृष्टम् । तस्माद्वरमुभयोः प्रत्यक्षता, न पुनरवगतेरपलापः । संविदेव हि तदा हीयेत । कस्येयं शब्दादिरूपता ? युक्तं यदि ग्राह्यग्राहकसंवेदनमाकारान्तरेण स्यात्। न चाकारान्तरमुपलभामहे। नीलाद्याकारमेव ह्युभयं प्रतिभाति । एकाकारं चोभयप्रतिभानं किमन्यदतः प्रतिभानात्। तदिदमुक्तम्–

**स्था स्यात् । पूर्वोक्तमभिप्रायं विवृणोति**—केन चोक्तमित्यादिना । को हि नाम द्वयोः प्रत्यक्षतामवकल्पयति—संविदः शब्दादेश्च । तस्मात्संविद्रूपमेवेदं शब्दादिजातमिति स्थितिः, न बाह्यं किं चनास्तीति ।

ननु चायथार्था संवित्प्राप्नोति । शब्दाद्याकारत्वे हि संविदो ग्राह्यग्राहकसंवेदनं नोपपद्यते । **एकत्वात् संविदो ग्राह्यग्राहकत्वं नोपपद्यत इत्यर्थः** । तस्मात्कल्पना सेति कल्पनीयम् । **नान्यथोभयप्रतिभासोपपत्तिः** । न च सर्वलोकावगम्योऽर्थः कल्पनेति युक्तं वक्तुम् । **बाधकत्वात् कारणदोषाभावाच्च** । न चार्थान्तरानुसन्धानाननुविद्धं कल्पनाशब्दाभिलपनीयं लोके दृष्टं, **यथा—निर्विकल्पकमेव । न चार्थान्तरेण योजनाऽस्ति, यथा शुक्तिकारजतादिज्ञाने**। तस्माद्वरमुभयोः **संविदः शब्दादेश्च** प्रत्यक्षता, न पुनरवगतेरपलापः, **दृष्टविरोधप्रसङ्गादिति भावः** । संविदेव हि तदा हीयेत, कस्येयं शब्दादिरूपता । **अत्र**(१) **समाधिः**—युक्तं यदि ग्राह्यग्राहकसंवेदनमाकारान्तरेण स्यात् । अस्यार्थः—**यदि ग्राह्यस्य ज्ञानस्य संविदश्चाकारात्रितयमेव भासेत, तदा त्रितयमपि प्रत्यक्षं स्यात्** । न चाकारान्तरमुपलभामहे । नीलाद्याकारमेव ह्युभयं प्रतिभाति । एकाकारं च यदुभयप्रतिभानं **तत्** किमन्यदतः प्रतिभानात्, **प्रतिभानमात्रमेव**

१. समर्थनम् इति ख० पु०

(१)"अर्थज्ञानयोराकारभेदं नोपलभामहे" इति। प्रत्यक्षा च नो बुद्धिरित्येतदुक्तं भवति- प्रत्यक्षा च नः संविदिति। प्रत्यक्षश्चायं नीलाद्याकारः। अतस्तदाकारेयं संविदुभयथा प्रतिभाति। तस्मादर्थशून्येयं संविदिति सिद्धम्। अतस्तत्संप्रयोगात्तत्संप्रत्यय इति प्रलापोऽयम्। किन्निमित्तं पुनरुभयथा प्रतिभानम्? आकारभेदं नोपलभामहे इति प्रत्युक्तम्। प्रतिभानकारणं तु प्रतिभानदर्श-

---

भवेदित्यर्थः। तदिदमुक्तमर्थज्ञानयोराकारभेदं नोपलभामहे इति। प्रत्यक्षा च नो बुद्धिरिति। मीमांसकस्य बुद्धेरनुमेयत्वादसिद्धमेवेति मत्वाऽन्यथा व्याचष्टे—प्रत्यक्षा च नो बुद्धिरित्येतदुक्तं भवति—प्रत्यक्षा च नस्संविदिति।

यदा प्रत्यक्षा संवित् तदा निराकारायाः प्रत्यक्षत्वानुपपत्तेर्नीलाद्याकारोऽपि तस्या एवेति। तदाह—प्रत्यक्षश्चायमित्यादि। शेषं सुगमम्। तस्मादर्थशून्यः प्रत्ययः। अत्रायं पूर्वपक्षसंक्षेपः—संवित्तावत्प्रत्यक्षा। तत्र यदि ज्ञानमपरमर्थश्चापरोऽभ्युपगम्येत तदात्र त्रयाणामाकारास्त्रयो भवेयुः। एकश्चायमाकारो नीलादिः प्रथते। स चेदर्थस्य ज्ञानस्य वा(२) आस्थीयेत, तदा निराकारा संविदप्रत्यक्षा स्यात्। तदप्रत्यक्षत्वे चार्थो ज्ञानं च द्वयमसंवेद्यमापद्येत। संविदि चेदयमाकारो निवेशितः, अपह्नुते तर्हि भवेतामर्थज्ञाने। तयोराकारविरहे संवेद्यत्वानुपपत्तेः, असंवेद्यस्य च दुरभ्युपगमा सत्तेति।

यत्पुनः कीर्तिनोदितम्–यदि नीलाद्याकारा संविन्नाभ्युपेयेत तदा प्रतिकर्मविभागो न स्यात्। न हि निराकारं संवित्तिमात्रं नीलसंविदिति शक्यावगमम्। तदुक्तं–न हि संवित्तिसत्तयैव तद्वेदना युक्ता, तस्यास्सर्वत्राविशेषादविशेषप्रसङ्गात्। तां तु सारूप्यमाविशत् सरूपयितुं घटयेदिति। साकारा चेत् संवित्, ऊरीकृतोऽर्थः। इदानीं तदतिरेकी विद्यत इति गलितसारेयं कथा। तदङ्गीकारे प्रमाणाभावात्। आकारवैचित्र्यं तत् संविदामन्यथाऽनुपपद्यमानं प्रमाणविशेषादप्रमाणमिति (३)कल्पितम्। न समनन्तरप्रत्ययप्रभावादपि तदुपपत्तेः। तदुक्तम्—

नियमं यदि च ब्रूयात्प्रत्ययात्समनन्तरादिति।

दृष्टश्चायं समनन्तरप्रत्ययस्य महिमा स्वप्नादिषु बाह्यार्थविरहेऽपि

---

१. शा०भा०पृ. ७.पं.१९ २. स्यात् इति ख. पु. ३. कल्प्यते इति ख. पु.

नादेवास्तीत्यवगन्तव्यम् । सा चेयं वासवाऽनादिकालीनेत्युक्तं शून्यवादिभिः ।

---

विविधाकारसंवेदनोदयादिषु विवादात् ।

तथा यदपरं कीर्त्तिनाऽभिहितम्—यदि संविदो नीलादिकं भिद्येत तदा किमिति संविदं विनापि नावभासते ? । न हि भिन्नयोर्घटपटयोस्सहोपलम्भो नियतः कदाचिदसहाप्युपलम्भो भवेत् । न हि संविदं विना कस्यां चिद्दशायामर्थः प्रकाशते । तस्मादर्थतद्धियोरभेद इति । तदुक्तम्—

सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ॥ इति ॥

तथा संविदतिरेकी प्रकाश इति नोपपद्यते, जडस्य प्रकाशायोगादिति । ततः किमिति नोपन्यस्तम् ? किमत्र पृच्छ्यते ? अनुपन्यसनीयमेवेदं, पूर्वपक्षानर्हात् । तथा हि-प्रतिकर्मविभागो विनाऽप्यर्थाकारतां घटत एव । विशिष्टार्थसम्बन्धित्वेनैव फलभूतायाः संविदो निराकाराया अपि स्फुरणात् व्यतिरिक्त एवार्थः संविदो विशेषमावहतीति(१)सर्वस्य संवेद्यम् । किञ्च यदि यदाकारं यतश्च संवेदनमुत्पद्यते तदालम्बनम्, तर्हि धारावाहिकविज्ञानानां पूर्वं पूर्वमालम्बनमुत्तरोत्तरस्य स्यात् , उत्पादकत्वात्स्वरूपत्वाच्च । तदुक्तं कीर्त्तिनैव--

"तत्सारूप्यतदुत्पत्ती यदि संवेद्यलक्षणम् ।
संवेद्यस्यासमानार्थविज्ञानं समनन्तरमिति" ॥

तथा--

"सहोपलम्भनियमोऽपि विचारणीय एव । किं संवित्संवेद्यं च सहैवोपलभ्यते यतः तस्मादभेद इति । तदिदमसिद्धम् । न हि संविदोऽर्थस्य वाऽपर उपलम्भोऽस्ति । अथार्थस्य स एवोपलम्भो या संवित्संविदोऽपि नापर उपलम्भोऽस्ति, स्वयमुपलम्भरूपत्वात् । अतोऽर्थस्य संविदस्स एवोपलम्भो भेदेऽनुपपद्यमानोऽभेदं साधयती"ति । तदपि नोपपद्यते, भेदेऽप्युपपत्तेः । भिन्नस्यापि हि नीलादेः सम्बन्धिनी संवित्स्वयं प्रकाशरूपत्वान्न प्रकाशान्तरमपेक्षतेति काऽनुपपत्तिः ? अतोऽयमहेतुः ।

यच्चेदमुच्यते-यदि भिन्नोऽर्थः तदा संविदं विनापि किमिति न

---

१. सर्वस्वसंवेद्यम् ।

उच्यते-उभयत्र प्रतिभानं नीलपीतादावसिद्धम् । ग्राह्यतयैव तत्प्रतिभाति, न ग्राहकतया । किन्तु ग्राहकं ग्राहकमित्येव मनुते, न नीलं पीतमिति वा । तदिदमुक्तं-(१)"स हि बहिर्देशस-

---

भासत इति । तदिदं बालजल्पितमिव प्रतिभाति । किमिदं संविद्व्यतिरिक्तं भासमानं नाम ? यदसत्यां संविदि किमिति न भवतीति परं प्रत्याशङ्क्यते । संविदेव भासनं, तां च विना भासमानं नास्त्येव । न हि संविदोऽपरा संविदस्तीति । तथा जडस्यापि सम्बन्धिनी संविद्विरुद्धा । न चाजडस्य संविदपेक्षत्वमस्ति । तस्मादतिपेलवमिदं सकलमेव कीर्त्तिना भाषितमिति नोपन्यस्तं टीकाकारेणेत्यनवद्यम् ।

उच्यते-उभयत्र प्रतिभानमित्यादिना सिद्धान्तमुपक्रमते । तत्र चायमाशयः—संविदर्थश्च द्वयं तावत्प्रत्यक्षं न तु ज्ञानम् । तत्र यद्यप्येक आकारः प्रतिभाति तथापि न संविदद्वैतम् । (२)अर्थस्य संवित्तेर्भेदेनावभासनात् । न च भेदो मिथ्येति युक्तम् । बाधकारणदोषाभावेऽपि मिथ्यात्वेऽभ्युपगम्यमानेऽतिप्रसङ्गदोष(३)समासात । न च वाच्यं—नीलाद्याकारातिरेकिणी निराकारा संवित् कथमध्यक्षेति । तस्याः फलमात्ररूपत्वात् । न फलस्य रूपान्तरापेक्षा । अपेक्षायां फलत्वानुपपत्तेः । कथमिदानीं ज्ञानसिद्धिः ? उच्यते—फलभूतायाः संविदः कार्यरूपत्वात् कार्यस्य च कारणमन्तरेणानुपपत्तेर्नित्यकार्योदयापत्त्या चात्मानः स्थिरस्य कारणत्वे निरस्ते(४)कादाचित्कं ज्ञानमनुमीयते ।

ननु--किं रूपं तदनुमीयताम् ? तत्र नीलादिकमेव तदीयं रूपं भवितुमर्हति। तदतिरेकिणोऽपरस्याभावात् । अविशेषज्ञस्य चोद्यमेतत् । न ह्यनुमेयानां रूपान्तरोपलब्धिरस्ति । सन्मात्रग्राह्यनुमानम् । तस्मादर्थालम्बनता सिद्धा प्रत्ययानामिति । उभयत्र प्रतिभानं ग्राह्यग्राहकाकारप्रतिभानं नीलपीतादावसिद्धम् । यदि पुनर्नीलादिकं ग्राहकात्मकं ज्ञानरूपं प्रतीयेत तदा विज्ञानविषयापि प्रत्यक्षा संवित् तदा विज्ञानमेव नीलात्मकं स्यात् । न त्वेतदस्ति। ग्राह्यतयैव नीलादिकं प्रतिभाति, न ग्राहकतया ज्ञानरूपतया । ननु--यदि ग्राहकं नीलादिरूपं न भवति किंरूपं तदित्यत्राह--किन्तु ग्राहकमित्येव मनुते युक्त्या कलयति । युक्त्या कलपनं मननं, ग्राहकैकरूपं ज्ञानमनुमीयत इत्यर्थः । तदिदमुक्तमर्थज्ञानयोरन्यत्वं-स हि

---

१. शा० भा० पृ. ७. पं. २२ २. तयार्थस्य इति क. पु.

३. समासक्तेः इति ख० पु० ४. कदाचित् ज्ञानं कल्प्यते इति. क० पु०

**म्बद्धः प्रत्यक्षमुपलभ्यत" इति । "अर्थविषया हि प्रत्यक्षा बुद्धिः न(१) बुद्धिविषये"ति ग्राह्यतयैव रूपप्रतिभानं दर्शयति । ग्राहकप्रतिभानं तु न रूपविषयम् , किं तर्हि ? ज्ञानविषयम् ।**

**ननु च रूपान्तरमेव(रेणैव) नोपपद्यत इत्युक्तम् । कथमत्र विषयान्तरोपन्यासः ? न हि, प्रत्यक्षवादिन एष दोषः । आनुमानिकज्ञानवादिनस्तु नायं पर्यनुयोगः । नाप्यनुमानाद्रूपग्रहणं, सन्मात्रग्राह्यनुमानं भवति ।**

**ननु च संवित्प्रत्यक्षेत्युक्तम् । अन्या च संवित् अन्यत्संवेद्यम् । द्वयोरपि प्रत्यक्षत्वे रूपद्वयोपलब्ध्या भवितव्यम् । न चासावस्ति । तस्मात्स एवायं विषयापलापो न्याय्यतां प्रतिपद्यते । अविवेकोऽयमायुष्मतः । न हि फले रूपान्तरमिष्यते । रूपान्तरसंवित्तौ हि फलद्व-**

---

बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यत इति । **कथं पुनरन्यत्वम ? तत्राह**—अर्थविषया हि प्रत्यक्षा बुद्धिर्न बुद्धिविषयेति ग्राह्यतयैव रूपप्रतिभानं दर्शयति । **न च ज्ञानमप्यनुमीयमानं नीलादिरूपमनुमीयते तदाह**—ग्राहकप्रतिभानं तु न रूपविषयं, किं तर्हि ? ज्ञानविषयम् ।

ननु च रूपान्तरमेव(२)नोपपद्यते इत्युक्तम् । **तेन नीलादिरूपमेव ज्ञानं बलादापद्यत इति** कथमत्र विषयान्तरोपन्यासः ? **नीलादिप्रतिभानं ग्राह्यविषयम, ग्राहकप्रतिभानं तु ज्ञानविषयमिति विषयान्तरोपन्यासो न घटते । (३)उभयप्रत्यक्षवादिनो ह्ययं दोष इति पूर्वमेव व्याख्यानम् ।**

ननु च संवित्प्रत्यक्षेत्युक्तम् । **ततः किमित्यत्राह**—अन्या च संविदन्यत् संवेद्यमिति **भवान् मन्यते । तथापि किमित्यत्राह**—द्वयोश्च **संवित्संवेद्ययोः प्रत्यक्षत्वे** रूपद्वयोपलब्ध्या भवितव्यम् , न चासौ **रूपद्वयोपलब्धिरस्ति ।** तस्मात्स एवायं विषयापलापो न्याय्यता(४)मापद्यत **इति ।** अस्यार्थः—**पुनरपि सिद्धमद्वैतं ज्ञानस्यापि तदानीं संविदतिरिक्तस्यानुपपत्तेः । सर्वसंविदां स्वात्ममात्रपर्यवसायिनीनां विषयान्तरासिद्धावव्यापारात् संविदायत्तत्वाच्च सर्वसिद्धीनामिति ।** अविवेकोऽयमायुष्मतः । न हि फले रूपान्तरमिष्यते । **तेन नीरूपा संवित्प्रत्यक्षेत्यर्थः । कस्मात्पुना रूपान्तरं नेष्यते ? तत्राह**—

---

१. न बुद्ध्यन्तरविषया इति मुद्रितभाष्यपुस्तकपाठः ।

२. नोपलभ्यते. इति ख० पु० पा०      ३. उभयं प्रत्यक्षं" इति. क० पु०

४. प्रतिपद्यत इति मूलपुस्तके पा०

यापत्तिः । एकसम्वेद्यविषयैव ह्येका संवित् । न सा वेद्यद्वयविषया । किमसंवेद्यैव संवित् ? न ब्रूमो न संवेद्या संविदिति । संवित्तयैव हि संवित्संवेद्या न संवेद्यतया ।

केयं वाचोयुक्तिः संवेद्या न संवेद्येति ? इयमियं वाचोयुक्तिः । नास्याः कर्मभावो विद्यते इत्यर्थः । कर्म च संवेद्याभिधेयं न संवित् । तस्मान्न पृथक् संवेद्यतया ग्रहीतुं शक्यते । न चासंवेद्यैव संवित् । तन्मूलत्वात्सर्वभावानां संवेद्यभावस्य । किं तर्ह्यत्रानुमानिकम् ? फलमेव हि प्रमाणमिति प्रमाणविदो मन्यन्ते । किमिति मन्यन्ते न पुनः फलमेवेति स्थितोऽभिप्रायः ।

---

रूपान्तरसंवित्तौ हि फलद्वयापत्तिः **स्यात् । नीलादेः संवेद्यस्यैकं तावत्फलम् । तथा संविदोऽपि यद्यपरं फलातिरेकि रूपान्तरं स्यात् तदा फलान्तरं भवेत् । न चैतदस्ति,** एकसंवेद्यविषयैव ह्येका संविन्न सा वेद्यद्वयविषया । किमसंवेद्यैव संविदिति—**यद्येकमेव नीलादिकं संवेद्यं एवं तर्हि किमसंवेद्यैव संवित् । तथा च सति कथं शशविषाणवदेवासंवेद्यायाः सत्ताभ्युपगम इति हृदि स्थितम् ।** न ब्रूमो न संवित् संवेद्येति संवित्तयैव हि संवित्संवेद्या न संवेद्यतया ।

केयं वाचोयुक्तिः ? संवेद्या न संवेद्येति । इयमियं वाचो युक्तिः—नास्याः कर्मभावो विद्यत इति । कर्म च संवेद्याभिधेयं न संवित् , स्वयं **प्रकाशरूपत्वात् संविदो न पराधीनप्रकाश इति न कर्मता । न च प्रकाशाभावः । प्रकाशमानं चास्तीत्युच्यते, न पुनः कर्मतैव विवक्षिता । प्रत्यक्षशब्दोऽपि संविदामपरोक्षतया, न पुनरिन्द्रियज्ञानवेद्यतयैवेति मन्तव्यम् ।** न चासंवेद्यैव संविदिति । **न चाप्रकाशरूपत्यर्थः।** तन्मूलत्वात्संवेद्यभावस्य सर्वभावनाम् । **न हि संवित्तावप्रकाशमानायां(१)संविदितमिदमिति भवतीति ।** किं तर्ह्यत्रानुमानिकमिति । **यदि संवित् प्रत्यक्षा । किमपरमनुमेयम् ? न च वाच्यं फलभूता संवित् तत्र कारणं प्रमाणरूपं फलजनकत्व(२)मुन्नेयमिति ।** फलमेव हि **यस्मा**त्प्रमाणमिति प्रमाणविदो मन्यन्ते । किमिति मन्यन्ते ? । न पुनः फलमेवेति स्थितोऽभिप्रायः । **एकस्मिन् वस्तुनि किमिति विभाग आश्रित इत्यर्थः । उत्तरम्—** एवं हि लौकिको व्यवहारः **इति । तेन लौकिकव्यवहारानुसारित्वादुभय-**

---

१. 'संवेद्यमिद'मिति ख. पुस्तके । २. अनुमेयं, इति ख. पु. ।

एवं हि लौकिको व्यवहारः । किमिदं लौकिको व्यवहार इति । आकारद्वयं हि लौकिकाः प्रतिपद्यन्ते इत्यर्थः । सिद्धं तर्ह्यर्थद्वयम् । विज्ञानस्यासंवेद्यत्वात्, अर्थस्य च संवेद्यत्वात् ।

किमसम्वेद्यमेव विज्ञानम् ? बाढमसम्वेद्यम्, न त्वप्रमेयम् । कः पुनः प्रमेयसम्वेद्ययोर्विशेष. ? यत्र हि विषयस्य स्वरूपं परिच्छिद्यते तत्सम्वेद्यमित्युच्यते । अतस्सम्वेदनं प्रत्यक्षमिति प्रमाणविदः । असम्वेदना च प्रमितिज्ञाने आकारान्तराग्रहणात् । तस्मात् ज्ञानं प्रत्यक्षमित्ययुक्तम् । क्षणिकत्वच्चास्य प्रत्यक्षता न सं-

---

मङ्गीक्रियते इति । प्रत्युत्तरम्-किमिदं लौकिको व्यवहार इति । प्रतिवचनमिदम्—आकारद्वयं लौकिकाः प्रतिपद्यन्त इत्यर्थः । एतदुक्तं भवति—लौकिकाः कार्यकारणरूपेणाकारद्वयं प्रतिपद्यन्ते, न पुनरेकतां कार्यकारणयोर्मन्यन्त इति । (१)अस्योपरि ब्रूते—सिद्धं तर्ह्यर्थद्वयं संविद्व्यतिरिक्तम् । एकस्तावदर्थो ज्ञानरूपः, अपरश्च नीलादिरूपः। कथं पुनरर्थस्य ज्ञानस्य च भेदः ? तत्राह—विज्ञानस्यासम्वेद्यत्वादर्थस्य च सम्वेद्यत्वादिति । एतदुक्तं भवति—प्रत्यक्षोऽर्थः, अनुमेयं ज्ञानम् । तेन तयोर्भेद इति ।

सम्वेद्यशब्दस्यार्थं विवेकेनाजानन् पृच्छति--किमसम्वेद्यमेव विज्ञानमिति । प्रमेयं सम्वेद्यं चैकं मन्यमानो ब्रवीति-बाढमसम्वेद्य, न त्वप्रमेयम् । कः पुनः प्रमेयसम्वेद्ययोर्विशेषः ? यत्र हि विषयस्य स्वरूपं परिच्छिद्यते तत्सम्वेद्यमित्युच्यते । अतः सम्वेदनं प्रत्यक्षमिति प्रमाणविदः । यतो यत्र स्वरूपं परिच्छिद्यते तत्सम्वेद्यमित्युच्यते, ततः स्वरूपपरिच्छेदः सम्वेदनमुच्यते । अतः स्वस्य प्रतिपत्तुः सम्वेदनं प्रत्यक्षमित्युच्यते । स्वरूपग्रहणं हि प्रत्यक्षं विहायान्यदतो नास्तीति स्वरूपग्रहणं प्रत्यक्षम् । स्वरूपग्रहणं च सम्वेदनम् । अतस्सिद्धं सम्वेदन प्रत्यक्षमिति । ज्ञानस्येदानीं प्रमेयतामसम्वेद्यतां चाह—असंवेदना च प्रमितिज्ञाने आकान्तराग्रहणात् । स्वरूपाग्रहणात् ज्ञानमप्रत्यक्षं अनुमेयत्वाच्च प्रमेयमिति । तस्मात् स्वरूपाग्रहणात् ज्ञान प्रत्यक्षमित्ययुक्तम् । क्षणिकत्वाच्चास्य प्रत्यक्षता न सम्भवति, प्रमाणफलयोरसाम्प्रतत्वात् । अस्यार्थः—ज्ञानं तावत्स्वरसभङ्गुरम् । तेन (२)ज्ञानं ज्ञानान्तरोदयकाले विनष्टं न प्रत्यक्षम्, अविद्यमानत्वात् । विद्यमानविषयं च प्रत्यक्षम् । न चाविद्यमानविषयमपि प्रत्यक्षमस्ति जात्यादिष्विति शङ्कनी

---

१. अस्योपपत्तिं ब्रूते, इति ख. पुस्तके । २. ज्ञानं इति नास्ति ख. पुस्तके ।

भवति । प्रमाणफलयोसांप्रतत्वात् । तदिदमाह–(१)"क्षणिका हि सा न बुद्ध्यन्तरकालमवस्थास्यत" इति

अथायमभिप्रायः–स्वयं प्रमाणरूपत्वात् न प्रमाणान्तरमपेक्षते ज्ञानमिति । तदुक्तं—(२)"उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्येते"ति । सत्यं प्रमाणं प्रमाणान्तरं नापेक्षते प्रमितौ । न च वयं प्रमाणतयैव विजानीमः, तद्धेतुत्वाद्विज्ञानस्य । न च तदवस्थं ज्ञानं ज्ञेयतया (तदा) ज्ञानान्तरस्यापि वदामः । किन्तु तदवस्था तावदस्तीत्यनुमानस्य विषयः । न ह्यसत्यामवस्थायामवस्थावतोऽस्तित्वं शक्यते ज्ञातुम् । तदिदमुक्तम्-(३)"न ह्यज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते, ज्ञाते चानुमानादवगच्छति । तत्र यौगपद्यमनुपपन्न"मिति ।

ननु च ज्ञातमिति प्रमेयमनुस्मरन्ति प्रमाणविदः । सत्यं ज्ञातं

---

यम् । प्रमाणफलयो(४)रसम्प्रवृत्तत्वादित्युक्तं वृत्तिकारग्रन्थे । तदिदमाह भाष्यकारः—क्षणिका हि सा न बुद्ध्यन्तरकालमवस्थास्यत इति ।

अथायमभिप्रायः—स्वयं प्रमाणरूपत्वान्न प्रमाणान्तरमपेक्षते ज्ञानमिति । न कारकं कारकान्तरमपेक्षते, न(५)ह्युदकाहरणे घटो घटान्तरमपेक्षते । तदुक्तं—उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्येतेति । सत्यं प्रमाणं प्रमाणान्तरं नापेक्षते (६)प्रमितावर्थपरिच्छेदे । किन्तु स्वरूपपरिच्छेदे प्रमाणमपि प्रमाणान्तरमपेक्षत एव । न च वयमिति परिहारान्तरम् । यदि हि प्रमितिकारणतयैव प्रमाणं विजानीमः तदा यावत् विज्ञानं विज्ञानान्तरं नापेक्षेत । न चैवम् , तद्धेतुत्वात्, प्रतिपत्तिहेतुत्वाद्विज्ञानस्य । हेतोश्च बीजादेः जायमानस्य ज्ञानापेक्षा दृष्टैव । न च तदवस्थं ज्ञानं ज्ञेयतया ज्ञानान्तरस्यापि वदामः । न च कार्यजननावस्थं ज्ञानं ज्ञानेन ज्ञायते, किन्त्वतिवृत्तजनकभावम् , किन्तु तदवस्था तावदस्तीत्यनुमानस्य विषयः । कस्मात्पुनस्तदवस्थं न ज्ञायते इत्यत्राह—न ह्यसत्यामवस्थायामवस्थावतोऽस्तित्वं शक्यते ज्ञातुम् । अतिक्रान्तत्वादवस्थायाः । तदिदमुक्तम्—न ह्यज्ञात इत्यादि ।

ननु च ज्ञातमिति प्रमेयमनुस्मरन्ति प्रमाणविदः । अस्यार्थः—ज्ञातमिति स्मर-

---

१. शा. भा. पृ. ७. पं. २३.
२. शा. भा. पृ. ७. पं. २४.
३. शा. भा. पृ. ७. पं. २५.
४. असाम्प्रतत्वात् इति. ख.पु. ।
५. उदकधारण इति क. पु. ।
६. प्रतिपत्तौ इति ख. पु. ।

स्मरन्ति, न तु ज्ञातमिति । तदुक्तं (१)"सत्यं पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते" इति । ननु चेदं लोकविरुद्धम्—ज्ञातो ह्यर्थ इति (स्मरणं) व्यपदिशन्ति, न घटोऽयमिति । सत्यं विरुद्धं यदि सर्वदैव व्यपदेशः स्यात् । (२)"भवति हि कदाचिदेतत यत् ज्ञातोऽर्थस्सन्नज्ञात इत्युच्यते" । यत्र हि ज्ञात इति स्मृतिः सा प्रमाणद्वयव्यापारजातत्वात् । तस्मात् विवेकशून्यमिदं वचः-स्मृतेरुत्तरकालं चेति ।

किञ्च उभयोः प्रत्यक्षत्वेऽर्थेन ज्ञानस्य व्यपदेशो नोपपद्येत रूपस्पर्शयोरिव । न चार्थव्यपेदशमन्तरेण बुद्धेरूपोपलम्भनम् । तस्मान्न बुद्धिविषयं प्रत्यक्षम् । अर्थविषयं हि तत् । अतस्सिद्धमानु-

---

णमज्ञाते ज्ञाने नोपपद्यते । तेन ज्ञानं प्रत्यक्षम् । सत्यं ज्ञातं स्मरन्ति, **न तु** ज्ञातमिति, **ज्ञातं प्रमेयं स्वरूपेण स्मरन्ति, न पुनर्ज्ञानविशिष्टम्** । तदुक्तं—सत्यं पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायते इति **भाष्येण** । अत्राह—ननु चेदं लोकविरुद्धं ज्ञातो ह्यर्थ इति व्यपदिशन्ति, न घटोऽयमिति । **ज्ञात इति व्यपदेशो ज्ञानविशिष्टेऽवकल्पते** । सत्यं विरुध्यते यदि सर्वदैवायं व्यपदेशः स्यात् । भवति हि कदाचित् यत् ज्ञातोऽर्थः(३)सन्नज्ञात इति । अत्र चेदमभिप्रेतम्—**यदि प्रत्यक्षं ज्ञानं स्यात् तदा सर्वदैव ज्ञातत्वात् ज्ञानस्य ज्ञात इत्येव व्यपदेशः स्यात् । आनुमानिकत्वे तु ज्ञानस्य कदाचिल्लिङ्गाननुसन्धानात् तदज्ञात्वा भवेदव्यपदेशः । कदाचिल्लिङ्गानुसन्धानात् ज्ञानं ज्ञात्वा भवेद्व्यपदेश इत्युपपन्नम् । तदाह**—यत्र हि ज्ञात इति **स्मृतिः सा प्रत्यक्षानुमानप्रमाणद्वयव्यापारजा** । तस्माद्विवेकशून्यं वचो **(४)दिग्नागस्य—**

**स्मृतेरुत्तरकालं च न ह्यसावविभावित इति ।**

किं च उभयोर**र्थज्ञानयोः** प्रत्यक्षत्वेऽर्थेन ज्ञानस्य व्यपदेशो **घटज्ञानमित्यादिको** नोपपद्यते रूपस्पर्शयोरिव । **न हि रूपव्यपदेशेन स्पर्शः प्रतीयते** । न चार्थव्यपदेशमन्तरेण बुद्धेरूपोपलम्भनम् । तस्मान्न बुद्धिविषयं प्रत्यक्षम्, अर्थविषयं हि तदिति । अतः सिद्धमानुमानिकत्वं बुद्धेः फलतः **सम्विद्रूपात्कादाचित्कस्य कारणं विनाऽनुपपद्यमानात्** । काममेकरूपत्व **इत्यादि भाष्यम् । तत्रेदमुपपा-**

---

१. शा. भा. पृ. ७. पं. २८. २. शा. भा. पृ. ९. पं. २९.

३. सन्न ज्ञायते इति ख. पु. ।

४. दिङ्नागोऽयं बौद्धसमयाचार्यो महापण्डित आसीत् । तस्य च समयः ३४५-४२५ ईसवीयः ।

मानिकत्वं बुद्धेः फलतः । यश्चासावविवेकः फलप्रमेययोः प्रमाणान्तराभावादतद्विषयो युक्तः । अतः प्रमाणापलाप एव न्याय्यो, न प्रमेयापलापः । (१)"अतः काममेकरूपत्वे बुद्धेरेवाभावो न त्वर्थस्य प्रत्यक्षस्य सतः"। न चैकरूप्यम् । निराकारामेव हि बुद्धिमनुमिमीमहे । साकारं चार्थं प्रत्यक्षमवगच्छामः । तस्मादर्थालम्बनः प्रत्ययः ।

किं पुनः कारणं तुल्ये फलापलापे प्रमाणस्यैवापलापो न त्वर्थस्य प्रमेयस्य? उभयोः फलायत्तत्वात् । मैवम्; उत्पत्तौ ह्युभयोः फलायत्तता, न पुनः प्रमितौ । कस्योत्पत्तौ? ज्ञापके हि फले प्रमेयमेव ज्ञेयम्, नोत्पाद्यम् । प्रमाणायत्ता च प्रमितिरिति उत्पत्तावित्यसम्बद्धम् । प्रमितौ हि क्रियाकारकत्वमङ्गीकृत्योत्पत्तिरुक्ता, नावगम्य-

---

दयति—एकरूपत्व इति । किमर्थमिदमुक्तम् । एवमर्थम्—यश्चायमविवेकः फलप्रमेययोः प्रमाणान्तराभावात् अतद्विषयो युक्तः । एकसंवित्संवेद्यत्वात् घटादेर्घटादिसंविदश्च परस्परं विवेको न गृह्यते । तेन संविदो घटादिव्यतिरिक्ताया एवा(२)पलापो युक्तः । अतः प्रमाणापलाप एव न्याय्यः अनुमानगम्यत्वात्तस्य फलाभावेऽनुमानानुपपत्तेः । अतः काममेकरूपत्वे बुद्धेरेवाभावो न त्वर्थस्य प्रत्यक्षस्येति ।

किं पुनः कारणं तुल्ये फलापलापे प्रमाणस्यैवापलापो न प्रमेयस्य ? उभयोः प्रमाणप्रमेययोः फलायत्तत्वात् प्रमितिनिबन्धनत्वात् । मैवम् ; उत्पत्तौ ह्युभयोः फलायत्तत्वं, न पुनः प्रमितौ । प्रमाणप्रमेययोः करणकर्मकारकयोः फलोत्पत्तिनिबन्धना कारकत्वोत्पत्तिः । प्रमितिस्तु प्रमेयस्य प्रत्यक्षतः फलनिरपेक्षा । प्रमाणस्य चानुमानिकत्वात् फलायत्तैवेति । इममर्थमजानन् पृच्छति—कस्योत्पत्तौ ? ज्ञापके हि फले ज्ञेयं प्रमेयमेव नोत्पाद्यम् । फलेन ज्ञापकेन ज्ञेयं प्रतीयते एव परं, नोत्पद्यते । ज्ञाने तु विपर्ययोऽपीति यावत् । प्रमाणायत्ता च प्रमितिः प्रमाणोत्पाद्यमेव हि फलमित्युत्पत्तावित्यसम्बद्धम् । उत्पत्तावुभयोस्तदायत्तत्वमित्यसम्बद्धमित्यर्थः । प्रमितौ हि क्रियाकारकत्वमङ्गीकृत्योत्पत्तिरुक्ता । प्रमित्यायत्ता प्रमाणप्रमेययोः कारकत्वोत्पत्तिरित्यर्थः । नावगम्यमानता(३)माश्रित्योत्पत्तिरुक्ता । नावग-

---

१. शा. भा. पृ. ८ पं. १.  २. अपह्नव इति ख. पु. ।

३. अङ्गीकृत्य इति. ख. पु.

मानताम् । ज्ञाने त्ववगम्यमानतापि फलायत्तैवेति युक्तम् ।

किञ्च ज्ञानमात्रवादे हि ज्ञानवासनयोरेव जन्यजनकभावो न ज्ञानस्य ज्ञानान्तरेण । अतस्तन्तुज्ञानोत्पादेऽपि पटज्ञानोत्पादो नोपपद्यते । (१)"दृष्टश्च नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः । इतरथा (हि) तन्तूपादानेऽपि कदाचिद्धटबुद्धिरविकलेन्द्रियस्य स्यात्" । तस्मान्न वासनानिबन्धनमेवेदं ज्ञानजालम् । किन्तर्हि ? अर्थनिबन्धनमिति स्थितम् । अत उपपन्नं प्रमाणलक्षणाभिधानम् ॥

(२)"अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसंनिकृष्टेऽर्थे बुद्धि"रिति । ज्ञातसम्बन्धस्येत्युच्यते । कस्य ज्ञातसम्बन्धस्य ? नन्वेकदेशस्य । नैतदुपपद्यते । दर्शनोपसर्जनत्वादेक-

---

तिरुत्पत्तिशब्देनोक्ता । यदि तथोच्यते तदा प्रमेयस्य तदायत्तता न स्यात्, फलानुमेयत्वात्प्रमेयस्य । ज्ञाने त्ववगम्यमानतापि फलायत्तैवेति युक्तमुक्तम् । अनुमेयत्वात् ज्ञानस्य फलायत्ता प्रमितिः । तेन फलापलापः प्रमाणापलाप एवापद्यते नार्थापलापः । अपि च नियतनिमित्तक इत्यादिभाष्यम् । तदयुक्तम्, ज्ञानमात्रवादेऽप्यर्थयोरिव ज्ञानयोरपि प्रतिनियतः कार्यकारणभावो भविष्यतीति ।

अत्रोत्तरं लिखति-किं च ज्ञानमात्रवादे हि ज्ञानवासनयोरेव जन्यजनकभावः, न ज्ञानस्य ज्ञानान्तरेण । अतस्तन्तुज्ञानोत्पादेऽपि पटज्ञानोत्पादो नोपपद्यते । दृष्टश्च नियतनिमित्तकस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः । इतरथा तन्तूपादानेऽपि कदाचित् घटबुद्धिरविकलेन्द्रियस्य स्यात् । वासनोद्बोधस्यानियतनिमित्तत्वात् । तस्मान्न वासनानिबन्धनमेवेदं ज्ञानजालं, किं तर्हि अर्थनिबन्धनमिति स्थितम् । अत उपपन्नं बहिरर्थस्य सद्भावादिन्द्रियार्थसन्निकर्षस्य सम्भवात् प्रत्यक्षस्य प्रमाणस्य लक्षणमिति ।

अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसंनिकृष्टेऽर्थे बुद्धिरित्यनुमानलक्षणमनुवदति व्याख्यातुम् । ज्ञातसम्बन्धस्येत्युच्यते कस्य ज्ञातसम्बन्धस्य ? । अस्यार्थः- ज्ञातसम्बन्धशब्देन कस्य निर्देश इति पृच्छति । नन्वेकदेशस्येत्युत्तरम् । एकदेशस्य ज्ञातसम्बन्धस्य दर्शनादित्यर्थः । नैतदुपपद्यते । दर्शनोपसर्जन-

---

१. शा. भा. पृ. ८. पं. ३. २. शा. भा. पृ. ८. पं. ८.

देशस्य । नह्युपसर्जनं पदं पदान्तरेण सम्बध्यते राजपुरुषवत् । न हि पुरुषसमुदाययोरनुपादानादेवासम्बन्धः । तस्मान्न विद्मः कस्य ज्ञातसम्बन्धस्येति । उच्यते—सम्बन्धापरिज्ञाननिबन्धनोऽयं व्यामोहः । कः पुनरसौ सम्बन्धः ? अयमसौ । अनुमानमेकदेशदर्शनादेकदेशान्तरेऽसंनिकृष्टेऽर्थे बुद्धिः । कस्यैकदेशस्य दर्शनात् ? ज्ञातसम्बन्धस्य ।

नन्वस्मिन्नपि सम्बन्ध एकदेशस्योपसर्जनता तदवस्थैव । उप-

---

त्वादेकदेशस्य । ज्ञातसम्बन्धशब्देन दर्शनं प्रत्युपसर्जनीभूत एकदेशो विशेष्टुं न शक्यते । कुतः ? । न ह्युपसर्जनं पदं पदान्तरेण सम्बध्यते राजपुरुषवत् । यथा राजपुरुषे राज्ञः पुरुषोपसर्जनीभूतस्य पदान्तरेण विशेषणं न भवति । न हि भवति ऋद्धस्य राजपुरुष इति । न हि पुरुषसमुदाययोरनुपादानादेवासम्बन्धः । अथोच्यते मा भूदेकदेशस्य ज्ञातसम्बन्धशब्देन निर्देशः । ज्ञातः सम्बन्धो येन स ज्ञातसम्बन्धः पुरुषो विशेष्यताम् । ज्ञातः सम्बन्धो यस्येति समुदायैकदेशयोर्वा लिङ्ग लिङ्गिनोर्विशेष्यताम् । तत्रैवं सम्बन्धो भवति—ज्ञातसम्बन्धस्य पुरुषस्य बुद्धिरिति । न च तत्रानुपात्तान्यपदार्थतादोषः । बुद्धिसम्बन्धेनैव बोद्धृपुरुषस्थानात् । तथा ज्ञातसम्बन्धस्य समुदायस्यैकदेशदर्शनात्तस्यैवैकदेशान्तर इति । अत्रापि चैकदेशाभ्यां समुदायोपस्थानादनुपात्तान्यपदार्थता नास्ति । समुदायश्चोपलक्षणम्, (१)एकदेश्यपि द्रष्टव्यः । (२)एतदपि न सम्भवति । गम्यमानस्यार्थस्य विशेषणादर्शनात् । तदाहुर्वार्त्तिककारमिश्राः—

गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम् ।
शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवदिति ॥

साधितमर्थमुपसंहरति—तस्मान्न विद्मः कस्य ज्ञातसम्बन्धस्येति ।

अत्र परिहरति—उच्यते—सम्बन्धापरिज्ञाननिबन्धनोऽयं व्यामोहः । कः पुनरसौः सम्बन्धः? (३)अयमसौ । अनुमानमेकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः । कस्यैकदेशस्य दर्शनात् ? ज्ञातसम्बन्धस्येति ।

नन्वास्मिन्नपि सम्बन्धे एकदेशस्योपसर्जनता तदवस्थैव । ततश्च कथं ज्ञातसंबन्धशब्देनैकदेशो विशेष्यते ? । यदि परं वाक्यभेदमात्रमधिकम् । अत्रोच्यते—पौरुषेये वाक्ये वाक्यभेदापत्तिरदोष इत्यसकृदुक्तम् । यत्तू-

१. एकदेशस्यापि इति ख. पु. २. तदेतदपि. इति क. पु.
३. अयमसौ इति नास्ति ख. पु.

सर्जनमिति नायं सम्बन्धहेतुः । आकाङ्क्षितपूरणसमर्थं च संबन्धितामापद्यते । अत्र चैकदेशदर्शनादित्युक्ते कस्यैकदेशस्येत्याकाङ्क्षा दर्शनस्य च दृश्यप्रधानत्वात्, तज्जन्यत्वात्वाच्चार्थान्तरबुद्धेः । अत एव चात्रोत्तरपदप्रधानता, अत्र पूर्वपदप्रधानतेति क्वचित्क्वाचित्स्थापितम् । तस्मात्प्रयोगसिद्ध्यर्थैवेयमुपसर्जनसंज्ञा । अर्थसम्बन्धे हि यस्मादर्थाकाङ्क्षा हेतुः नोपसर्जनताऽनुपसर्जनता वा, कस्य गुरुकुलमित्येवमादिषु दर्शनात् । उच्यते–व्याप्यं हि दृष्टं व्यापकं गमयति । ज्ञातसम्बन्धस्येति च न व्याप्य एषा षष्ठी । सम्बन्धिमा-

---

पसर्जनत्वेनासम्बन्ध इति, तत्राह–उपसर्जनमिति नेदं सम्बन्धे कारणम् । (१)तथाऽनुपसर्जनमित्यपि । येनानुपसर्जनत्वाभावे सम्बन्धो न स्यात् । किं तर्हि?कारणमिति । अत्राह–आकांक्षितपूरणसमर्थं च सम्बन्धितामापद्यते । तत्र चैकदेशदर्शनादित्युक्ते कस्यैकदेशस्येत्याकाङ्क्षा भवति । तेन सत्यामाकाङ्क्षायामाकाङ्क्षापूरणसमर्थं ज्ञातसम्बन्धपदमेकदेशविशेषणं भवति । कारणान्तरश्चाह–दर्शनस्य च दृश्यप्रधानत्वात्। उपसर्जनतापि चात्र नास्ति दर्शनं प्रत्येकदेशस्य प्रधानत्वात् । न च प्रधानतापि न निर्वहति, तज्जन्यत्वाच्चार्थान्तरबुद्धेः । एकदेशादेव दर्शनसंस्कृतादर्थाकारा बुद्धिरुपजायते। तस्मात्प्रधानभूत एकदेशः पदान्तरेण सम्बध्यते । यतश्च पूर्वपदार्थभूतोऽप्येकदेशः प्रधानं अत एव चात्रोत्तरपदार्थप्रधानता, अत्र पूर्वपदार्थप्रधानतेति क्वचित्क्वचित्स्थापितम् । अन्यथा सर्वत्र तत्प्रत्युत्तरपदार्थप्रधानतैव स्यात् । यस्मादेवमाकांक्षया सम्बन्धः तस्मात्प्रयोगसिध्यर्थैवेयमुपसर्जनसंज्ञा । (२)"प्रथमानिर्दिष्टं समास उपसर्जन"मिति येयमेकदेशस्योपसर्जनसंज्ञा पूर्वनिपातमात्रसिध्यर्था । (३)"उपसर्जनं पूर्व"मिति न पुनरुपसर्जनत्वेन पदान्तरासम्बन्धार्था । कस्मादित्याह–अर्थसम्बन्धे हि यस्मादर्थाकाङ्क्षैव हेतुर्नोपसर्जनताऽनुपसर्जनता वा । कस्य गुरुकुलमित्यादिषु उपसर्जनात्मकस्यापि दर्शनात् । कस्य गुरुकुलमित्याकाङ्क्षायां गुरुकुलविशेषणैर्देवदत्तादिभिः सम्बन्धदर्शनाद्देवदत्तस्येति । (४)तथाचोक्तम्–"अथ शब्दानुशासनम् । केषां शब्दानाम् ? लौकिकानां वैदिकानां चेति । उच्यते–व्याप्यं हि दृष्टं व्यापकं गमयति । ज्ञातसम्बन्धस्ये-

---

१. अत्रग्रन्थस्त्रुटितः ।　२. पा. सू. १-२-४३. ।　३. पा. सू. २-२-३०.

४. अथवोक्तम् इति क. पु. "शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्" इत्यधिकं ख० पुस्तके ।

त्रवचनाद्धि प्रातिपदिकात् षष्ठीं स्मरन्ति । उच्यते–सत्यं सम्बन्धिनि षष्ठी । अव्याप्ये हि वस्तुनि व्याप्यविवक्षायामेव यथा षष्ठी भवति तथा तत्र तत्र षष्ठ्यर्थं व्याख्यास्यामः । तथा च लौकिकाः ममायं, अयं पुनरन्यस्यापीति व्यपदिशन्ति ।

---

ति च न व्याप्ये षष्ठ्येषा । सम्बन्धिमात्रवचनाद्धि प्रातिपदिकात्षष्ठीं स्मरन्ति । **अनेन ज्ञातसबन्धपदमाकांक्षायामपि न विशेष्टुमेकदेशं शक्नोतीति चोदयति । यस्मात् ज्ञातः सम्बन्धो यस्येति षष्ठ्यर्थेऽयं बहुव्रीहिः । न च षष्ठी व्याप्य एव प्रतिसम्बन्धिव्याप्य एव सत्सम्बन्धाव्यभिचारिण्येव भवति येन षष्ठ्यर्थबहुव्रीहिबलेन प्रतिसम्बन्धिभूताग्न्यादिसम्बन्धाव्यभिचारी धूमादिरेव ज्ञातसम्बन्ध इत्युच्यते । यावता सम्बन्धिमात्रवचनादेव षष्ठी प्रतिसम्बन्धिना ऽव्याप्तादपि यथा–राज्ञः पुरुष इति । न हि राजा पुरुषाव्यभिचारी । तेन ज्ञातसम्बन्धशब्देन व्याप्य एवैकदेशोनोच्यते व्याप्यश्च गमको न व्यापकोऽपि । तेन लोकसिद्धज्ञापकाभिमतव्याप्यभूतकदेशसमर्पकत्वात् ज्ञातसम्बन्धशब्दो नैकदेशविशेषणम् । ज्ञातसम्बन्धस्येति विग्रहवाक्ये ज्ञातः सम्बन्धो यस्येति षष्ठी न व्याप्य एवेत्यर्थः।**

(१)सत्य सम्बन्धिनि षष्ठी । **व्याप्य एव तु सम्बन्धो भवतीतित्यनेन परिहरति । कथं पुनर्व्याप्य एव सम्बन्धी भवतीति ! उच्यते–सम्बन्धो यस्यास्ति स सम्बन्धी । यस्य च सम्बन्धोऽस्ति, नास्ति च, नासौ सबन्धीति व्यपादिश्यते । असाधारणेन हि व्यपदेशो भवेदिति । नन्वव्याप्येऽपि षष्ठी दृश्यते । अत्राह**–अव्याप्येऽपि हि वस्तुनि व्याप्यविवक्षायामेव यथा षष्ठी भवति तथा तत्र तत्र षष्ठ्यर्थं व्याख्यास्यामः । **तथा च लौकिकैर्ममायमिति व्यपदिश्यते । असाधारणेन हि व्यपदेशो भवेदिति षष्ठ्या सम्बन्धिव्याप्यतोच्यते ।** अयं पुनरन्यस्यापीति **प्रतिसम्बन्धिव्यापकतैवोच्यते । तेन षष्ठ्यर्थे बहुव्रीहिसमासाश्रयणेन ज्ञातसम्बन्धपदेन व्याप्य एवोच्यते, न व्यापक इति सिद्धम ।**

एतावत्त्वत्र वाच्यम्–**कः पुनरिह सम्बन्धोऽभिमत इति । तत्र तावत्केचि(२)त्तादात्म्योत्पत्ती एव सम्बन्धावनुमानकारणत्वेनाहुः । अत्र तादात्म्यात्–वृक्षोऽयं शिंशपात्वादिति,** तदुत्पत्तेरपि–**अग्निरत्र धूमवत्वादिति । तदिदमनुपपन्नम, एकार्थसमवायादिलक्षणादपि सम्बन्धाद्रसाद्रूपानुमानदर्शनात् ।**

---

१. उच्यते इत्यधिकं मूले । २. तादात्म्यतदुत्पत्ती इति ख. पु.

स्यान्मतम्—रसाद्रसहेतुरनुमीयते । प्रवृत्तसामर्थ्यरूपहेतुसहकारि च रसहेतू रसजनक इति । तथाविधकारणानुमानात्प्रवृत्तसामर्थ्यरूपहेतूपस्थापनात्तस्य च कार्याव्यभिचाराद्रसाद्रूपानुमानमिति । तदिदमङ्गीकृतपक्षरक्षणाक्षिप्तचेतसः कुशकाशावलम्बनमित्यनादरणीयम् । न ह्येवं लौकिकाः प्रतिपद्यन्ते । लौकिकं च प्रमाणं परीक्षकैरप्यनुसरणीयम् ।

यच्चेदं कारणात्कार्यानुमानम्, न तत्स्वभावहेतुकम् । भिन्नत्वात्कार्यकारणयोः । नापि हेतोः, कारणस्य कार्यत्वासम्भवात् । अपि च कार्यमपि कारणं कथमवगमयति ? तदव्यभिचारादिति चेत्—तर्ह्यन्यस्यापि यद्यव्यभिचारः स्यात् को गमकत्वमपहरेत ! न चान्यस्याव्यभिचारो न शक्यतेऽवगन्तुमित्युपरिष्टाल्लक्ष्यामः । न च तादात्म्ये गम्यगमकता घटते, एकस्य सकृत ज्ञातत्वाऽज्ञातत्वायोगात । उदाहरणमपि कल्पनानिरासात् वृक्षत्वशिंशपात्वयोर्भेदादनुपपन्नम ।

एतेन येऽपि (१)समवाय, संयोगे, कार्थसमवाय, कार्यकारणभाव, विरोधाख्यान् पञ्च सम्बन्धाननुमानाङ्गमाहुः तेऽपि निराकृताः । कृत्तिकोदयाद्रोहिण्या ह्यनुमाने पञ्चानामसम्भवात ।

यत्पुनर्नियमापरपर्यायां व्याप्तिमेव सम्बन्धान्तरभूतामनुमानकारणं मन्यन्ते, तदपि न सुन्दरम् । न हि स्वस्वामिभावादिव्यतिरिक्ता व्याप्तिर्नामाऽपरस्सम्बन्धोऽस्ति । किन्तु सम्बन्ध एव कार्यकारणभावादिः कस्य चिद्व्यापकः कस्यचित्तु नेति विशेषः । तत्र यस्य सम्बन्धेन व्याप्यता—यथा धूमस्य, तस्य गमकता । धूमो हि वह्निकार्यतया वह्निसंयोगितया(२)व्याप्यः । अग्निस्तु न सर्वदा धूमसम्बन्धीति गमकः । तेन कार्यकारणभावादय एव सम्बन्धा इहानुमानाङ्गत्वेनाभिमताः ।

ननु कथं व्याप्यता धूमादेरवसीयते ? । न तावत्प्रत्यक्षस्य तत्र सामर्थ्यम्, तस्य वर्तमानकालाकलितसन्निहितदेशावस्थितार्थमात्रविषयत्वात् । अव्यभिचारो हि व्याप्तिः । अव्यभिचारश्च सकलदेशव्यापित्वे सतीति । नचानुमानमत्र प्रमाणम्, स्वयमसिद्धत्वात् । नापि शाब्दम्, कार्यैकविषयत्वात् । नोपमानम्, सादृश्यमात्रविषयत्वात् ।

---

१. व्याप्तिः इति ख०पु० ।

२. इदं च वैशेषिकमतं "अस्येदं कार्यं, कारण, संयोगि विरोधि, समवायि, चेति लैङ्गिकम्" इति वैशेषिकसूत्रम् । (वै. द. अ.९ आ. २ सू. १)। एवमेव मुद्रितपुस्तकेषूपलभ्यते पाठः । परन्तु "अस्येदं कारणं कार्यं सम्बन्धि, कार्यसमवायि विरोधि चेति लैङ्गिकम्" इत्यनूदितं प्रकरणपञ्चिकायाम् । ( पृ० ६८ )

अर्थापत्तिस्तु सिद्धाव्यभिचारोपजीविनीति न तत्र क्रमते।

यदपि कोऽप्यपरिपक्वपदपङ्क्तिमया भाषया भाषते—मानसमिदमेवंविधं प्रत्यक्षमुदीयत इति। तदपि न निरासादरमर्हति। यतः सर्वत्र मनसो बहिरर्थेषु सहकारिनिरपेक्षस्य न प्रवृत्तिः। सहकारिविशेषापेक्षायां च तस्यैवासाधारणत्वात्तेनैव व्यपदेशात् (१)न प्रमाणान्तरापत्तिः। असाधारणकारणानुप्रवेशनिबन्धनं हि प्रमाणान्तरत्वम्। अन्यथा सर्वत्र मनसो व्यापारान्मानसमेकं प्रत्यक्षं स्यात्।

अत्र प्रमाणमालापरिमलविमलमतयः प्रतीकारमारभन्ते—यद्वस्तु येन प्रमाणेन सम्बन्धविशिष्टं गृह्यते, यथा प्रत्यक्षेण धूमोऽग्निसम्बन्धविशिष्टः, तस्य तेनैव प्रमाणेन सम्बन्धे व्याप्यताऽपि गम्यते। तथा हि—स्वसंवेदनं तावदिदं भवान् भावयतु—धूमोऽयमग्निसम्बद्ध इति। किमत्र देशकालाभ्यां धूम एव केवलमाकलितः (२)प्रतीयते? अथ(३)सम्बन्धतापि तस्य देशकालव्यवच्छिन्ना प्रतीयत इति। तत्र वयं तावदिदंतया सन्निहितवर्तमानात्मिकया लिङ्गिनो धर्मिभूतो धूमोऽवभातीति पश्यामः। न च धर्मभूतोऽग्निसम्बन्धोऽपि परविशेषणभावोपक्षीणस्वभावः। तत्र धूमसत्त्वैव केवलं कालान्तर(४)देशान्तरवृत्तौ प्रमाणान्तरमपेक्षते। अग्निसम्बन्धस्तु प्रमाणान्तरानुबन्धासिद्ध एव। तत एव च प्रतीतेऽपि विषये प्रमाणान्तरत्वे यत्नः करिष्यते।

नन्वेवं तर्हि वह्निरपि धूमसम्बन्धी लिङ्गं स्यात्। न स्यात्, एतद्सम्बन्धोऽपि तस्यास्तीति। धूमस्य च भविष्यतीति किमत्र प्रमाणम्। अत (५)स्तत्सम्बन्धव्यापको धूमोऽपि स्यात्। तत्र त एव प्रमाणविचारपारदृश्वानो विशेषमभिदधति—यद्विधं हि यस्य दर्शनं तथाभूत एव तदाशङ्काऽवतरति। यस्य च कुतश्चिदुपाधेस्सम्बन्धः, यथाग्नेरार्द्रेन्धनसम्बन्धात्, तस्य तदुपाधिविगमादसम्बन्धोऽपि। न च धूमस्याग्निसम्बन्ध औपाधिकः। कथमयं विभागो विवेचनीय इति चेत्—तदन्वयव्यतिरेकाभ्यां तु। यस्य हि यत्रोपाधित्वं सम्भाव्यते तद्विगमेऽपि चेदुपलभ्यते ज्ञायते नायं तदुपाधिक इति। एतच्चासकृद्दर्शनप्रभावादित्युक्तं—अव्यभिचारस्त्वसकृद्दर्शनगम्य इति। तदियं दिगुपदर्शिता। अत्र ज्ञातसम्बन्धशब्देन साधारणासाधारणविरुद्धा हेतुदोषा निरस्ताः।

---

१. "न" इति नास्ति ख० पु०। २. प्रथते इति ख० पु०।
३. संवेदितापि० इति० ख० पु०। ४. देशान्तरप्रवृत्तये इति ख० पु०।
५. तत्सान्दिग्धव्याप्तिक० इति ख० पु०।

तत्तु द्विविधमिति । किमिदं द्वैविध्यम् ? लक्षणद्वैविध्यं तावन्नास्ति । एकदेशदर्शनादित्येकत्वाल्लक्षणस्य । अथ प्रमेयद्वैविध्यमङ्गीकृत्यैतदुच्यते—एकत्र विशेषाद्विशेषोऽवगम्यते, अन्यत्र सामान्यात् सामान्यावगतिरिति । एवं च हेतुमद्भेदाद्धेतोरपि भेद उक्तो भवति । किं पुनरनयोर्भेदकथनप्रयोजनम् ? लक्षणाभिधानेन चाव्यभिचारितोक्ता भवति । तदर्थं चायं प्रयासः । हेतुहेतुमतोर्द्वैविध्यं भवतु वा मा वा ।

अत्र केचिन्नीतिज्ञंमन्या अनवधृतस्वलक्षणमेव किंचिदनुमानेन

---

अत्रासाधारणो—गन्धवत्त्वान्नित्या पृथिवीति । अस्य हि भूमात्रवर्त्तित्वात् तस्याश्च सिसाधयिषितनित्यताख्यधर्मत्वासिद्धौ च संबंधिना सह सम्बन्धावधारणानुपपत्तेर्न ज्ञातसम्बन्धत्वम् ।

साधारणस्तु—नित्यः शब्दः, प्रमेयत्वादिति । अस्य प्रमेयत्वलक्षणस्य धर्मस्य नित्यतया सह सम्बन्धोऽस्ति, व्याप्तिस्तु नास्ति । तेन ज्ञातः सम्बन्धो यस्येति पष्ठ्यर्थाभावान्न ज्ञातसम्बन्धत्वम् ।

विरुद्धः पुनः—पटो नित्यः, कृतकत्वा'दिति । अस्य सम्बन्ध एव नास्तीत्यज्ञातसम्बन्धता । एकदेशदर्शनादित्यपक्षधर्मस्य हेतुत्वं, निरस्तम् । यथा—'प्रत्यक्षं कर्म रूपवत्त्वा'दिति । न हि कर्मणो रूपं धर्मः । कस्य तर्हि? द्रव्यस्य ।

तथा असिद्धस्य हेतुत्वं दर्शनग्रहणेन निरस्तम् । तदेवं सम्बन्धे व्याप्तिपक्षधर्मत्वे हेतो रूपे निश्चितेऽनुमानाङ्गमिति स्थितिः ।

तत्तु द्विविधमित्यनेन भाष्यं पठितमाक्षिपति—किमिदं द्वैविध्यम् ? लक्षणद्वैविध्यं तावत् नास्ति, एकदेशदर्शनादित्येकत्वाल्लक्षणस्य । एकदेशदर्शनादित्येकं लक्षणम्, ज्ञातसम्बन्धस्येति विशेषणम् । तच्चोभयोरप्येकम् । अथ प्रमेयद्वैविध्यमङ्गीकृत्यैतद्द्वैविध्यमुच्यते, प्रमेयद्वैविध्यं च दर्शयति—एकत्र विशेषाद्विशेषोऽवगम्यते । धूमाकृतिकात् धूमाकृत्युपलक्षणेन ज्ञाताग्निसम्बन्धव्याप्तिरग्न्याकृतिको विशेषोऽवगम्यते । अन्यत्र सामान्याद्देशान्तरप्राप्तिमात्रादादित्ये तद्धेतुमात्रमनुमीयत इति हेतुद्वयभेदाद्धेतोरपि द्वैविध्यं विशेषसामान्यात्मकत्वात् । अत्राह—किं पुनरनयोर्भेदकथनेन प्रयोजनम् ? न किंचिदित्यर्थः । लक्षणाभिधानेन चाव्यभिचारितोक्ता भवति, तदर्थश्चायमव्यभिचारित्वार्थः प्रयासो लक्षणात्मकः । हेतुहेतुमतोर्द्वैविध्यं भवतु वा मा वा ।

अत्र केचिन्नीतिज्ञंमन्या अनवधृतस्वलक्षणमज्ञातप्रत्यात्मविशेषासम्बन्धित्वेना-

सामान्यतो गृह्यत इति मन्यन्ते । तद्भ्रमापनोदनायैतदुक्तम्-तत्तु द्विविधमिति । अदृष्टस्वलक्षणविषयमनुमानमस्ति क्रियादिषु । कथं पुन(१)रदृष्टस्वलक्षणे सम्बन्धिदर्शनम् ? उत्पत्तिमतः (स्व)फलस्य

---

दृष्टमेव किंचिदनुमानेन सामान्यतः सामान्यरूपेण गृह्यत इति मन्यन्ते । तद्भ्रमापनुत्तये इदमुक्तम्-तत्तु द्विविधमिति । विप्रतिपत्तिनिरासार्थमुक्तमित्यर्थः । ननु स विषयो नास्त्येवेत्यविवक्ष इत्यत्राह-अदृष्टस्वलक्षणविषयमनुमानमस्ति क्रियादिषु क्रियायां शक्तौ च । चोद्याभिप्रायमिदानीमाह--कथं पुनरदृष्टस्वलक्षणयोः सम्बन्धग्रहणम् ? विना सम्बन्धिबोधात्सम्बन्धानुपपत्तेः उत्पत्तिमतः फलस्य दर्शनादित्युपपादितमस्माभिः शून्यवादे । अस्यार्थः-तन्तुसंयोगे सति पटावयवी दृश्यते । अत्रोत्पत्तिमतस्तन्तुसंयोगात् प्रत्यक्षस्य फलस्यावयवविलक्षणस्य दर्शनाददृष्टस्वलक्षणयोरपि सम्बन्धदर्शनं भवतीति । एतच्च शून्यवादे प्रमाणफलयोर्भेदं लौकिकाः प्रतिपद्यन्त इत्यत्र प्रदर्शितमस्माभिः । एतदनेनाभिसंहितम्—यद्यत् फलभूतं तत्तदुत्पत्तिमतोऽनन्तरमिति सामान्यतस्तत्त्वादि संयोगादि चावयवीति(?) सम्बन्धदर्शने सति देशान्तरप्राप्तिं कादाचित्कीं फलभूतामवधार्योत्पत्तिमत्प्राक्भावि किञ्चिदनुमीयते । तत्र च लोकस्य कर्मशब्दप्रयोगः । न च द्रव्यमेवोत्पत्तिमदिति शक्यावगमम्, तस्य प्रत्यभिज्ञया स्थायित्वेनावधृतत्वात् । न च दृष्टविरुद्धमनुमानमवरोधिनि संभवतीति युक्तम् । तस्माद्द्रव्यातिरेकि कर्मानुमीयते ।

अत्रापरः परोत्कर्षव्यालीककलुषितान्तःकरणः कर्मणः प्रत्यक्षतामाकाङ्क्षते । तामाह—ननु नानुमेयं कर्म, किंतु रूपिद्रव्यसमवेतचाक्षुषमेव, गच्छत्ययमिति प्रतीतेरिन्द्रियव्यापारायत्तत्वात् । तथा च तन्त्रान्तरे सूत्रम् (२)"संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि" इति । अथ संयोगविभागानुमितक्रियाविषयोऽयं प्रत्यय इति । तदनुपपन्नम् । आकाशस्यातीन्द्रियत्वात्तेन सह संयोगस्य वायुवनस्पतिसंयोगवदप्रत्यक्षत्वाल्लिङ्गाभावात् पतत्सु पतत्रिषु पततीति बुद्धिर्न स्यात् ।

अथोच्यते-विहायसि विततैस्तरणिकिरणैस्सह संयोगविभागौ प्रत्यक्षौ लिङ्गमिति, तन्न; सान्द्रतरान्धकारे निशीथे झटिति तडिति

---

१. अदृष्टस्वलक्षणयोस्सम्बन्धग्रहणम् इति व्याख्यानसम्मतः पाठः ।

२. वै. सू. अ. ४. आ. १. सू. ११

स्फुरन्त्यां चलतीति प्रतीतेः। अपि च संयोगविभागौ गम्ये गन्तरि च स्तः। ताभ्यां चेत्कर्मानुमेयं गन्तरीव तद्बुद्धिर्गम्येऽपि स्यात्। किं च कार्यविरोधि कर्म। ततश्च संयोगादुपरते कर्मणि वर्त्तमानावभासो न स्यात्। किं च न संयोगविभागौ कर्मानुमापयितुमीशाते। तस्यापि कादाचित्कत्वेन हेत्वन्तरापेक्षत्वात्तद्धेतुत्वाभिमतादेव तयोरुपपत्तेः।

तदेतद्बधिरदोषविलासमात्रम्। अनुमितक्रियानिमित्तश्चलतीति प्रत्ययः। विद्युति तु मेघावयवसंयोगविभागलिङ्गानुमिता चलनक्रियेति नानुपपत्तिः। न च गम्ये क्रियानुमानम्, गन्तृसमवेतयैव क्रियया संयोगविभागयोरुपपत्तेः। न चेदं विपरीतमापादयितुं शक्यते, गम्यक्रिययैव गन्तरि फलं प्रस्तुतमिति उत्तरदेशसंयोगस्य(१)गन्तरि क्रियान्तरानुमापत्तेः। देवदत्तगता तु क्रिया पूर्वप्रदेशेन विभागमुत्तरदेशेन संयोगं चारभत (२)इत्युपपन्नम्।

न च चलतीति वर्त्तमानावबोध एकक्रियाक्षणाभिप्रायेण, क्षणस्य पौर्वापर्याभावात्। तस्मात्क्रियाक्षणाना सन्ताननिमित्त एवायं चलतीति वर्त्तमानतावसायः। तेन क्षणान्तरे नष्टेऽपि क्षणान्तरेऽनागतेऽपि प्रारब्धापरिसमाप्तत्वादेकफलावच्छिन्नस्य क्रियासन्तानस्य (३)वर्त्तमानता नानुपपन्ना। सम्भवति च फलोद्देशनोत्तरक्षणपरामर्शादेषा प्रतीतिः। तदुक्तम्—यदा त्वाद्यपरिस्पन्दप्रभृत्याफललाभतः क्रिया पूर्वापरीभूता लक्ष्यते वर्त्तते तदेति।

न च कर्महेतोरेव संयोगविभागोदयः। तथा हि—आत्मशरीरसंयोगादात्माश्रितप्रयत्नानुगृहीतात्पादहस्तादिषु कर्मेष्यते। तदुक्तम्—(४)"आत्मशरीरसंयोगप्रयत्नाभ्यां हस्ते कर्म"ति। संयोगश्च संयोगिन्येव कार्यमारभते। यथावयविनमवयवसंयोगः। संयोगविभागौ च न केवलमाश्रयसमवेतौ। अनाश्रयेऽपि देशे समवायात्। तेनात्मसंयोगातिरिक्तमपरं कर्मानुमीयते, न च तत्रायं नियमो दृष्टः—स्वाश्रयमेव फलमारभत इति। तस्यापूर्वत्वात्। तेनानुमेयत्वेऽपि न कश्चिद्दोषः। प्रत्यक्षं तु प्रतीतिविरुद्धम्। न हि संयोगविभागातिरिक्तं निपुणमपि निरूपयद्भिरपरं वस्तूपलभ्यते। तदुक्तम्-(५) "न हि ते प्रत्यक्षे"इति। किमर्थं तर्हि (६)"देवदत्तस्य गतिपूर्विका देशान्तरप्राप्तिमुपलभ्यादित्येऽपि गतिस्मरण"मित्युक्तम्? देवदत्तेऽप्यनुमेयत्वात्।

---

१. 'गन्तरि' इति नास्ति. ख. पु. २. इत्युभयमुपपन्नम्। इति ख. पु.

३. वर्तमानताऽनुपपन्ना इति. ख. ४. वै. सू. ५. १. १.

५. शा. भा. पृ. २२. पं. १६. ६. शा. भा. पृ. ८. पं. ११.

दर्शनादित्युपपादितमधस्तादस्माभिश्शून्यवादे । अतः सामान्यमात्रपर्यवसाय्यनुमानमस्ति । दर्शितं च देवदत्तस्य गतिपूर्विकामिति।

कः पुनरनुमाने व्यभिचारः ? यथा प्रत्यक्षे शुक्तिकादिषु । नन्विदानीमेव द्विविधं शब्देन प्रदर्शितम् । नन्वानुमानिकेत्यानुमानिकं निरसनीयम् । न पुनरानुमानिकस्योद्धारो वक्तव्यः । कश्चात्र विशेषः ? येऽपि ह्यानुमानिकमनानुमानिकमिच्छन्ति तेऽप्यनुमानं व्यभिचारयन्त्येव । तस्मादत्रापि व्यभिचारनिवृत्तिरेव लक्षणाभिधानस्य प्रयोजनम् ।

किं च प्रमेयेऽपि सङ्करः । न महानसादिषु दृष्टो धूमः पर्वतस्थमग्निं प्रतिपादयितुं क्षम इति केचित् । विशेषा एवावगम्यन्त

---

उच्यते–देवदत्ते तावदात्मसंयोगातिरेकिण्यनुमिते तत्सामान्यादादित्येऽपि गतिरेवानुमीयते । देवदत्ते देशान्तरप्राप्तेस्तत्कारणत्वेन निश्चितत्वात् । एतदुक्तं भवति–सर्वत्र चेतने वाऽचेतने वा गतिरेव देशान्तरे प्राप्तौ निमित्तमिति । अतः सामान्यमात्रपर्यवसाय्यनुमानमस्ति । दर्शितं च देवदत्तस्य गतिपूर्विकामिति ।

इदानीं लक्षणाभिधानप्रयोजनं पृच्छति––कः पुनरनुमाने व्यभिचारः यथा प्रत्यक्षे शुक्तिकारजतादिषु । व्यभिचारनिराकरणार्थं हि लक्षणमुच्यते । अप्रमाणे हि प्रमाणाभिमानो व्यभिचारः । न चासावनुमानेऽस्ति(१) । (नन्विदानीमेव द्विविधं शब्देनोक्तं सामान्यतो दृष्टमनुमानं नास्तीति विप्रतिपत्तिनिराकरणाय द्वैविध्यमुक्तमिति ।) नन्वानुमानिकेत्यानुमानिकत्वं निरसनीयं, (२)न पुनरानुमानिकस्योद्धारो वाच्यः । अत्र पुनराक्षेपाभिप्रायमाह–कार्त्स्न्येनोद्घाटनमुद्धारशब्देनोच्यते । कश्चात्र विशेष इति । प्रमाणविषयं ह्यज्ञानं निरसनीयम् । इदमपि चाज्ञानं यदानुमानिकमुच्यते । तदाह–येऽपि ह्यानुमानिकं क्रियादि ज्ञानमनानुमानिकमिच्छन्ति तेऽपि ह्यनुमानं व्यभिचारयन्त्येव लोकप्रसिद्धादनुमानरूपादनुमानं व्यभिचारयन्त्येव । तस्मात्तदपि निराकार्यम् । तस्मादत्रापि व्यभिचारनिवृत्तिरेव लक्षणाभिधानस्य प्रयोजनम् ।

किंच प्रमेयेऽपि संकरोऽस्ति अविवेकोऽस्ति । सोऽपि लक्षणेन निवर्त्यते । न महानसादिषु दृष्टो धूमः पर्वतस्थमग्निं प्रतिपादयितुं क्षम इति केचित् । अन्यस्य

---

१. एतत्कुण्डलान्तर्गतो भागः ख. पुस्तके नास्ति ।

२. न पुनरनुमानस्योद्धारो वक्तव्यः इति ख. पु.

इत्यपरे । स्मृतिमात्रमेवेत्यन्ये । तस्मात् ज्ञातसम्बन्धस्यैकदर्शनादेकदेशान्तरे ज्ञानमसन्निकृष्ट इति विशिनष्टि । किमनेन निराकृतम् ? स्मरणं तावन्निरस्तं सन्निकृष्ट इति वचनात् । अप्रतिपत्तिरपि निरस्तैव, बुध्युत्पादवचनात् । सम्बन्धावगमादिति विशेषावगतिरपि निरस्तैव ।

ननु च न बुध्युत्पादवचनमात्रात् प्रमाणता शक्यते वक्तुम् । शुक्तिकादिषु व्यभिचारात् । असम्बन्धस्य तु दर्शनं सम्बन्धाभिधानादेव प्रत्युक्तम् । सम्बन्धावगमे च पूर्वानुभवो दुर्निवारः । अहोऽग्र-याविवेकिनो(?)महान् प्रमादः । किं पूर्वदृष्टस्यानुभवो न सम्भवति । अनुभूतिश्च न प्रमाणम् । अन्या च स्मृतिरन्योऽनुभवः । सत्यं

सम्बन्धे गृहीतेऽन्यस्यागमकत्वात् विशेषा एवावगम्यन्त इत्यपरे । सामान्यतो दृष्टस्य सम्बन्धग्रहणाभावेनानुपपत्तेः । स्मृतिमात्रमित्यन्ये । सम्बन्धिव्याप्तिग्रहणेन गृहीतत्वात् । यस्मादेवं संकरोऽस्ति तस्मात् ज्ञातसम्बन्धस्यैकदेशस्यत्येकदेशं विशिनष्टि । एकदेशान्तरेऽसन्निकृष्ट इत्येकदेशान्तरं विशिनष्टि । किमनेन विशेषणेन निराकृतम् ? स्मरणं तावदसन्निकृष्ट इति निरस्तम् । असन्निकृष्टतया ह्येकदेशान्तरे प्रतीयते । अप्रतिपत्तिरपि निरस्तैव बुध्युत्पादवचनात् बुद्धिशब्देन लक्षणगतेन । न चाज्ञातसम्बन्धस्य गमकत्वं सामान्येनोपलक्षितानां सम्बन्धज्ञानात । सम्बन्धावगमादिति विशेषावगतिरपि निरस्तैव । सम्बन्धग्रहणस्य सामान्यतो विशेषतश्च सम्भवाद्विशेषावगतिरेवानुमानेनेति निरस्तम् ।

अत्राह—ननु न बुद्ध्युत्पादमात्रात्प्रमाणता शक्यते वक्तुम्, शुक्तिकारजतादिषु स्मृतिरूपासु व्यभिचारात् । अथ मा भूत्स्मृतिरिति सम्बन्धज्ञानापह्नवः क्रियते । तत्राह—असम्बन्धस्य तु दर्शनं(१)सम्बन्धाभिधानादेव(२)निरस्तम् । सम्बन्धावगमे च प्रतिसम्बन्धितया पूर्वानुभवोऽग्न्यादीनां दुर्निवारः । अहोऽविवेकिनो महान् प्रमादः यस्मादेवमुच्यते । किं पूर्वस्यानुभूतस्यानुभवो न सम्भवति ! यदा हि यत्पूर्वानुभूतं तत्र च यदि पुनरनुभवो न सम्भवेत् तदा स्मरणमात्रमेवेदं भवेत् । अस्ति धारावाहिकादिष्वप्यनुभूतिः । अनुभूतिश्च न प्रमाणं धारावाहिकविज्ञानान्तरवत् । नन्वत्र सम्बन्धस्मरणे सम्बन्धितयाऽग्निः स्मर्यत एव, तत्राह—अन्या च स्मृतिरन्योऽनुभवः । तदेवाह—सत्यं सम्बन्धस्य दर्शनादि स्मृतिर्धूमे-

१. सम्बन्धावगमाभिधानादेव इति ख. पु. । २. प्रत्युक्तम् इति मूलपाठः ।

सम्बन्धस्य दर्शनादि स्मृतिः। सम्बन्ध्यन्तरे त्वनुभव एव। ततश्चा-(१)संशयं पुनः पुनर्दृश्यमानं दृश्यत एवेति लौकिका व्यपदिशन्ति, न स्मर्यत इति। (२)सिद्धं चानुमानादिषु प्रमाणत्वमनुभूतेः। किं तर्ह्यसन्निकृष्ट इति ? स्मरणाभिमानशून्य इत्यर्थः। सन्निकृष्टावमर्शे हि स्मरणमेव मन्यन्ते।

ननु च स्मृतिप्रमोषतुल्यतैवं प्राप्नोति। न; कारणान्तरस्य विद्यमानत्वाल्लिङ्गादेः। न ह्यत्र पूर्वानुभूतिरेव कारणम्। तत्र हि प्रमोषः स्मृतिविपर्यये हेतुः। इह तु लिङ्गादि प्रत्युत्पन्नं कारणम-

---

ऽग्निसम्बन्धितया। सम्बन्ध्यन्तरेऽग्न्याख्ये त्वनुभव एव। स इत्यप्रतीतेः। यतश्च पूर्वानुभूतेऽप्यनुभवो भवति। ततश्चासन्नं पुनःपुनर्दृश्यमानं दृश्यत एवेति लौकिका व्यपदिशन्ति, न स्मर्यत इति। अतः सिद्धमनुमानादिषु प्रमाणत्वमनुभूतेः।

एतेन ये कालातिरेकेण प्रामाण्यं धारावाहिकेष्वाहुः ते निराकृताः। क्षणभेदस्याविद्यत्वात्। येऽपि तत्र तदाद्यदर्शनमेव प्रमाणमिति बौद्धा आहुः तेऽपि सर्वेषां तुल्यत्वेन निराकृताः। (३)किमिदं तर्ह्यसन्निकृष्ट इति स्मरणाभिमानशून्यत्वादित्यर्थः। असन्निकृष्टत्वेन गृह्यते, तेन स्मरणाभिमानो नास्ति। (४)संनिकृष्टावमर्शे हि स्मरणमेवेति मन्यन्ते। न चात्र संनिकृष्टावमर्शोऽस्ति। तस्मान्नेदं स्मरणम्।

ननु च स्मृतिप्रमोषतुल्यतैवं प्राप्नोति। गृहीतविषयत्वात्, गृहीतत्वाननुसन्धानाच्च। न; कारणान्तरस्य विद्यमानत्वाल्लिङ्गादेः। अयमाशयः—पूर्वानुभवोपजीवि विज्ञानं स्मरणम्। तच्च तदुपजीवित्वं प्रतिभासतो वा, स घट इत्यादावनुभूतत्वस्य विद्यमानत्वात्। कार्यतो वा, रजतादि प्रतीतेरन्यथा भावात्। अनुमानस्य लिङ्गाद्येव कारणमस्तीति पूर्वानुभवोपजीवित्वं नास्ति। अतः (५)प्रमाणमेवेदं न स्मरणम्। तदाह—न ह्यत्र पूर्वानुभूतिरेव कारणं यथा रजतादिप्रतीतेः। ननु(६) रजतादिप्रतीतेः कथं स्मृतित्वम् ? ग्रहणबुद्धेरित्यत्राह—तत्र हि प्रमोषः स्मरामीत्यंशस्य खण्डनं स्मृतिविपर्यये ग्रहणाभिमाने हेतुः। नन्वत्रापि प्रमोषनिबन्धनः प्रमाणाभिमानः किं न भवतीत्यत्राह—इह तु लिङ्गादि प्रत्युत्पन्नं कारणमस्तीति। कार्यान्यथानुपपत्त्या हि स्मृतिरूपता

---

१. आसन्नं इति व्याख्यानपाठः। २. अतस्सिद्धमनुमानादिषु इति व्याख्यानपाठः।
३. अत्र मूलव्याख्ययोः पाठे भेदोऽस्ति। ४. सन्निकृष्टावमर्शनं हि इति ख. पु.।
५. प्रमाणान्तर, इति ख. पु.। ६. रजतादिबुद्धेः इति ख. पु.

स्तीति सिद्धं प्रामाण्यम् । तस्मादत्रापि यत्प्रमाणं न तद्व्यभिचरतीति वक्तव्यम्, उक्तं च ॥ इदमुपमानादिष्वपि योज्यम् ।

(१)शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम् । किमिदं शब्दविज्ञानादिति ? किं शब्दाद्विज्ञानं शब्दविज्ञानम् ? शब्द एव वा विज्ञानं शब्दविज्ञानम् ? यदि तावच्छब्दे विज्ञानं शब्दालम्बनमित्यर्थः, तदयुक्तम् । न तस्माच्छासनमवगम्यते । शासनाद्धि शास्त्रम् ।

अथ शब्दाद्यदर्थे विज्ञानमुत्पद्यते तच्छब्दविज्ञानम् । तत्र विशेषावगतौ कारणं वक्तव्यम्, तदुक्तं च शास्त्रमिति । शास्त्रं हि शासनात् । तच्चार्थविषय एव विज्ञान उपपद्यते, न शब्दविषये । द्विती-

---

प्रतीत्यनारूढापि कल्प्यते । इह तु कारणान्तरमस्तीति सिद्धं प्रामाण्यमिति । अनेनोपसंहारः—तस्मादेवं व्यभिचारसम्भवोऽनुमाने तस्मादत्रापि यत्प्रमाणं न तद्व्यभिचरतीति वक्तव्यम्, उक्तं च भाष्यकारेण ॥ इदमुपमानादिष्वपि योज्यम् । तत्रापि स्वरूपविप्रतिपत्तिरेव व्यभिचारः लक्षणाभिधानेन चाव्यभिचार उक्तः ।

शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम् । किमिदं शब्दविज्ञानादिति ? किं शब्दाद्विज्ञानमर्थविषयं शब्दविज्ञानमभिमतम् ? उत शब्दे विज्ञानं शब्दविज्ञानम् । यदि तावच्छब्दे विज्ञानं शब्दविज्ञानं शब्दालम्बनमित्यर्थः । तत्रानन्तरपक्षे दोषमाह—तदयुक्तम्, न तस्माच्छासनमवगम्यते । प्रेरणं च शासनम् , यतश्च शासनमवगम्यते तच्छास्त्रम् । शासनाच्छास्त्रमिति लौकिकव्युत्पत्तेः । न च शब्दालम्बनाद्विज्ञानाच्छासनावगतिः । किन्तु कार्यावगतिः । कार्यावगमाद्धि प्रेरणावगमः । तस्माच्छब्दालम्बनात् विज्ञानादर्थे विज्ञानं शास्त्रमिति लक्षणमयुक्तम् ।

अथ शब्दाद्यदर्थे विज्ञानमुत्पद्यते तच्छब्दविज्ञानं कार्यविज्ञानम् । तस्मादसन्निकृष्टेऽर्थे प्रेरणायां यद्विज्ञानं तच्छास्त्रमिति । सत्यमेवमुपपद्यते लक्षणम् । किन्तु विशेषावगतौ कारणं वक्तव्यम् व्युत्पत्तिविशेषावगमे पञ्चमीसमासपरिग्रहे कारणं वाच्यम्, सप्तमीसमासस्यापि सम्भवात् । अत्र परिहरति—(२)तदुक्तं च शास्त्रमिति । उक्तं च विशेषावगतौ कारणं शास्त्रमिति । लक्ष्यानुरूपं हि लक्षणवर्णनम् । इह तु शास्त्रं लक्ष्यते तेन तदनुरूपं लक्षणं वक्तव्यम् । भवत्वेवं, तथापि किमित्याह—शास्त्रं हि शासनात् । तच्चार्थ-

---

१. शा. भा. पृ. ८. पं. १२.  २. उक्तं च शास्त्रमिति ख. पु. ।

येऽपि पक्षे तन्निमित्ततयोपपत्तेः सिद्धं शास्त्रलक्षणम् ।

ननु च शब्दाभासमपि दृष्टं–एष बन्ध्या सुतो यातीत्येवमादि। तदपि शब्दादेवावगम्यते । न हि बाष्पादितुल्यं किञ्चित्कारणान्तरमत्रोपलभामहे । परिहृतमेतत् "तच्चेत्प्रत्ययिता" दिति । लक्षणाभिधानेन चायमेव व्यभिचारो निरस्तः ।

(१)"उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा-गवयदर्शनं गोस्मरणस्ये"ति। सादृश्यमिति किं

---

विषय एव विज्ञाने विज्ञानशब्दे पञ्चमीसमासाश्रयणेन गृह्यमाण उपपद्यते न शब्दस्वरूपविषये । तस्मात्पञ्चमीसमासोऽयमिति निश्चीयते । द्वितीयेऽपि पक्षे सप्तमीसमासेऽपि कार्यज्ञानेन व्यवधानेनापि शब्दालम्बनज्ञानस्य प्रेरणाज्ञाननिमित्ततया लक्षणस्योपपत्तेः सिद्धं शास्त्रलक्षणम् । शास्त्रग्रहणात् लक्ष्यानुरूपेण पारंपर्येण निमित्तत्वमाश्रयणीयमिति यावत् ।

ननु च शब्दाभासमपि दृष्टमेष बन्ध्यासुतो यातीत्यादि । तदपि शब्दादेव गम्यते । अनेनातिव्याप्ततया लक्षणदोषमाह–शब्दाभासेऽपि लक्षणस्य विद्यमानत्वात् । तदपि हि शब्दविज्ञानादेवार्थविज्ञानम् । कुत इत्याह—न हि बाष्पादितुल्यं यथानुमानाभासे लिङ्गाभासः किंचित्कारणान्तरमत्रोपलभामहे । तत्रापि शब्दतदभावभावित्वाच्छब्द एव कारणम् । अत्र समाधिः—परिहृतमेतत् तच्चेत् प्रत्ययितादिति । (२)अस्यार्थः—पौरुषेयं वाक्यं लिङ्गभूतं प्रमाणान्तरोपस्थापनमुखेनार्थं(३)प्रतिपादयति । ततश्च लिङ्गाभासोत्थमेतदिति 'तच्चेत्प्रत्ययिता'दिति भाष्ये व्याख्यातम् । लक्षणाभिधानेन चायमेव व्यभिचारो निरस्तः । पौरुषेयवाक्यसमुत्थानमपि ज्ञानं शाब्दमिति ये मन्यन्ते तेऽपि निरस्ताः । तद्ध्यनुमानमित्युक्तम् ।

उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्येति । अत्र वदन्ति—सादृश्यं नाम न किंचिदस्ति द्रव्यगुणकर्मसामान्यविशेषातिरिक्तं तदन्तर्भूतं वा । तेषां सङ्ग्रहे अपठितत्वादिति पदार्थविदः । अत्रोच्यते—सादृश्यमिति किं सादृश्यम्? अस्यार्थः—सादृश्यमिति यत्र ज्ञानं तत्सादृश्यम् । अस्ति चेदं ज्ञानम्, तन्निबन्धना च विषयव्यवस्था । तेन ज्ञानबलेन गुणादिव्यतिरिक्तं तदन्तर्निवेशि वा सादृश्यमभ्युपगमनी

---

१. शा. भा. पृ. ८. पं. १३. २. अयमर्थः इति ख. पु. ।

३. प्रतिपादनाय तत्तल्लिङ्गाभासोत्थमिति क. पु. ।

**सादृश्यम् ? गोस्मरणस्य । ननु च ज्ञातसम्बन्धिना तुल्या । सा चात्र लक्षणम् । तत्र वान्यत्र वेति किंदमुपयुज्यते ? बाढमुपयुज्यते । एकदेशादर्शनादिति हि तत्र लक्षणम् । ज्ञातसम्बन्धस्येति विशेषणम् । अतो गवयस्थं सादृश्यं न सदृशावगतेरेकदेशः ।**

**किं च असकृद्दृष्टसम्बन्धो ह्यनुमानस्य हेतुः, असजातीयव्यावृत्तिसव्यपेक्षश्च । द्वयमत्र नास्ति प्रमाणान्तरम् ।**

---

**यम् । गोस्मरणस्येति भाष्यमयुक्तम् । न हि स्मरणस्य बुद्धिरुत्पद्यते ।** तत्राह—गोस्मरणस्येति । **अनुभूतगोः पुरुषस्येत्यर्थः । गोस्मरणस्येति** गवि स्मरणं यस्येति बहुव्रीहिर्वा । गाः स्मरतीति वा कर्त्तरि(१)"नन्द्यादिभ्यो ल्युः" इति ल्युस्मरणात् । गोः स्मरणो गोस्मरण इति षष्ठीसमासः । किं पुनरत्रानुमानाद्विशिष्यते ? अत्रापि हि सादृश्यं ज्ञातसम्बन्धमेव गवये दृष्टं गवि ज्ञानमुत्पादयति । गोसादृश्यं हि गवयवर्त्ति गोवर्त्तिना गवयसादृश्येन ज्ञातसाहचर्यसम्बन्धः । अयमेव विशेषो धूमादिभिः—यद्विज्ञधर्मिधर्मभूतो गम्यगमकः, अनुमानं हि धूमादिर्हि यत्र दृष्टस्तत्र ज्ञानमुत्पादयति । एतच्चैकदेशान्तर इत्यत्रान्तरशब्देनोक्तम् । सादृश्यं त्वन्यत्र ।

ननु च ज्ञातसम्बन्धिना तुल्या **सादृश्यस्य धूमादेश्च** । सा चात्रानुमानेऽपि लक्षणम् । तत्र वान्यत्र वेति किंदमुपयुज्यते ? बाढमुपयुज्यते **(भृशमुपयुज्यते)** एकदेशदर्शनादिति हि तत्र लक्षणं **एकदेशस्य प्रधानत्वात्** । ज्ञातसम्बन्धस्येत्ये**कदेशवि**शेषणम् । **उपसंहरति**—अतो गवयस्थं सादृश्यं **गोरेकदेशभूतं न संभवति । किंभूतस्य गोः ?** सदृशावगतेः **सदृश इत्यवगतिर्यत्रेत्यर्थः । पक्षीभूतस्य जिज्ञासितधर्मिण इति यावत् ।**

किञ्च असकृद्दृष्टसम्बन्धो ह्यनुमानस्य हेतुः । **निरुपाधिकत्वेन सम्बन्धिनि गृहीते हेतुना । निरुपाधिकत्वं चानेकदर्शनगम्यमित्युक्तम् । सादृश्यं तु न ज्ञातसम्बन्धम्, प्रथमदर्शनेऽपि विज्ञानोत्पत्तेः । तथाऽसकृद्दर्शनाकाङ्क्षापि नास्ति, सकृद्दर्शनेऽपि गमकत्वात्** । असजातीयव्यावृत्तिसव्यपेक्षश्च **असजातीयेभ्योऽनग्निभ्यो या धूमस्य व्यावृत्तिः तदपेक्षश्च । तदाह** वार्त्तिककारः—

**यावच्चाव्यतिरेकित्वं स ह्यंशेनापि(?)शक्यते ।**

---

१. नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ( पा.सू.३.१.१३४ ) इत्येतत्सूत्रस्याकारः, अत्र त्वर्थानुवाद इति द्रष्टव्यम् ।

किं पुनरत्र व्यभिचारदर्शनम्? यन्निवृत्त्यर्थमिदं लक्षणम्। किमन्यदतः सदृशाभासात्। अत्र सामान्यमेव कैश्चित् सादृश्यमुक्तम्, न तत् सादृश्यम्। किं तर्हि? अन्यदेव हि तत्, गोत्वादेरेकत्वात्।

ननु चात्र प्रमेयमेव नास्तीति केचिन्मन्यन्ते। तदयुक्तम्, अनुभूतमपि कारणान्तरावगम्यं प्रमेयमेवेत्युक्तम्।

(१)"अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना, यथा—जीवतो देवदत्तस्य गृहाभावदर्शनेन

---

विपक्षस्य कुतस्तावद्धेतोर्गमकताबलमिति ॥

अत्र त्वसजातीयव्यावृत्तिर्नापेक्ष्यते इतीदं प्रमाणान्तरमुपमानम्।

किं पुनरत्र व्यभिचारदर्शनम्? यन्निवृत्त्यर्थमिदं लक्षणम्। किमन्यदतः सदृशाभासात् व्यभिचारदर्शनम्। सदृशाभासे हि सदृश इति यत् ज्ञानं तदुपमानं न भवतीति दर्शितम्, तस्य सादृश्यानुपपत्तेः। न हि यो येन सदृशो न भवति स तेन सदृश इति, यथा—पलालकूटं दृष्ट्वा एतत्सदृशो हस्तीति ज्ञानं सदृशाभासविषय इति।

उक्तं तावत्सादृश्यज्ञानग्राह्यं सादृश्यमस्तीति। इदानीं किं सामान्यमेव उतान्यदिति विवेक्तुं परमतमुपन्यस्यति—अत्र सामान्यमेव कैश्चित्सादृश्यमुक्तं सामान्यमेव गुणावयवकर्मत्वादिकं धर्म्यन्तरगतं ज्ञायमानं सादृश्यमुक्तं सामान्यानि च भूयांसि गुणावयवकर्मणां भिन्नप्रधान(२)सामान्यव्यक्तं सादृश्यमुच्यत इति। तत्राह—न तत्सादृश्यं सादृश्यं भिन्नं अन्यदेव हि गवि गवये सादृश्यं, अन्यच्च गवये गोसादृश्यम्। (३)गुणत्वादिकं तु तदेव तद्धर्म्यन्तरे गोत्वादेरेकत्वात्। कर्णत्वादेरपि तदविशेषादेकत्वमेव।

ननु चात्र प्रमेयमेव नास्ति। पूर्वं हि येन गौर्दृष्टस्तस्य गोसादृश्यं गवये प्रतिभाति। तस्य च दृष्टगोः पुरुषस्य किमपरं प्रमेयमस्तीति केचिमन्यन्ते, तत्राह—तदयुक्तं, अनुभूतमपि कारणान्तरावगम्यं प्रमेयमेवेत्युक्तमनुमाने। इह पुनरननुभूतमेव गवि गवयसादृश्यं कारणान्तरेण गवयगतगोसादृश्येन सम्प्रति दृश्यमानेनानुभूयत इति सुतरां प्रामाण्यं युक्तम्। उपमानस्वरूपं तु सादृश्यात् दृश्यमानायत्प्रतियोगिनि जायते सादृश्यविषयं ज्ञानमुपमानं तदुच्यते।

अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना, यथा—जीवतो देवद-

---

१. शा. भा. पृ. ८. पं. १४. २. सामान्यमुक्तं इति क० पु०

३. कर्णत्वादिकं इति ख० पु०

बहिर्भावस्यादृष्टस्य कल्पना । केयमन्यथानुपपत्तिरिति ? यदि तावदस्यानेन विना सद्भावो नोपपद्यते इति । तदेवेदं कार्यतः कारणानुमानुमुपन्यस्तं न प्रमाणान्तरम् । अथेदमुच्यते—ज्ञातसम्बन्धस्ये-त्यनुमानलक्षणं, अज्ञातश्चात्र सम्बन्धः, तस्मात् प्रमाणान्तरमिति, तदयुक्तम् । कथमज्ञातः सम्बन्धः शक्यते (१)वक्तुम्—अयमनेन विना नोपपद्यत इति । न ह्यन्यथानुपपत्तिः प्रत्यक्षसमधिगम्या । कार्याव्यभिचारसमधिगम्या हि सा । अव्यभिचारश्चासकृद्दर्शनपूर्वकः ।

---

दत्तस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनेति व्याख्येयम् । केयमन्यथानुपपत्तिर्नामेत्यादिना **अनुमानान्तर्गतत्वेनार्थापत्तेः (२)पृथग्ग्रहणं न कार्यमित्याह**—यदि तावदस्य सद्भावोऽनेन विना नोपपद्यत इति, तदा तदेवेदं कार्यतः कारणानुमानमुपन्यस्तं न प्रमाणान्तरम् । **अन्यथाशब्देन हि प्रकृतप्रकारव्यतिरिक्तप्रकारान्तरवाचिना (३)कल्प्याभाव उक्तः। नोपपद्यते इत्यनेनापि नास्तित्वम् । तेनायमर्थः सम्पद्यते—कल्प्याभावेऽयमर्थो नास्तीत्यवगम्यार्थान्तरकल्पनेति । तथा च कार्यतः कारणानुमानमिदं प्राप्तम् । कार्यमपि हि कारणेन विना नोपपद्यत इत्यवगतं सर्वत्र कारणमनुमापयति** । अथेदमुच्यते—ज्ञातसम्बन्धस्येत्यनुमानलक्षणं अज्ञातश्चात्र सम्बन्धः तस्मात्प्रमाणान्तरमिति । अयमाशयः—**यद्यप्यन्यथानुपपत्तिस्तुल्या, तथापि सम्बन्धज्ञानासम्भवादननुमानत्वमिति** । तदयुक्तम् , कथमज्ञातसम्बन्धः शक्यतेऽवगतुमयमनेन विना नोपपद्यत इति । **कस्मान्न शक्यत इत्याह**—न ह्यन्यथानुपपत्तिः प्रत्यक्षसमधिगम्येति । **यदि ह्यन्यथानुपपत्तिः प्रत्यक्षेणावगम्यते तदा सम्बन्धज्ञानं विनाप्यसौ निश्चीयते । न चासौ प्रत्यक्षसमधिगम्या ।**

**न चेदं वाच्यम्—अन्यथानुपपत्तिरनिश्चितैवावगमिकेति । यतो भाष्यकारेणोक्तम्**—अन्यथा नोपपद्यत इति । **इतिशब्दश्च ज्ञाननिर्देशप्रधानो लोके दृष्टः । न चानिश्चितायामनुपपत्तौ विशिष्टावगमकारणमस्ति । तस्मान्नावगतैवानुपपत्तिः कारणम्, किन्तु** कार्याव्यभिचारसमधिगम्या हि सा । **कार्यस्य हि कारणाव्यभिचारेणेदं समधिगम्यते—कार्यं कारणेन विना नोपपद्यत इति** । अव्यभिचारश्चासकृद्दर्शनपूर्वकः । **असकृद्दर्शनेन हि कार्यस्य स्वाभाविकः कारणसम्बन्धो निश्चीयते । स्वाभाविककारणसम्बन्धनिश्चय-**

---

१. अवगन्तुमिति भाष्यानुसारी पाठः । २. पृथक् करण, इति. ख० पु०

३. कल्प्याभावादुक्तं इति. क० पु०

तस्मात् दृष्टमदृष्टं वा ज्ञातसम्बन्धमेवावगम्यतेऽन्यथानुपपत्त्या। अतः प्रमाणान्तरं मृगतृष्णिकैवेति।

सत्यं यदि यद्येन विना नोपपद्यते तदेवावगमकं स्यात्। इह तु यन्नोपपद्यते तदेवावगम्यम्। किञ्चात्र नोपपद्यते? जीवतो गृहाभावदर्शनादन्यत्राभावो नोपपद्यते। ततः किम्? नात्राभावस्य गम्य-

---

श्चाव्यभिचारनिश्चयः। तस्मादृष्टमदृष्टं वा ज्ञातसम्बन्धमेवावगम्यतेऽन्यथानुपपत्त्या। अतो दृष्टं स्वलक्षणतो दृष्टं सान्यतो दृष्टं तज्ज्ञातसम्बन्धमेव तदन्यथानुपपत्त्यान्यथानुपपद्यमानत्वेन विज्ञायते। न पुनरज्ञातसम्बन्धमपीति। अतो ज्ञातसम्बन्धादर्थादियमवगतिरनुमानमेवेति प्रमाणान्तरं मृगतृष्णिकैवेति।

सत्यं यदि यद्येन विना नोपपद्यते तदेवावगमकं स्यात्। अस्यार्थः—यस्य येनानुपपत्तिः यदि तत्तस्यावगमकं स्यात् तदानुमानमिदं भवेत्। इह तु यन्नोपपद्यते तदेवावगम्यम्। एवं सिद्धान्तिनोक्ते पूर्वपक्षी ब्रूते–किंचात्र नोपपद्यते। जीवतो गृहाभावदर्शनादन्यत्राभावो नोपपद्यत इत्येकग्रन्थेन। जीवतो हि गृहाभावे दृष्टेऽन्यत्राभावोऽनुपपन्नः, जीवनाभावप्रसङ्गात्। ततः किमिति पृष्टे स्वाशयमाविष्करोति–नात्राभावस्य गम्यता। कस्य तर्हि? भावस्य। न चासौ गृहाभावदर्शनेनोपपद्यत इति। बहिर्देशे भावोऽवगम्यते। तदुक्तं बहिर्भावस्यादृष्टस्य कल्पनेति। न च तस्य गृहाभावे सत्यनुपपत्तिः। प्रत्युत यावदुपपत्तिरेव। यस्य चाभावस्यानुपपत्तिः न तस्य गम्यता। तेनानुपपद्यमानमेव गम्यतेऽर्थापत्त्येत्यघटमानम्।

अथोच्येत—सत्यं गृहाभावदर्शने सत्यन्यत्र भावस्यानुपपत्तिर्नास्तीति, किन्तु गृहाभावदर्शनेन विना (ऽनुपपत्तिर्भवत्येव। बहिर्भावस्य ह्यन्यथाशब्देन बिनाशब्दार्थ एवोच्यते। तेन गृहाभावदर्शनव्यतिरेकेणानुपपत्तिर्बहिर्भावस्येति। तेन चासौ गृहाभावदर्शनेन विनोपपद्यते। योऽपि हि देवदत्तादेर्गृहाभावं न पश्यति तस्यापि बहिर्भावमात्रदर्शनेऽनुपपत्तिप्रतिभासो नास्ति। तस्मादयमपि हि प्रकारो नोपपद्यते।) बाढं नोपपद्यत इति सिद्धान्ती वदति। अत्रेदमाकूतम्—नात्र गृहाभावदर्शनेन विनाऽनुपपत्तिरुच्यते, किन्तु गृहाभावदर्शनेन विना बहिर्भावो नोपपद्यत इति। तेन गृहाभावदर्शनं बहिर्देशसम्बन्धेऽनवगते भावस्यानुपपत्तौ कारणम्। अनुपपत्तिश्च प्रमाणान्तरविरोधः। गृहाभावदर्शने सत्यनवगते बहिर्देशसम्बन्धे प्रमाणप्रतीतमपि जीवनं कथमिह

---

( ) एतत्कुण्डलान्तर्गतो भागो नास्ति ख० पु०

ता । कस्य तर्हि ? भावस्य । न चासौ गृहाभावदर्शनेनोपपद्यते। बाढं नोपपद्यते । न हि गृहाभावदर्शनेन विना बहिर्भाव उपपद्यते ।

ननु च दृष्टः श्रुतो वार्थो ऽन्यथा नोपपद्यते इति गमकस्यान्यथानुपपद्यमानतां दर्शयति। अग्रन्थज्ञो देवानां प्रियः । दृष्टः श्रुतो वाऽर्थोऽर्थकल्पना। किमिदमर्थकल्पनेति ? । दृष्टः श्रुतो वार्थोऽर्थान्तरस्य प्रमाणमित्यर्थः । अन्यथा नोपपद्यत इति केन सम्बध्यते ? प्रमित्येति वदामः। अन्यथानुपपद्यमानत्वमापादयन्नर्थान्तरं (प्रव)गमयति । किमत्र ज्ञातसम्बन्धिता नैवापेक्ष्यते ? अपेक्ष्यते हि स-

---

नास्ति जीवति वेति संशयमाने बहिर्देशसम्बन्धितयाऽवगम्यते । अतोऽत्र स एवानुपपन्नो भावस्स एवावगम्यत इति सिद्धम् । न हि गृहाभावदर्शनेन बिना बहिर्भाव उपपद्यत इति । गृहाभावदर्शनेन बहिर्बिनाभावो नोपपद्यत इति ग्रन्थार्थः । बाढशब्देन चानुपपत्तिरतिशयेनेत्युक्तम् ।

ननु च दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इति गमकस्यान्यथानुपपद्यमानतां दर्शयति । न गम्यस्य। दृष्टोऽर्थोऽन्यथा नोपपद्यत इति सम्बन्धः प्रतिभातीत्यभिप्रायः । अग्रन्थज्ञो देवानां प्रिय इति । आक्रोशे षष्ठ्या अलुक् । आक्रोशे देवानां प्रिय इत्यस्योपसंख्यानं कर्त्तव्यमिति । परमार्थं दर्शयति–दृष्टःश्रुतो वार्थोऽर्थकल्पनेति । किमिदमर्थकल्पनेति । सामानाधिकरण्यं नोपपद्यत इत्यर्थः । दृष्टः श्रुतो वाऽर्थोऽर्थान्तरस्य प्रमाणमित्यर्थः। कल्पनाशब्दोऽत्र प्रमितिपर इत्यभिप्रायः। अन्यथा नोपपद्यत इति केन सम्बध्यत इति। यदि दृष्टः श्रुतो वेत्यनेन न सम्बन्धः केन तर्हि सम्बध्यत इति । प्रमित्येति वदामः । येयमर्थापत्तिसंज्ञिका प्रमितिः, तया सम्बध्यत इति ब्रूमः । तत्र वचनव्यक्तिमाह—अन्यथानुपपद्यमानतामापादयन्नर्थान्तरं गमयतीति । अन्यथा कल्प्यस्याकल्पनायामनवगते बहिस्सम्बन्धेऽनुपपद्यमानतां प्रमाणान्तरविरोधमापादयन् गृहाभावो बहिर्भावं अर्थान्तरं गमयतीति । किमत्र ज्ञातसम्बन्धिता नैवापेक्ष्यते । अनेन पुनरप्याशङ्कते । अस्यार्थः—यावज्जीवनं देशेन नित्यसम्बद्धमिति नावगतं तावद्गृहाभावदर्शनेन बहिर्भावमनवबुध्यमानस्यापि नानुपपत्तिः । तेन सम्बन्धिज्ञानापेक्षित्वादनुमानमेवेदम् । अपेक्ष्यते हि सम्बन्धमात्रज्ञानं, न तु सम्बन्धिता । सत्यं जीवनस्य देशेन सह सम्बन्धोऽपेक्ष्यते । न पुनर्गमकस्य गृहाभावस्य बहिर्भावेन

म्बन्धमात्रज्ञानम्, न तु सम्बन्धिता । अनुमाने तु ज्ञातसम्बन्धस्येति षष्ठ्या सम्बन्धितैवागमिकेत्युक्तम् । न सम्बन्धमात्रज्ञानम् । दृष्टः श्रुतो वेति दर्शनश्रवणोपन्यासः किं कारणान्तरव्युदासाय?

(१)सम्बन्धिता । अतोऽर्थापत्तौ जीवनस्य देशेन सह सम्बन्धमात्र ज्ञान(२)मवगमकमिष्यते । अनुमाने तु ज्ञातसम्बन्धस्येति षष्ठ्या सम्बन्धितैवावगमिकेत्युक्तम् । ज्ञातः सम्बन्धो यस्येति विग्रहवाक्यगतया षष्ठ्या सम्बन्धिन एवैकदेशस्य दृश्यमानस्य गमकत्वम् । तेन यस्य जीवनस्य देशेन सम्बन्धोऽवगतः तस्य गमकत्वं नास्ति । यस्य च गमकत्वं तस्य सम्बन्धज्ञानापेक्षा नास्तीति सिद्धं प्रमाणान्तरम् । अत्र श्लोका भवन्ति ।

बिना कल्पनयार्थेन तया नानुपपन्नताम् ।
अर्थान्तरं कल्प्यते यत्तदर्थापत्तिगोचरः ॥
अभावेन गृहेऽभावो बहिः कल्पनया विना ।
न तयानुपपन्नत्वं(३)कल्पनातो बहिर्यथा ॥
गम्यस्यानुपपन्नत्वमिह कल्पनया विना ।
मानान्तरविरोधेन सन्देहापत्तिलक्षणम् ॥
देशेन हि विना भावो न कदाचन दृश्यते ।
गृहाभावेन सिद्धोऽपि तेन सन्देहमृच्छति ॥
तत्संदेहव्युदासाय कल्पना या प्रवर्त्तते ।
सन्देहापादकादर्थादर्थापत्तिरसौ स्मृता ॥
गमकस्यानुमाने तु विवक्षा सत्वलक्षणम ।
गम्यतेऽनुपपन्नत्वं विना गम्येन(४)वस्तुना ॥
तत्सामग्रीविभेदेन भिन्ने एते परस्परम् ।
अर्थापत्त्यनुमानाख्ये प्रमाणे इति निश्चितम ॥

दृष्टः श्रुतो वेति दर्शनश्रवणोपन्यासः किं कारणान्तर(स्य) प्रमाणान्तर(स्य) व्युदासाय? दृष्टग्रहणेन प्रत्यक्षपरिच्छिन्नो गृह्यते, श्रुतग्रहणेन तु शब्दावगतः । यदि तु दृष्टग्रहणेनोपलब्ध उच्यते । तत्र श्रुतग्रहणमतिरिच्येत तस्मात्प्रमाणद्वयपरिग्रहाय परप्रमाणव्युदासाय च दृष्टः श्रुतो वेत्युक्तमिति पूर्वपक्षवाद्येवावेदयति । ततश्च प्रमाणान्तरपूर्विकार्थापत्तिर्न संगृहीतेति दूषणं हृदि स्थितम् । सिद्धान्ती त्वाह—नेति वदाम इति ।

१. सह सम्बन्धिना इति० क० पु० । २. अवगत्यङ्गं इति ख० पु० ।
३. कल्प्यमानः इति. ख० पु० ४. गम्येत हेतुना इति क० पु०

नेति वदामः । उपलब्धोऽर्थ इत्यर्थः । श्रुतग्रहणमिदानीं किमर्थम् ? दृष्ट इत्येव वक्तव्यम् । उच्यते–अभिधानान्तरमेवेद (दृष्टश्श्रुतो वेति)

न प्रमाणान्तरव्युदासाय, किं तर्हि दृष्टः श्रुतो वेति उपलब्धोऽर्थ इत्यर्थः । ततश्चोपलब्धमात्रग्रहणादर्थात्सर्वप्रमाणसङ्ग्रहो भवतीत्यर्थः । श्रुतग्रहणमिदानीं किमर्थम् ? दृष्ट इत्येव वक्तव्यम् । दृष्टग्रहणेनैवोपलब्धवाचिना श्रुतस्यापि सङ्गृहीतत्वादिति । ननु च—यद्यपि श्रुतोऽप्युपलब्ध एव तथापि श्रुतपूर्विकार्थापत्तेः प्रमाणग्राहिणीत्वेन विशेषं सूचयितुं श्रुतग्रहणं कृतमिति ।

ननु श्रुतार्थापत्तावपि श्रुतो दिवाभोजनाभावो रात्रिभोजनं विना पीनत्वस्यानुपपन्नत्वे सत्यनुपपद्यमानो रात्रिभोजनमेव कल्पयति, न शब्दम् । न हि शब्देन विनाऽर्थस्यानुपपत्तिः, किन्तु अर्थेनैव । सत्यमेवम्, अर्थमेव कल्पयितुं प्रवृत्तार्थापत्तिः । तस्यार्थस्य सविकल्पकज्ञानग्राह्यत्वाच्छब्दपुरःसरतया प्रतीतेः शब्द एव त्ववगतोऽर्थमुत्थापयति ।

नन्वेवं प्रत्यक्षादिष्वपि सविकल्पकज्ञानान्यर्थं न गृह्णीयुः, किन्तु शब्द एव पर्यवस्येयुः । तिर्यगादिप्रतीतिषु शब्दशून्यास्विन्द्रियस्यार्थ एव सामर्थ्यमवधृतम् तेन सविकल्पकदशायामपि तत्रैव भवितुमर्हति । नान्यत्र, शक्तिकल्पनापरीक्षयात् । श्रुतार्थापत्तिस्तु कदाचिदपि तिरश्चां नास्ति, शब्दव्युत्पत्तिनिबन्धनत्वात्तस्याः । न ह्यव्युत्पन्नः शब्दपूर्वकं वाक्यार्थमवबुध्यते ।

ननु दृष्टार्थापत्तौ तावदर्थापत्तेरर्थ एव सामर्थ्यमवधृतम्, अत्रापि तथैव भवितुमर्हति । सत्यमर्थ एव सामर्थ्यं दृष्टम् । किन्तूपपादकत्वेन । न ह्यर्थोऽपि स्वरूपतः प्रतीयते । किन्तूपपादकतया । तच्चोपपादकं यस्मिन्नवगतेऽनुपपत्तिः शाम्यति । शब्देऽपि साक्षादुच्चरितेऽनुपपत्तिशान्तिर्भवतीति प्रथमोपनिपातिनि शब्द एव श्रुतार्थापत्तेर्व्यापारः । तदाह भगवान् वार्तिककारः—

न चार्थेनार्थ एवायं द्वितीयो गम्यते तु नः ।
स विकल्पकविज्ञानग्राह्यत्वात्तु तिरोहितः ॥
अग्निरिन्द्रियलिङ्गाभ्यां नाग्निरित्येव गृह्यते ।
तथा चार्थात्मनैवायं तिर्यग्भिरपि दृश्यते ।
श्रुतार्थापत्तिबोधस्तु तिरश्चां न कदाचन ॥
शब्दव्युत्पत्तिजा ह्येषा श्रुतार्थापत्तिधीर्मता ।
शब्दान्तराणां बुद्ध्याऽसौ नार्थमेवाधिगच्छति ॥

तेनैषां नियतं तावत्प्रथमं वाक्यगोचरा ।
वाक्यमेव तु वाक्यार्थे गतत्वाद्गमयिष्यतीति ॥

तदेतत् टीकाकारो भगवान्न मृष्यति, यथागुरुदर्शनं किञ्चिदुच्यते- सविकल्पकविज्ञानेषु शब्दोऽर्थावच्छेदकरूपः प्रतीयेत वाचकतया च शब्दोऽर्थमवच्छिनत्ति । तेन गौरिति ज्ञाने गोशब्दवाच्योऽयमित्येवमर्थः परिगृह्यते । न च शब्दवाच्यतां शब्दो वक्ति । तेनार्थस्याप्रतिपादकोऽस्मिन् विषये शब्दः । किन्तु वृद्धव्यवहारावगतया वाचकतया वाच्यं विशिष्टं(१)न भवति । तेनासावर्थानुपस्थापकत्वात्प्रथमभाव्यपि नानुपपत्तिं शमयितुमलमिति नार्थापत्तिप्रमेयतामनुभवितुमर्हतीति । तेनार्थविषयैवेयमपीति विशेषप्रदर्शनार्थमपि श्रुतग्रहणं न भवति ।

ये तु शब्द एव विश्वजिदादिष्वपरिपूर्णत्वादनुपपन्न इति मन्यन्ते, तेन तदुपपादकः परिपूरकश्शब्द एव कल्प्यत इति वदन्ति, ते स्वमनीषिकाकल्पनया विक्रुवं भाषमाणा उपेक्षामर्हन्तोऽपि बालैरादृता इति बालजनपरिबोधनाय किञ्चिदुच्यते- का तावदिह शब्दस्यानुपपत्तिरर्थानुपपत्त्यतिरेकिणी ? अपरिपूर्णता चेत् , का पुनः शब्दस्यापरिपूर्णता ? अर्थ एव हि केन चिदर्थभागेन विनाऽपरिपूर्णो भवति । अर्थापरिपूर्त्तेः शब्दोऽप्यपरिपूर्ण इति चेत, भवत्वेवम् । यन्निबन्धना हि तस्यानुपपत्तिः तस्यैव तदुपपत्तिरङ्गीकरणीया । अन्यथा तदवस्थैव शब्दस्यापरिपूर्णता स्यात । तस्मादपरिपूर्णत्वेऽपि शब्दस्यार्थ एव कल्पनीयः । न चार्थानुपपत्तौ शब्दस्यानुपपत्तिः, भिन्नत्वाच्छब्दार्थयोः ।

अथोच्येत-अर्थानुपपत्तौ प्रमेयाभावे शब्दस्य प्रमाणताऽप्यनुपपन्नेवेति । एवमपि प्रमाणतानुपपन्ना स्यात , न शब्दः । न च प्रमाणता पृथगनुपपन्ना किन्तु अर्थानुपपत्त्यैव । एवं चेन्मूलभूतार्थानुपपत्तिरेवार्थापत्त्युपस्थापिकाऽस्तु । अपि च प्रमाणतापि केन चिदर्थेन विना प्रमेयाभावशङ्कयानुपपन्ना न शब्दाभावेन, येन शब्दं कल्पयेदित्यलमतिविचारेण दूरमन्तरिता वयम् , प्रकृतमनुसरामः ।

अत्रोत्तरम—अभिधानान्तरमेवेदमुपलब्धेर्वाचकम् । अस्यार्थः-दृष्टशब्दमात्रेण न सर्वपरिग्रहः, किन्तु श्रुतशब्दसहितेन, तेन श्रुतग्रहणं नानर्थकम् । कथं पुनः श्रुतग्रहणस(र)हितेन दृष्टशब्देनोपलब्धं नोच्यते । श्रूयताम्-दृष्टशब्देन यद्यप्युपलब्धमात्रमुच्यते तथापि श्रुतशब्दसन्निधानात् गोबलीवर्दन्यायेन शब्दप्रमितव्यतिरिक्तमुच्यते । नन्वेवमय गोबली-

---

१. नावभाति । इति ख० पु०

मुपलब्धेर्वाचकम् ॥

(१)"अभावोऽपि प्रमाणाभावो नास्तीत्यर्थस्यासन्निकृष्टस्य"। अभावोऽपि प्रमाणाभाव इति किमिदं प्रमाणलक्षणम्? ओमित्युच्यते । किमनेन प्रमीयते ? उक्तम्–नास्तीत्यमर्थः ।

---

वर्दन्यायस्याऽऽश्रयणे किं प्रयोजनम ? उच्यते—लौकिका वयम् । लोकश्चेत्थमपि व्यवहरमाणो दृश्यते । न च लोके पर्यनुयोगावकाशोऽस्ति, अनादित्वात् । अत इदमुक्तमभिधानान्तरमेवेद लोकप्रतीतमुपलब्धेर्वाचकमिति ।

अभावोऽपि प्रमाणाभावो नास्तीत्यर्थस्यासन्निकृष्टस्य । अभावोऽपि प्रमाणाभाव इति किमिदं प्रमाणलक्षणमिति पूर्वपक्षवादिनः प्रश्नः । अत्र चायमभिप्रायः—यदि प्रमाणलक्षणमिदं तदनुपपन्नम्, प्रमेयाभावात् । अथ न प्रमाणलक्षणं, तर्हि षष्ठं प्रमाणमिति प्रसिद्धिबाधः । तदा ग्रन्थोऽयमसङ्गतो निष्प्रयोजनश्चेति । आचार्यदेशीयः प्राह—ओमित्युच्यत इति । प्रमाणलक्षणमिदमङ्गीक्रियत इत्यर्थः । अयं च तत्राभिप्रायः–भूतलादिषु घटादीनामभावस्तावत्प्रतीयते–भूतले घटो नास्तीति । न हीयं प्रतीतिर्भूतलमात्रालम्बना, सत्यपि घटे प्रसङ्गात् । न च निरालम्बना, स्वयमेवालम्बनसाधनत्वात् । तेनेयमभावमेवालम्बते । न चेयमप्रमाणम्, बाधकाभावान्निश्चयात्मकत्वाच्च । अत एवास्यां प्रमाणात्मिकायां प्रतीतौ प्रतिभासमानत्वात् प्रमेयत्वमपि तस्य युक्तम् । यदि चाभावो न प्रतीयते भूतलादिषु चरणन्यासादिव्यवहारो न स्यात् । न ह्यसौ भूतलमात्रपरिच्छेदात्, कण्टकादिमत्यपि भावात् । न च केवलभूतलग्रहणात्, अभावस्याप्रमेयत्वे कैवल्यापरिच्छेदात् । कैवल्यं हि भूतले धर्मो नाभावादन्यत्, न चान्यासंदृष्टस्वरूपमात्रग्रहणात्, सूक्ष्मकण्टकादियोगिनि भूतले स्वरूपमात्रेण गृहीते प्रवृत्तिप्रसङ्गात्, प्रयत्नपूर्विकाया जिज्ञासाया अयोगात् । तथा अभावस्याप्रमेयत्वे शशविषाणादीनामप्यनुमानं निर्बाधमासज्येत । तस्मादभावः प्रमेयः । न चेयमभावप्रतीतिः प्रत्यक्षा, अनिन्द्रियसम्प्रयोगजत्वात् ।

ननु च भावप्रतीतिवदिन्द्रियसम्प्रयोगानुविधायिनी कथमनिन्द्रियजा? उच्यते–भावग्रहणपुरस्सरोऽयमभावावसायः, भावग्रहणं चेन्द्रियेणेति तद्भावभावित्वमन्यथासिद्धम् । किमत्र प्रमाणमिति चेत् ? गृहीतभावस्वरूपमात्रस्योपरतेन्द्रियव्यापारस्यापि देशान्तरगतकारणान्त-

१. शा. भा. पृ. ८. पं. १० ।

किञ्च तन्नास्ति ? प्रमीयमाणस्य प्रमेयता । अतश्चाप्रमितेः

रोपजातजिज्ञासस्याभावप्रतिपत्तिदर्शनात् ।

न चेदमनुमानमपि, सम्बन्धग्रहणानुपपत्तेः । न ह्यगृहीते संबन्धिनि सम्बन्धावसायः सुगमः । न चाभावस्य सम्बन्धिनो ग्रहणमस्ति । तदिदमभावाख्यं प्रमाणान्तरं भाष्येणानेन लक्षितमिति । तत्राहाऽऽचार्यः-किमनेन प्रमीयत इति । न किञ्चिदस्य प्रमेयमिति भावः । उक्तं नास्तीत्ययमर्थ इति । नास्तीत्यस्यार्थस्यासन्निकृष्टस्येत्यनेन नास्तीत्ययमर्थः प्रमीयत इत्युक्तम्, एतन्निराकरोति-किञ्च तन्नास्तीति । नेदमत्र प्रतीयत इत्यर्थः । ततश्च नास्तीति यदुच्यते तदस्य प्रमेयमित्येतदापद्यते । तथा च सति यन्न प्रमीयते तत्प्रमेयमित्यप्रमीयमाणस्य प्रमेयत्वं, यच्च न प्रमीयते न तस्य प्रमितिरस्ति । अन्यथा हि प्रमीयमाणतैव स्यात् । ततश्चाप्रमितेः प्रमाणत्वमित्यलौकिकमिव प्रतिभाति ।

ननु मा भूद्यन्न प्रमीयते तस्य प्रमेयत्वम्, किन्तु तस्य तु यन्नास्तित्वमभावशब्दवाच्यं भूतलाद्यधिकरणं तत्प्रमेयमस्त्विति, नेत्युच्यते· अप्रमीयमाणत्वमेव हि नास्तित्वं, नापरम् । योऽपि हि पृथग्भूतमभावमाह, तेनापि(१)भूतलस्यापि प्रमीयमाणताऽप्यङ्गीकरणीयैव । तयैव च नास्तित्वव्यवहारोपपत्तेः किमर्थान्तराभ्युपगमनेन ? न चाप्रमीयमाणतैव प्रमेयम्,यस्मात्तदर्थासंसृष्टानुभवयुक्ततैवात्मनस्तस्यार्थस्याप्रमीयमाणता । सा चावस्थाऽऽत्मनः स्वसंविदितैव । नातः प्रमेयमवशिष्यते ।

किं च योऽप्यभावं प्रमाणमाह, तस्यापि तज्ज्ञानोत्पत्तौ(२)तदसंभवानुभवयोग एव कारणम्, स च न चक्षुरादिवदज्ञात एव सत्तामात्रेण ज्ञानजनकः, यतः सम्प्रति दृश्यमानेऽपि भूतलादिषु कस्मिंश्चिदर्थेऽसत्यपि तदनुलम्भेनासीदिदं प्रागिहेति प्रतीतिर्दृश्यते । अतः सम्प्रति नास्तित्वबुद्धिः प्राक्तनादेव केवलोपलम्भादधुना स्मृतिसमारूढादुपजायत इति बलादभ्युपगमनीयम् । ततश्च केवलोपलम्भलक्षणमेव नास्तित्वमस्तु । किमर्थान्तरपरिग्रहेण? या च सा केवलोपलम्भयोगिताऽऽत्मनः, सा च क्वचिदर्थोपलम्भकसामग्रीवैकल्येन, क्वचिच्च साकल्येनैव, तत्र येयमभावव्यवहारं प्रवर्त्तयति तामेव हि तादृशीं दशामनुसंदधतः 'क्षितितले घटो नास्ती'ति व्यवहारः प्रवर्त्तते । न चात्रातिप्रसङ्गोऽस्ति । संयुक्तेऽप्यभावव्यवहारः स्यादिति संयुक्तोपलम्भात् केवलोपलम्भस्यान्यत्वात् । प्रयत्नपूर्विकापि च जिज्ञासा भूतलादिषु सूक्ष्मकण्टकादिषु

१. भावस्याप्रमीयमाणता इति ख० पु० २. तदसंसृष्टेति ख० पु०

प्रमाणतेत्यलौकिकमिव प्रतिभाति । लक्षणमपि प्रमाणाभाव इति प्रमाणाभाव इत्येव लक्षयति । अस्ति चेयं प्रसिद्धि-र्मीमांसकानां षष्ठं किलेदं प्रमाणमिति । न चास्य ग्रन्थतो लोकतश्च प्रमाणताऽवसीयते । अतो न विद्मः प्रसिद्धेः किं बीजमिति ।

किमत्र न ज्ञायते? ग्रन्थतस्तावत्प्रमाणाभाव एवावसीयते । नास्तीत्युक्ते प्रमेयस्यैवाभावं लौकिकाः प्रतिपद्यन्ते । किं तर्ह्यनेन लक्षितेन? प्रमाणावगत्यर्थोऽयमारम्भः । तदनुसारी ह्यर्थनिश्चयः कथं स्यादिति । अत एवेदमुच्यते, यस्मात्प्रमाणावगत्यर्थोऽयमारम्भः । किमनेन पूर्वोक्तानां प्रमाणानां स्वरूपमवसीयते? यत्पूर्वोक्तैरेव स्वलक्षणैर्नावसीयते । सर्वलक्षणाभिधानवाक्यशेषोऽयं ग्रन्थः ।

---

विषयोपलम्भहेतुसाकल्येऽप्येषाऽवस्थेति पर्योषितमिति काऽनुपपत्तिः? अन्यथा हि सूक्ष्मत्वादियमवस्थाऽऽत्मन इति शङ्कया निश्शङ्को नाभावव्यवहारः स्यात् । अस्यामेव च प्रतिपक्षभूतायां नास्तित्वात्मिकायां सिद्धायानुमानं शशादिसम्बन्धिनां विषाणादीनां न प्रवर्त्तते इत्यभावस्य प्रमेयान्तरं नास्तीति सिद्धम् । लक्षणमपि च प्रमाणाभाव इति (१)प्रमाणं न भवतीति लक्षयति । प्रमाणाभावोऽभाव इत्युक्ते प्रमाणं न भवतीति प्रतीयते । न हि प्रमाणं प्रमाणाभाव इति शक्यते वक्तुम्, तस्मान्नेदं प्रमाणलक्षणम् । अधुना पूर्वपक्षी ब्रूते--अस्ति चेयं प्रसिद्धिर्मीमांसकानां षष्ठं प्रमाणमिति । न चास्य ग्रन्थतो लोकतश्च प्रमाणताऽवसीयते । अतः तस्मान्न विद्मः प्रसिद्धेः किं बीजमिति । अनेन प्रसिद्धिविरोधं दर्शयति ।

सिद्धान्ती त्वाह--किमत्र न ज्ञायत इति । निर्मूलापि प्रसिद्धिरस्तीति भावः । ग्रन्थतस्तावत्प्रमाणाभाव एवावसीयते । नास्तीत्युक्ते प्रमेयस्याभावं लौकिकाः प्रतिपद्यन्ते । ततश्च प्राग्व्याख्यातत्वान्न पुनर्व्याख्यायन्ते । किं तर्ह्यनेन लक्षितेनेति । लक्षणग्रन्थविरोधं पूर्वपक्षवाद्याह--यस्मात्प्रमाणावगत्यर्थोऽयमारम्भः तदनुसारी प्रमाणानुसार्यर्थनिश्चयः कथं स्यादित्येवमर्थं प्रमाणलक्षणमुच्यते । यच्च प्रमाणमेव न भवति किं तेन लक्षितेनेति । अत्रोत्तरम्--अत एवेदमुच्यते, यस्मात्प्रमाणावगत्यर्थोऽयमारम्भः प्रमाणावगमार्थ एवेदं लक्षणमित्यर्थः । किमनेन पूर्वोक्तानां प्रमाणानां स्वरूपमवसीयत इति प्रश्नः । यत्पूर्वोक्तैः स्वलक्षणैर्नावसीयत इत्युत्तरम् । यस्य रूपं पूर्वोक्तलक्षणैर्नावसीयते तदनेनावसीयत इत्यर्थः । कथमित्याह--सर्वस्वलक्षणाभिधानवाक्यशेषोऽयं ग्रन्थः । किं पुनरनेन स्वलक्ष-

---

१. प्रमाणाभाव इत्येव लक्षयति ख० पु०

न ह्युत्पादमात्रात् ज्ञानस्यार्थे तस्मिन् प्रमाणस्य प्रमाणताऽवसीयते। अतः स्वलक्षणमात्राभिधानान्निश्चयः। स्वरूपेण प्रमाणस्य समधिगम्यमानत्वात् सर्वप्रमाणानाम्। तस्मात् कार्यप्रत्ययस्तमयात् नास्तीत्यनेन पूर्वोक्तस्यैव लक्षणस्य साधुतोच्यते। कथं तर्हि प्रसिद्धिः? प्रसिद्धिर्घटयक्षप्रसिद्धिवत्। यदि पुनर्व्यवहारान्यत्वात् कारणान्यत्वं

---

णाभिधानवाक्यशेषभूतेन ग्रन्थेन क्रियत? इति। तत्राह—(१)नह्युत्पादमात्रात् ज्ञानस्यार्थे तस्मिन् प्रमाणस्य प्रमाणताऽवसीयते न ह्युत्पन्नं ज्ञानमित्येतावताऽर्थे स्वविषये ज्ञानस्य प्रमाणभूतस्य प्रमाणताऽवसीयते, यतस्तत्सम्प्रयोगजत्वादिके प्रतीतेऽपि न प्रमाणतावसीयते। तस्मात्कार्यसमधिगम्यत्वात्सर्वकारकाणाम्, प्रमाणं हि नाम करणकारकम्। सर्वं च कारकं कार्यसमधिगम्यम्। कार्यं च प्रमाणस्यार्थनिश्चयार्थलक्षणम्। निश्चयश्चायमेवेति सावधारणोऽनुभवः। अवधारणं चार्थान्तराद्व्यवच्छेदः। तदुक्तं तन्त्रान्तरे—

अयमेवेति यो ह्येष भावे भवति निर्णयः।
न स वस्त्वन्तराभावसंवित्त्यनुगमादृते॥ इति।

तत्र यदानेन ग्रन्थेन नास्तीत्यस्यासंनिकृष्टस्याप्रमीयमाणस्य यः प्रमाणाभावः सोऽभाव इत्यभावलक्षणं कृतम्। श्लोकश्चात्र भवति—

यन्नास्ति भूतलादौ घटादि तस्याप्रमीयमाणस्य।
योऽसौ प्रमाणविरहः प्रमाणविषयेऽपि सोऽभावः॥ इति।

तदा पूर्वोक्तेनैव लक्षणेन निश्चयपर्यन्तमपि प्रमाणस्वरूपं लक्ष्यत इति ज्ञायते। यस्मादर्थान्तरव्यवच्छेदोऽप्युपलम्भकसामग्रीसाकल्ये(२) केवलं न लक्षणं तत्प्रमाणानुवादात्मक एव। तस्मात्कार्यप्रत्ययस्तमयात्प्रमाणकार्यसंविदनुदयात्केवलोपलम्भादिति यावत्, नास्तीति व्यवहारो यस्मात्तस्मादनेन पूर्वोक्तस्यैव प्रमाणलक्षणस्य साधुतोच्यते। यदि हि यावदन्य एवाभावो नाम भावात्, तदा पूर्वोक्तं प्रमाणलक्षणं सर्वमेवासाधु स्यात्तन्मात्रेणाभावानवगमात्तत्पुरस्सरवस्तुनिश्चयाभावादनिश्चयफलस्य प्रमाणत्वानुपपत्तेः। अप्रमाणं च प्रमाणमिति लक्षणमात्रं बालजल्पितमेव स्यात्। केऽयं तर्हि प्रसिद्धिरिति पुनः प्रसिद्धिप्रश्न उत्तरदानाय। प्रसिद्धि-

---

१. न ह्युत्पादनमात्रादित्यादि इति० ख० पु०।

२. केवलोपलम्भलक्षणः तत्प्रमाणानुवादात्मक एवेति० ख० पु०।

मन्यन्ते किं कुर्मः ? न हि व्यवहारान्यत्वात् प्रमाणान्यत्वासिद्धिः । अतः स्वलक्षणमेवेदम् । इदमेव च तल्लक्षणम् । तस्मात् प्रसिद्धत्वादपरीक्ष्यं निमित्तम् ॥

(१)"प्रत्यक्षादीन्यन्यानि भवन्तु प्रमाणानि । शब्दस्तु न प्रमाणम् । कुतः ? अनिमित्तं विद्यमानोपलम्भनत्वात्" । अनिमित्तमप्रमाणं शब्दः । यो ह्युपलम्भनविषयो नोपलभ्यते स नास्ति, यथा-शशस्य विषाणम् । उपलम्भनानि चेन्द्रियाणि पश्वादीनाम् । न च पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते । अतो नेष्टिः पशुफला"।

र्वैटयक्षप्रसिद्धिवदिति । व्यामोहपूर्विकेयं प्रसिद्धिरिति यावत् । यदि तावद्यवहारान्यत्वात्कारणान्यत्वं मन्यन्ते तदा वयं किं कुर्मः । (२) (भावव्यवहारो विनापि दृश्यानुपलम्भानुसन्धानेन भवति । अभावव्यवहारस्तु दृश्येऽपि तस्मिन्नर्थे केवलोपलम्भानुसन्धानादित्येतस्मादेव व्यवहारान्यत्वात् । यदि तावत्केचिन्मीमांसकाः प्रमाणान्यत्वं मन्यन्ते ततश्च वयं किं कुर्मः । ) न हि व्यामुग्धानलङ्कुरुते पुरुषप्रयत्न इति तेषामुपेक्षा कार्या ॥

ननु व्यवहारान्यत्वात्परमार्थ एव कस्मात्प्रमाणभेदो न भवतीत्यत्राह—न हि व्यवहारान्यत्वात् प्रमाणान्यत्वासिद्धिः । प्रमेयान्यत्वेन हि प्रमाणान्यत्वं भवति। न हि व्यवहारान्यत्वमात्रात् प्रमेयान्यत्वमिति न प्रामाणान्तरमिदम् । उपसंहरति-अतः (३)स्वलक्षणमेवेदं लक्षणं, तेषां प्रमाणानामेवेदं लक्षणं (४)न स्वतन्त्रप्रमाणान्तरलक्षणम् । इदमेव च तल्लक्षणं तस्याभावस्येदमेव लक्षणं, न पुनरन्यद्वस्तु धर्मोऽभावो नामेत्यादिकम् । यथा चान्यत्र लक्षणं, तथोक्तमिति । तस्मात्प्रसिद्धत्वादपरीक्ष्यं निमित्तमिति मूलप्रस्ताव उपसंहृतः ।

प्रत्यक्षादीन्यन्यानि भवन्तु प्रमाणानि शब्दस्तु न प्रमाणम् । कुतः ? अनिमित्तं विद्यमानोपलम्भनत्वात् । अनिमित्तमप्रमाणं शब्दः योऽप्युपलम्भनविषयो नोपलभ्यते स नास्ति, यथा—शशस्य विषाणम् । उपलम्भनानि चेन्द्रियाणि पश्वादीनाम् । न च पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते । अतो नेष्टिः पशुफला । प्रत्यक्षादीन्य-

१. शा. भा. पृ. ८. पं १० ।

२. ( ) एत कुण्डलान्तर्गतो भागः ख० पु० नास्ति.

३. अतस्तल्लक्षण इति ख० पु० ।

४. अतः स्वलक्षणमेवेदं इति क. पु०

प्रत्यक्षादीन्यन्यानि भवन्तु प्रमाणानि शब्दस्तु न प्रमाणमिति कोऽभिप्रायः? अयमभिप्रायः—यदुक्तमनपेक्षत्वादिति प्रमाणान्तरानवगम्यमर्थमवगमयतीत्येतावन्मृषा। कुतः? भविष्यंश्चैषोऽर्थ इति भाव्यतया प्रामाण्यमुक्तम्, तदत्र न सम्भवति। कथं पुनरसम्भवः? किमनियोगकं वाक्यमस्तीति। किमत्र नियोगः करिष्यति। प्रमाणान्तरावगम्ये हि तस्य दर्शनात् स्मृत्यादौ। तस्माद्विनियोगावगम्यमेवार्थमालोच्य विषयो वक्तव्यः। स चायं विनिश्चयोऽसौ विद्यमानोपलम्भनाविषय एवोपलभ्यते "चित्रया यजेत पशुकाम"

न्यानि भवन्तु प्रमाणानि शब्दस्तु न प्रमाणमिति कोऽभिप्रायः? **अस्य प्रश्नस्यायमर्थः—शब्दादर्थविषयं विज्ञानं जायमानं कथमप्रमाणमिति।** अमयाभिप्रायः—यदुक्तमनपेक्षत्वादिति प्रमाणान्तरानवगम्यमर्थमवगमयतीत्येतावन्मृषा। **अनपेक्षत्वादिति सूत्रावयवेन प्रमाणान्तरानवगम्यमर्थं शब्दोऽवगमयति प्रमापयतीति यदुक्तं तन्मृषा, कुतः?** **यस्माद्**भविष्यंश्चैषोऽर्थ इति **भाष्येण** भाव्यतया **कार्यतया शब्दार्थस्य कार्यस्य चानन्यप्रमाणावगम्यत्वात्स्वातन्त्र्येण** प्रामाण्यमुक्तं तदत्र चित्रादौ न सम्भवति। कथं पुनरसम्भवः? किमनियोगकं (१) **नियोगानभिधायकं नियुज्यतेऽनेनेति व्युत्पत्त्या नियोगशब्दाभिधेयलिङादिरहितं** वाक्यमस्ति? **येनासम्भवः। यावता सर्वमेव सनियोगकं वाक्यम्, तथा च सति कार्याभिधायकत्वात्सम्भवत्येव प्रामाण्यम्। अत्रोत्तरम्**—किमत्र नियोगो लिङादिशब्दः करिष्यति? **न स्वातन्त्र्येणार्थमवगमयतीति यावत्।** प्रमाणान्तरावगम्येऽपि **परतन्त्रेऽप्यर्थे** तस्य **लिङादेर्**दर्शनात्स्मृत्यादौ। एतदुक्तं भवति—**लिङादेः परतन्त्रार्थत्वं तावदविवादम्। स्वातन्त्र्यं च न क्वचिदपि दृष्टम्। दृष्टानुसारिणी च कल्पना न्याय्या।** तस्मात् विनियोगावगम्यमेव **परस्परान्विताभिधायिपदजातगम्यमेव। चित्रायागस्य पशूनां च योऽर्थः साध्यसाधनसम्बन्धः प्रतीयते** तमालोच्य **नियोगस्य लिङादेः** विषयो वक्तव्यः। एतदुक्तं भवति—**फलसाधनतानिबन्धनामेव कार्यतां यागस्य लिङादिर्वदतीति। एवं खल्वभ्युपगम्यमाने शब्दस्वातन्त्र्यमदृष्टं न कल्पितं भविष्यति। पारतन्त्र्यं च दृष्टं न परित्यक्तं भविष्यति।**

**किञ्च** सचायं **विनियोगान्वयाभिधायि पदजातात्मको** विद्यमानोपलम्भनविषय एव **विद्यमानमुपलब्धिकारणं प्रमाणान्तरम्। यस्य यागेन सह पशु-**

---

१. नियोगाभिधायकतया नियुज्यतेऽनेन इति ख० पु० ।

इत्यादौ । काचाऽत्र विद्यमानोपलम्भनता ? क्रियानन्तरफलभाविता । दृष्टार्थत्वाच्च वृष्ट्यादेरनन्तरफलभावितया प्रमाणान्तरावगम्यतैवास्य वक्तुं शक्यते । सम्भवति च प्रमाणान्तरविषयत्वे को हि नामादृष्टं लोके स्वातन्त्र्यं शब्दस्य कल्पयितुं क्षमः । तस्मान्नियोगः प्रैषाद्यर्थ ( तुल्य ) एवेति प्रतिपत्तव्यम् । तदिदं 'कुत' इत्येतस्य प्रश्नस्य विद्यमानोपलम्भनत्वादित्युत्तरम् ।

नन्वेवं ग्रन्थे व्याख्यायमाने पशवो नोपलभ्यन्त इत्यादिरनर्थको ग्रन्थः । उपलभ्यन्तां मा वा पशवः । सर्वथा प्रमाणान्तरसापेक्षं शाब्दमित्येतावदत्र साध्यम् । सत्यमेतावत्साध्यम् । केन चोक्तमन्यत्साध्यमिति । तदनन्तरफलानुपलब्ध्युपन्यासो न घटते इत्यु-

---

साध्यसाधनभावस्य स विद्यमानोपलम्भनो विषयो यस्य स विद्यमानोपलम्भनविषय एवोपलभ्यते—चित्रया यजेत पशुकाम इत्यादौ । ततश्च फलसाधनतानिबन्धना कार्यतैव लिङादिभिरभिधीयत इति । का चात्र विद्यमानोपलम्भनता ? क्रियानन्तरफलभाविता क्रियानन्तरं फलस्य भवनशीलता । दृष्टार्थत्वाच्च वृष्ट्यादेः । शुष्यत्सु व्रीह्यादिषु वृष्ट्यादि काम्यमानमनन्तरभावितयैव काम्यत इत्यनयापि युक्त्याऽनन्तरभाविता युक्ता । शक्यते चानन्तरफलभावितया कर्मणः प्रमाणान्तरगम्यतास्य साध्यसाधनभावात्मकस्य वस्तुनो वक्तुमुक्तेन न्यायेन । सम्भवति च प्रमाणान्तरविषयत्वे फलानिबन्धनयागकर्त्तव्यताविषयत्वे को हि नामादृष्टं लोके स्वातन्त्र्यं शब्दस्य कल्पयितुं क्षमः ? तस्मान्नियोगः(१) प्रैषाद्यर्थतुल्य एव यथा प्रैषादिषु लौकिकेषु वैदिकेषु च (यो) नियोगः स च प्रमाणान्तरपूर्वकः तथा विध्युद्देशगतोऽपीति (२)प्रतिपत्तव्यम् । यदिदमुक्तमस्माभिः तदिदं कुत इत्यस्य प्रश्नस्य विद्यमानोपलम्भनत्वादित्युत्तरं दत्तं भाष्ये ।

नन्वेव ग्रन्थे व्याख्यायमाने पशवो नोपलभ्यन्त इत्यादिरनर्थको ग्रन्थः । उपलभ्यन्तां पशवो मा वोपलभ्यन्ताम् , सर्वथा प्रमाणान्तरसापेक्षं शाब्दमित्येतावदत्र साध्यम् , तच्च सिद्धमेव । किमर्थमपरं फलानुपलब्धिरूपमुपन्यस्यते ? परिहारमाह—सत्यमेतावत्साध्यम् । केन चोक्तमन्यत् साध्यमिति, येन दूषणं स्यात् । अत्रापर आह—(३)तदनन्तरफलानुपलब्ध्युपन्यासो न घटते, अनर्थकत्वादि-

---

१. प्रैषाद्यर्थ एव इति ख. पुस्तके । २. प्रतिवक्तव्यम् इति. ख. पु.

३. तद्यनुपलब्ध्युप इति. ख. पु.

क्तम् । न घटत एव । प्रमाणान्तरसद्भावपरीक्षया प्रामाण्यं वक्तव्यं, न स्वत इत्येवंपरो ग्रन्थः । तच्चात्र प्रमाणान्तरं दृष्टम् । कथं पुनरत्र दृष्टावगतिः ? क्रियानन्तरभावित्वात्फलस्य । कथं तर्हि कृष्यादेः ? किं कृष्यादेर्नानन्तरं फलमवगम्यते ? किं क्रियाफलं नावगम्यते ? उत प्रयोजनफलम् ? पाटनादि तावत् क्रियाफलमवगम्यते । व्रीह्युत्पत्तिस्तु प्रयोजनम् ।

---

त्युक्तम् । समाधिरुच्यते—न घटते एव, यस्मात् प्रमाणान्तरसद्भावपरीक्षया प्रामाण्यं वक्तव्यं, न स्वत इत्येवंपरो ग्रन्थः । अस्यार्थः—यदेतत्प्रमाणान्तरानुपलम्भेनाप्रामाण्याभिधानं तत्प्रमाणान्तरसापेक्षत्वप्रतिपादनपरम् । निरपेक्षस्य हि प्रमाणान्तरानुपलब्धेऽपि प्रामाण्यं स्वातन्त्र्येणोपपद्यत एव । सापेक्षस्य च प्रमाणान्तरायत्तं प्रामाण्यम् । तच्च प्रमाणान्तरमेवं स्यात् यदि क्रियानन्तरं फलं स्यात् । तदभावे प्रमाणान्तरेणायमर्थः प्रत्येतुं न शक्यत इति तदपेक्षस्याप्रामाण्यं युक्तमेव । तस्मात्प्रमाणान्तरसापेक्षत्वप्रदर्शनार्थत्वेऽस्य ग्रन्थस्य न किञ्चिदनुपपन्नम् ।

ननु प्रमाणान्तरसापेक्षत्वेऽपि किमिति प्रत्यक्षाद्यभावेनाप्रामाण्यम् ? तत्राह तच्चात्र प्रमाणान्तरं दृष्टम् । दृष्टशब्देन चात्र प्रत्यक्षादिकमुच्यते । कथं पुनरत्र दृष्टावगतिः ? दृष्टमेवात्र प्रमाणमिति कथमवगम्यत इत्यर्थः । क्रियानन्तरभावित्वात्फलस्य यस्माद्यद्यत्फलं तत्तत्क्रियानन्तरमेव भवति । क्रियानन्तरभाविनि च साधनत्वं दृष्टप्रमाणावगम्यमेव । (१)कथं तर्हि कृष्यादेः ? यदि सर्वं फलं क्रियानन्तरं तर्हि कृष्यादौ कथं नानन्तरं फलम् ? कालान्तरे सस्याधिगतेः । अत्रोत्तरम्—किं कृष्यादेर्नानन्तरं (२)फलमुपलभ्यते । येनैवं वदसि । एकग्रन्थेनाह—किं क्रियाफलं नावगम्यते उत प्रयोजनफलमिति । पुनरप्येकग्रन्थेनाह-पाटनं तावद्भूम्यवयवानां क्रियाफलमवगम्यत इति कृष्यादेरप्यनन्तरफलता । व्रीह्युत्पत्तिस्तु प्रयोजनम् । तदर्थत्वात्पुरुषप्रवृत्तेः । तथा च प्रयोजनलक्षणमक्षपादोक्तम्(३)—'यदधिकृत्य कृतिः प्रवर्त्तते तत्प्रयोजन'मिति ।

---

१. कृष्यादि इति मूलपुस्तके । २. फलमवगम्यते इति मूलपाठः ।

३. न्याय. सू. १. १. २४. यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्' इतीदानींतनेषु मुद्रितपुस्तकेषूपलभ्यते पाठः ।

न च (१)प्रयोजनानवगमाददृष्टतोच्यते । अत्र हि प्रयोजनं फलं च पशव एवावगम्यन्ते, फलान्तरानवगमात् । यच्च किञ्चिद्धविर्विकाराद्यवगम्यते न तत्पाटनादिवत् व्रीह्याद्युत्पत्तेः पशोः कारणतया शक्यते वक्तुम्, अदर्शनात् । तस्मात्प्रमाणान्तरपरीक्षैवात्र धर्मजिज्ञासुभिः कर्तव्या, न पुनरध्ययनाद्धर्मावगतिः ।

कथं पुनः स्वर्गकामादिषु विद्यमानोपलम्भनता ? नियोगस्य तावन्नियोगत्वं पश्चादावपहृतम् । एकश्चायं नियोगोऽनुबन्धभे-

किं च न च प्रयोजनादर्शनाददृष्टतोच्यते । यदि हि प्रयोजनस्यानन्तरादर्शनादस्माभिरदृष्टता दृष्टप्रमाणशून्यता चित्रादावुच्येत तदा सर्वत्र प्रयोजनं क्रियानन्तरमेव ब्रुवाणा वयमुपालभ्येमहि । कथं तर्हि कृष्यादेरिति यावता वयं फलदर्शनादेव ब्रूमहे । तत्र चाव्यभिचार इति । नन्वत्रापि सस्याधिगमवत्कालान्तरेऽपि पशवो भवेयुः, अत्राह—अत्र हि प्रयोजनं फलं च पशव एवावगम्यन्ते फलान्तरादर्शनात् । नन्वस्ति हविर्विकारादिः, तत्राह—यच्च किञ्चिद्धविर्विकाराद्यवगम्यते न तत् पाटनादिवत् व्रीह्याद्युत्पत्तेः पशोः कारणतया शक्यते वक्तुम्, अदर्शनात् । अस्यार्थः—यद्यप्येवं दृश्यते तथापि पशवोऽप्यनन्तरमेव भवन्तीति वक्तव्यम्, कालान्तरे तदुत्पत्तेरयोगात् । क्रियाया विनष्टत्वात्, हविर्विकारस्य च तदुत्पत्त्यननुगुणत्वात् । यथा पाटनं सस्योत्पत्तौ कारणम्, तत एव तदुत्पत्तेः । तस्मादनन्तरभावित्वात्फलस्य पशूनां च फलत्वाद्दृष्टमत्र प्रमाणान्तरम् । तेन तदभावेऽप्रामाण्यमिति सिद्धम् । साधितमर्थमुपसंहरति—तस्मात्प्रमाणान्तरपरीक्षैवात्र धर्मजिज्ञासुभिः कर्तव्या । न पुनरध्ययनाद्धर्मावगतिः ।

कथं पुनः स्वर्गकामादिषु विद्यमानोपलम्भनता ? स्वर्गं प्रति साध्यसाधनभावस्यादृष्टप्रमाणसमधिगम्यत्वात् । ततश्च स्वर्गकामादिचोदनानां स्वातन्त्र्येण प्रामाण्यं स्यादिति । अत्रोत्तरम्—नियोगस्य तावन्नियोगत्वं पश्चादावपहृतम् । एकश्चायं नियोगोऽनुबन्धभेदाद्भिद्यत इति स्थितम् । तस्मात्सर्वत्र सापेक्ष इत्युक्तं भवति । अस्यार्थः—नियोगस्य नियोजकत्वं तावन्नास्ति । प्रमाणान्तरसमधिगम्या फलसाधनतैव कर्मणां नियोक्त्री । तदनुवादकास्तु लिङादय इति यदा पश्चादावुक्तं तदा स्वर्गादावप्येकत्वात् नियोगस्याधिकारविषयानुबन्धमात्रेण भिन्नस्य सर्वत्र नियोजकत्वं नास्ति । तेन तत्रापि सा-

१. प्रयोजनादर्शनात् इति व्याख्यानपाठः

दाङ्क्ष्यत इति स्थितम्। तस्मात्सर्वत्र सोपक्ष इत्युक्तं भवति। अतो यत्र प्रमाणान्तरमस्ति भवतु तत्र तथात्वम्, यत्र नास्ति तत्र मा भूत्। तस्मात्सुष्ठूक्तं—शब्दस्तु न प्रमाणमिति।

(१)"दृष्टविरुद्धं च किञ्चिद्वैदिकं वचनम्। पात्रचयनं विधायाह–'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती'ति प्रत्यक्षं शरीरं व्यपदिशति। न च तत् स्वर्गं यातीति। प्रत्यक्षं हि तद्दह्यते। न चैष यातीति विधिशब्दः। एवंजातीयकं च प्रमाणविरुद्धमप्रमाणम्। कथं पुनरिदं प्रमाणविरुद्धम्? अर्थवादोऽयम्, अर्थवादेषु च सर्वे प्रमाणविरोधा गुणवादेन व्याख्याताः।

अथायमभिप्रायः–नाद्याप्यर्थवादा व्याख्याता इति। बालिशभाषितमेतत्। न ह्युक्तस्योच्यमानस्य वा व्यवस्थितस्याक्षेपो युक्तः, अन्यत्र विशेषाभिधानात्। उक्तोच्यमानताविशेषे विवक्ष्यमाणे

पेक्षत्वात् सर्वत्र सापेक्षश्शब्द इत्युक्तं भवति। अतो यत्र प्रमाणान्तरमस्ति भवतु तत्र तथात्वं, न पुनः प्रामाण्यमनुवादकत्वात्। यत्र नास्ति प्रमाणान्तरं तत्र तथात्वमपि मा भूत् दूरत एव प्रामाण्यम्। तस्मात्सुष्ठूक्तं शब्दस्तु न प्रमाणमिति। सर्वथा प्रमाणत्वाभावात्। अत्र च मूलयुक्तिः पारतन्त्र्यदर्शनात् सापेक्षत्वमिति। विद्यमानोपलम्भनता तु सापेक्षत्व एवाभ्युच्चययुक्तिरिति स्वर्गकामाधिकारेऽपि सापेक्षत्वादप्रामाण्यमिति स्थितम्।

दृष्टविरुद्धञ्च किञ्चिद्वैदिकमित्यादिना एवञ्जातीयकं च प्रमाणविरुद्धं वचनमप्रमाणमित्यन्तेन भाष्यं पठित्वाऽऽक्षिपति—कथं पुनरिदं प्रमाणविरुद्धम्? अर्थवादोऽयम्। अर्थवादेषु च सर्वे प्रमाणविरोधा गुणवादेन व्याख्याता "गुणवादस्त्वि"ति सूत्रेण।

अथायमभिप्रायः–नाद्याप्यर्थवादा गुणवादाश्रयणेन व्याख्याता इति। बालिशभाषितमेतत्; न ह्युक्तस्यार्थस्य पूर्वं उच्यमानस्य वा संप्रति, एतच्चोपलक्षणं वक्ष्यमाणस्य वा(२)व्यवस्थितस्य न्यायोपपन्नस्याक्षेपो युक्तः। तस्य च स्थितत्वे गुणवादोऽपि स्थित इति भाष्यमनुपपन्नमन्यत्र विशेषाभिधानात्। विशेषाभिधाने तु विशेषाभिधानार्थमेवाक्षेपो युक्तः, इह तन्नास्ति।

१. शा. भा. पृ. ९. पं. ३. २. स्थितस्य. इति. ख. पु.

सर्वमनवस्थितं स्यात् । तस्मात् स्थितत्वास्थितत्वमेव वक्तव्यावक्तव्यकारणम् ।

किं चात्रोपन्यस्तस्य परिहृतस्य तत्र पुनरुपन्यासो न घटते, प्रत्यक्षविरोधादिति । उच्यते—स्थित एवार्थवादानां गुणवादेन व्याख्याने इदं वचनमाक्षिप्यते—अत्र हि तदुक्ता गुणवादतैव न सम्भवति । गुणवादा हि प्रमाणान्तरप्रतिपत्तिबलेनोपजायन्ते । अत्र च प्रमाणान्तरप्रतिपत्तिः शरीर एव । न शरीरव्यतिरिक्तं किञ्चिदुपलभामहे । तच्चैष इति व्यपदिष्टं, यातीत्यनेन विरुद्धम्, दह्यमानत्वाच्च शरीरस्य । तस्माद्विधितोऽर्थवादतश्चायथार्थताऽवसीयते ।

किञ्च विधौ हि सति नियोगतोऽपि तावद् स्वातन्त्र्यशङ्का जायते । अर्थवादे तदपि नास्तीति प्रकटयति—'न चैष याती'ति वि-

---

उक्तोन्यमानताविशेषे हि विवक्ष्यमाणं सर्वमनवस्थितं स्यात् । **सर्वत्र सर्वस्य वक्ष्यमाणस्योपयोगिनोऽभिधानापत्तेः** । तस्मात्स्थितत्वास्थितत्वमेव वक्तव्यावक्तव्ययोः **कारणम्** ।

किं चात्रोपन्यस्तस्य **प्रमाणविरोधस्य गुणवादाश्रयणेन च** परिहृतस्य पुनस्तत्रार्थवादाधिकरणे (१)**'शास्त्रदृष्टविरोधा'**दित्युपन्यासो न घटते । (२)**समाधिरुच्यते** । स्थित एवार्थवादानां गुणवादेन व्याख्याने इदं वचनमाक्षिप्यते—**यस्मादत्र** तदुक्ता **अर्थवादव्याख्यानोक्ता** गुणवादतैव न सम्भवति । **यज्ञायुधिशब्देन लक्षणयाऽऽत्मोच्यते । तस्याधिकाराभिप्रायं स्वर्गयानमिति येयं** गुणवादता **परत्र परशब्दप्रवृत्त्यभिप्रायेण लक्षणात्मिका सा** न सम्भवति, **कस्मात्? गुण**वादा हि प्रमाणान्तर (३)प्रतिपत्तिवशादुपजायन्ते, **यथा—गङ्गायां घोष इति** । अत्र च प्रमाणान्तरप्रतिपत्तिः शरीर एव । (४)**नास्मात्** शरीरात् व्यतिरिक्तं किञ्चिदस्ति, **तस्यानुपलब्धेः** । तच्च **शरीरं प्रत्यक्षत्वादेष इति** व्यपदिष्टं यातीत्यनेन विरुद्धम्, दह्यमानत्वाच्छरीरस्य । तस्माद्विधितो **विध्यालोचनया**र्थवादतश्चा**र्थवादालोचनया**ऽयथार्थत्वमेवावसीयत इति । **अनेनोदाहरणान्तरप्रयोजनमपि दर्शितम्** ।

किं च विधौ हि नियोगतोऽपि तावत्स्वातन्त्र्यशङ्का जायते । अर्थवादे साऽपि नास्तीति प्रकटयति—न चैष यातीति विधिशब्द इति । अस्यार्थः—**विधिपक्षे हि नि-**

---

१. जै. सू. १-२-२. २. उच्यते इत्येव. ख. पु.

३. प्रतीतिवशात् इति. क. पु. प्रतिपत्तिबलात् इति मूलपुस्तके ।

४. यस्मान्न व्यतिरिक्तं किञ्चिदस्ति ।

धिशब्द इति । उच्यते—न प्रमाणान्तरापेक्षश्शब्दस्यार्थेन सम्बन्धः । कस्तर्हि ? औत्पत्तिकः ।

ननु च लोके प्रमाणान्तरापेक्षितैव सर्वस्य वचसो दृष्टा । सत्यं व्यवहारे, न त्वभिधाने । यथा लोकेऽप्यौत्पत्तिकमेवाभिधानं तथा सम्बन्धाक्षेपपरिहारे वक्ष्यामः ।

ननु सर्व एवायं तत्रार्थो विवृतः पुनरनूदितः । सत्यं, विशेषाभिधानाय । कः पुनरत्र विशेषोऽभिधीयते ? 'ननु च सम्बन्ध एव नास्ती'ति पूर्वोक्तमाक्षिप्य पुनस्समाधिः । ननु वाक्यार्थोऽयमाक्षि-

---

योगस्य प्रमाणान्तराविषयत्वात्स्वातन्त्र्यशङ्का स्यादपि । अर्थवादे तु सिद्धार्थत्वात्सिद्धस्य च प्रमाणान्तरापेक्षायां विवादाभावात् तदपि स्वातन्त्र्यं शङ्क्यमानमपि नास्तीति 'न चैष याती'त्यनेन भाष्यकारः प्रकटयतीति स्थितम् । उच्यते—न प्रमाणान्तरापेक्षः शब्दस्यार्थेन सम्बन्धः । कस्तर्हि ? औत्पत्तिकः । अनेन ग्रन्थेन पूर्वोक्तमाक्षेपं परिहर्तुमुपक्रमते—यदि हि प्रमाणान्तरापेक्षः शब्दस्यार्थेन सह वाच्यवाचकभावस्सम्बन्धः स्यात् तदा चित्रादिवाक्येषु लिङादयः प्रमाणान्तराननुभूतफलसाधनतानिबन्धनां कार्यतां वदन्तीति स्यादेवाप्रामाण्यम् । औत्पत्तिके स्वाभाविके निरपेक्षे तु वाचकत्वे स्वातन्त्र्येणार्थपरिच्छेदात्प्रामाण्यं युक्तम् ।

ननु च लोके प्रमाणान्तरापेक्षितैव सर्वस्य वचसो दृष्टा । यथा लोके च वेदे प्रतीतिरिति सापेक्षतया प्रामाण्यम् । सत्यं व्यवहारे, न त्वभिधाने । अस्यार्थः—व्यवहारे शब्दप्रयोगलक्षणे सत्यं सापेक्षत्वं, प्रमाणान्तरेणार्थं प्रतीत्य लोकः शब्दं प्रयुङ्क्ते यतः, न पुनरभिधाने सापेक्षता । (१)अर्थशक्तौ चार्थाभिधानात् । न च व्यवहारे सापेक्षता वेदे दोषमावहति, अपौरुषेयत्वात् । पुरुषो हि प्रमाणान्तरप्रतीतिमपेक्षते शब्दं प्रयोक्तुम् । तदभावे त्वपेक्षा नास्ति । कथं पुनरभिधानेऽपेक्षा नास्ति ? तत्राह—यथा च लोकेऽप्यौत्पत्तिकमभिधानं तथा (२)सम्बन्धाक्षेपपरिहारे वक्ष्यामः । यदि पौरुषेयस्सम्बन्धः स्यात्, स्यात्सापेक्षता । यदा पुनरपौरुषेयत्वं वक्ष्यति तदा सेत्स्यत्यनपेक्षत्वम् ।

ननु च सर्व एवायं तत्रार्थो विवृतः औत्पत्तिकसूत्र एव, पुनरिहानूदितः । अनेन पौनरुक्त्यमाह । उत्तरम्—सत्यमनूदितो विशेषाभिधानाय । कः पुनरत्र विशेषोऽभिधीयते ? तद्दर्शयति—'ननु च सम्बन्ध एव नास्ती'ति पूर्वोक्तमेवाक्षिप्य पुनः

---

१. स्वशक्त्यैव. इति ख. पु. २. सम्बन्धपरिहारे इत्येव व्याख्यानपुस्तकपाठः ।

प्तो विद्यमानोपलम्भनत्वादिति । पदविषयं त्वौत्पत्तिकत्वं मन्यन्ते मीमांसकाः । किमनयाऽनुपासितगुरुकथया विकल्पितया । यस्माद्धि यः प्रतीयते स तस्यार्थः । न च केवलात्पदाद्वृद्धव्यवहारे कस्यचिदर्थस्यावगतिर्दृष्टा । अनवगम्यमानस्य चार्थस्य केनचित्सम्बन्ध इति दुर्वचं वचः । कथं तर्हि प्रसिद्धिरियम् ? अनुपासितगुरुत्वादित्युक्तम् । तस्मादौत्पत्तिको वाक्यार्थयोस्सम्बन्धः ।

**(१)"स्यादेतदेवम् , नैव शब्दस्यार्थेनास्ति सम्बन्धः । कुतोऽस्य पौरुषेयताऽपौरुषेयता वा ? कथम् ? स्याच्चेदर्थेन सम्बन्धः क्षुरमोदकशब्दोच्चारणात् मुखस्य पाटनपूरणे स्याताम् संश्लेषसम्बन्धमभिप्रेत्योच्येत भवता । कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयि(२)यौनादयः सम्बन्धाः शब्दस्यार्थेनानुपपन्ना एवेति"** । स्यादेतदिति । य-

---

समाधिरिति । ननु : वाक्यार्थोऽयमाक्षिप्तो विद्यमानोपलम्भनत्वादिति । पदविषयं त्वौत्पत्तिकत्वं मीमांसका मन्यन्ते । **तस्माद्भिन्नविषयत्वादाक्षेपपरिहारावसम्बद्धावित्यर्थः** । किमनयाऽनुपासितगुरोरभिहितान्**वयवादिनः** कथया विकल्पितया । यस्माद्यः प्रतीयते स तस्यार्थः । न च केवलात्पदाद्वृद्धव्यवहारे कस्यचिदर्थस्यावगतिर्दृष्टा । अनवगम्यमानस्य चार्थस्य केनचित्सम्बन्ध इति दुर्वचं वचः । **अनेन ग्रन्थेन वाक्यविषय आक्षेपः । औत्पत्तिकत्वमपि वाक्यविषयमेवेति परिहारः । यस्मान्न केवलं पदं कञ्चिदर्थप्रतीतिं जनयति वृद्धव्यवहारे तथा व्युत्पत्तिविरहात् , अन्वितस्वार्थाभिधानतयैव व्युत्पत्तेः । अर्थान्तरापेक्षत्वाच्चान्वयस्य पदान्तरादृते तदनवगतेः । पदान्तरापेक्षत्वे च सिद्धं वाक्यस्यैव प्रतिपादकत्वं, न केवलस्य पदस्य ।** कथं तर्हि प्रसिद्धिरियं **पदविषयमौत्पत्तिकत्वमिति** ? अनुपासितगुरुत्वा**द्भ्रान्तिमूले**त्युक्तम् । तस्मादौत्पत्तिको वाक्यवाक्यार्थयोस्सम्बन्धः ।

स्यादेतदेवं नैव शब्दस्यार्थेनास्ति सम्बन्धः । कुतोऽस्य पौरुषेयताऽपौरुषेयता वेति । कथम् ? स्याच्चेदर्थेन सम्बन्धः क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्यातां (यदि) संश्लेषं सम्बन्धमभिप्रेत्य **भवता सिद्धान्तवादिना औत्पत्तिकत्वं सम्बन्धस्योच्येत** । कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयियौनादयः सम्बन्धाः शब्दस्यार्थेनानुपपन्ना एवेति **भाष्यं पठित्वा भवतेति चार्थलभ्येन शब्देन पूरयित्वा**

---

१. शा. भा. पृ. ९. पं. २३. २. यौनादयः इति नास्ति. मुद्रितभाष्यपुस्तके ।

दि नित्यस्सम्बन्धः स्यादित्यर्थः । इदं किमिति न स्याच्चोदनालक्षणोऽर्थो धर्म इति । स्याच्चेदर्थेन सम्बन्ध इति अस्याभावहेतुं क्षुरमोदकशब्दोच्चारणग्रन्थेन ब्रुवन् सम्बन्धस्याभ्युपगमं दर्शयति—संश्लेषसम्बन्धमभिप्रेत्येति । केनायमभ्युपगतस्सम्बन्धः ? येन निराकरणीयतयोपन्यस्यते ।

ननु च शब्दस्वातन्त्र्यवादिभिः शब्दादर्थोऽवगम्यत इत्ययमेवाऽभ्युपगतस्सम्बन्धः । अनभ्युपगतस्य निराकरणमन्धपदम् । इदमेवात्र निराक्रियते—यदुत शब्दादर्थोऽवगम्यत इति । कथं पुनः

---

व्याचष्टे—स्यादेतदिति । यदि नित्यस्सम्बन्धः स्यादित्यर्थः । अनेन यदि नित्यः सम्बन्धः स्यादित्यध्याहारापेक्षं स्यादेतदिति भाष्यमिति दर्शयति । टीकार्थस्तु—स्यादेतदिति भाष्यस्य यदि नित्यः सम्बन्धः स्यात् स्यादेतदित्येषोऽर्थ इति । पुनरिदानीं स्यादेतदिति भाष्यमक्षरतो व्याचष्टे—इदमुपसंहारभाष्योक्तम् । तस्माच्चोदनालक्षणोऽर्थो धर्म इतीदं किमिति न स्यात् यावता स्यादेतदेवं चोदनालक्षणो धर्म इति । एतच्छब्देन च स्यादेतदिति(१)भाष्योक्तेन पूर्वप्रकृतं चोदनालक्षणो धर्म इत्येतत्प्रत्यवमृश्यत इत्यर्थः । स्याच्चेदर्थेन सम्बन्ध इत्यस्य सम्बन्धस्याभावहेतु क्षुरमोदक (प्राह्य) शब्दोच्चारणग्रन्थेन ब्रुवन् भाष्यकारः सम्बन्धस्य संश्लेषलक्षणस्याभ्युपगमं दर्शयति । संश्लेषसम्बन्धमभिप्रेत्योच्यत इत्यनेन भाष्येण । तत्र दूषणमाह—केनायमभ्युपगतस्सम्बन्धः येन निराकरणीयतया मुखस्य पाटनपूरणप्रसक्त्या निराकार्यतयोपन्यस्यते ।

एकग्रन्थेनाह—ननु च शब्दस्वातन्त्र्यवादिभिर्मीमांसकैश्शब्दादर्थोऽवगम्यत इत्ययमेव, वाच्यवाचकभाव इति यावत्, सम्बन्धोऽभ्युपगतो न संश्लेषः । अनभ्युपगतस्य संश्लेषस्य निराकरणमन्धपदम् अपर्यालोचनापूर्वकमित्यर्थः । अत्र समाधिमाह—इदमेवात्र निराक्रियते—यदुत शब्दादर्थोऽवगम्यत इति वाच्यवाचकभाव एवायं निराक्रियते । केन कारणेन निराक्रियत इति । एतन्नोपपद्यत इत्यनेन कारणेनेत्यर्थः । कथं पुनस्संश्लेषसम्बन्धनिराकरणेनेदं शब्दादर्थोऽवगम्यत इति निराकृतं भवति ? न ह्यन्यस्मिन्निराकृतेऽन्यन्निराकृतं भवतीत्यभिप्रायः । भवतीत्युत्तरम् । भवति निराकृतमित्यर्थः ।

---

१. भाष्यश्रुतेन

संश्लेषसम्बन्धनिराकरणेनैतन्निराकृतं भवति ? भवति । शब्दादर्थज्ञानं हि कार्यं केनचित्कारणेन । शब्दादर्थज्ञानं च न शब्दादेवेति शक्यते वक्तुं चक्षुरादीनामिव ; प्रथमश्रवणादप्रतीतेः । एवं तर्हि धूमादीनामग्न्याद्यर्थावगताविव न स्वरूपमेव कारणम् , किं तर्हि ? सहावस्थानादिलक्षणस्सम्बन्धः । स चायं शब्दे न कश्चिदुपलभ्यते प्रागर्थावगमात् । तस्मात्सम्बन्धान्तरनिराकरणेन वाच्यवाचकता निराकृता भवति ।

यद्येवं सर्व एव निराकरणीयाः । किमिदमुच्यते ? यौनादयो नैव संभवन्तीति संश्लेषस्यैव सहेतुकं निराकरणम् ।

अथायमभिप्रायः-यौनादयो नोपलभ्यन्त इति । संश्लेषो वा किमुपलभ्यते ? तथा च 'क्षुरमोदकशब्दोच्चारण' इत्यनुपलब्धिरेवोपन्यस्ता । तस्मान्न विद्मः केन विशेषेणेदं निराकरणीयतयोपन्यस्तमिति ।

---

**कुतः** ? । शब्दादर्थज्ञानं हि कार्यं केनचित्कारणेन । **तत्र तावन्न** शब्दादेव **केवला**-दिदं कार्यमुत्पद्यत इति शक्यते वक्तुं चक्षुरादीनामिव । **यथा चक्षुरादीनां कार्यं चक्षुरादिभ्य एवोत्पद्यते नथेदमपीति** न, कस्मात् ? प्रथमश्रवणादप्रतीतेः । **एक-ग्रन्थेनाह**-एवं तर्ह्येवं **च** मति स्वरूपमेव **शब्दस्यार्थज्ञाने** न कारणम् । **यथा** धूमादीनां न स्वरूपमेवाग्न्याद्यवगतौ कारणम् । किं तर्हि ? सहावस्थानादिलक्षणस्सम्बन्धः । स चायं शब्दे न कश्चिदुपलभ्यते प्रागर्थावगमात् । **यथा धूमादिषु सहभावः प्रागेवानुमानादुपलभ्यते** । तस्मात्**कारणभूत**सम्बन्धान्तरनिराकरणेन **कार्य-भूता** वाच्यवाचकतैव निराकृता भवति ।

यदि **कारणतया निराकरणं संश्लेषस्य** एवं सर्व एव **सम्बन्धा** निराकरणीयाः । किमिदमुच्यते ? यौनादयो नैव सम्भवन्तीति **सिद्धाभावप्रदर्शनमात्रं क्रियमाणं निराकरणं न भवतीति । युक्तितो बाधनं निराकरणम् । तच्च यौनादेर्न कृतम्** । संश्लेषस्यैव हि सहेतुकं निराकरणं कृतम् ।

अथायमभिप्रायः—यौनादयो नोपलभ्यन्ते **तेनानाशङ्कनीयत्वात् न निराक्रियन्ते इति । एतद्दूषयति**—संश्लेषो वा किमुपलभ्यते **येन निराक्रियते यावता सोऽपि नोपलभ्यते** । तथा च **स्वयमेव भाष्यकारेण** क्षुरमोदकशब्दोच्चारण **इत्यनेन ग्रन्थेनानु**पलब्धिरेवोपन्यस्ता । तस्मान्न विद्मः केन विशेषेणायं **भाष्यका**-

अथायमभिप्रायः-संश्लिष्टस्यैवार्थस्य गम्यता गमकत्वं चेति। तदयुक्तम्, कार्यकारणयोरसंश्लिष्टयोरपि(१)(गम्यगमकत्वदर्शनात्। तस्मान्नैकान्तेन संश्लेष एव कारणम्। अपि तु कार्यकारणभावादयोऽपि। कार्यकारणमपि तन्त्वादि संश्लिष्टमिति चेत्! नैतन्निमित्ते सम्भवति)। (२)गम्यमानमेव गम्यं च(?)। तस्मादिदमन्धपदमिति प्रतिभाति।

उच्यते-अत्र ह्यौत्पत्तिकवादिनः केचित् स्वमेव रूपमध्यस्य शब्दोऽर्थं प्रत्याययतीति प्रतिपन्नाः। युक्तिश्चोक्ता-स्वमेव रूपं शब्दस्य येयमर्थपरिणतिरिति। अतस्तन्निराकरणायेदमुक्तम्।

---

**रेण निराकरणीयतया संश्लेष** उपन्यस्तः।

अथायमभिप्रायः—**गमकत्वं शब्दस्य गम्यत्वं चार्थस्य। तच्चान्यत्र** संश्लिष्टस्यैव **दृष्टम्। तेनेहापि कदाचित्तदेवाशङ्क्येतेति** निराक्रियते: तदयुक्तम्, कार्यकारणयोरसंश्लिष्टयोरपि गम्यगमकत्वदर्शनात्। तस्मात् नैकान्तेन संश्लेष एव कारणम्। अपि तु कार्यकारणभावादयोऽपि। **अतस्तेऽपि निराकरणीया इति भावः। अत्र परिचोदयति**—कार्यकारणमपि तन्त्वादि संश्लिष्टमिति चेत? अस्यार्थः-**सर्वत्र संश्लेषो व्यापकः। कार्यकारणयोरपि समवायिकारणभूततन्तुपटयोरसमवायिकारणात्मकतन्तुसंयोगपटयोश्च संश्लेषदर्शनात्**। नैतन्निमित्ते संभवति। **नैतत्संश्लिष्टत्वं निमित्ते कुविन्दादौ संभवति। न च कुविन्दादयो न कारणम्, तद्भावभावाविशेषात्।** गम्यं च **कार्यदर्शनात्?। तस्मान्नैकान्ततः संश्लेषादवगतिः। किन्तु सम्बन्धान्तरादपीति।** तस्मादन्धपदमेवेदं **सर्वं संश्लेषसम्बन्धमात्रनिराकरणं** प्रतिभाति।

**अत्र परिहारमाह**--उच्यते—अत्र ह्यौत्पत्तिकवादिनः केचित्स्वरूपमेवाध्यस्य शब्दोऽर्थ(३)प्रत्याययतीति प्रतिपन्नाः। **वैयाकरणाः किल शब्द एवार्थरूपेणाध्यस्तः शब्दादवगम्यत इति मन्यन्ते।** युक्तिश्च तैरेवोक्ता-(४)स्वयमेव रूपं शब्दस्य येयमर्थपरिणतिरिति। **योऽयमर्थाकारः स शब्दस्यैव रूपं यस्मात्तस्माच्छब्दाध्यासरूपोऽर्थः। अर्थाकारस्य शब्दरूपत्वे च निर्देशतुल्यतैव हेतुः।** अतस्तन्निराकरणायेदमुक्तं **संश्लेषनिराकरणम्। यस्मात्तस्मिन्पक्षे** संश्लेष

---

१. अत्र ग्रन्थपातः प्रतिभाति। अत ( ) एतत्कुण्डलान्तर्गतो व्याख्यानतोऽनुमितः पाठ इत्यवगन्तव्यम्। २. इदमनन्वितं प्रतिभाति।

३. प्रतिपादयतीति ख० पु०। ४. स्वमेव इति मूलपुस्तकपाठः।

तस्मिन्पक्षे संश्लेष एव शब्दार्थयोस्सम्बन्धः, सोऽयं कार्यानुपलब्ध्या न घटत इति 'क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याता'मित्युक्तम् । कथं तर्हि गौरयमिति तुल्यो निर्देशश्शब्दार्थयोः ? अस्त्ययं निर्देशः । स तु नाध्यासकृत इत्याकृतिग्रन्थे वक्ष्यामः । यौनादयस्तु सम्बन्धाः शब्दस्यानुपपन्ना एवेत्यनभ्युपगमं दर्शयति । (१)"**योऽत्र व्यपदेश्यस्सम्बन्धस्तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च यस्संज्ञासंज्ञिलक्षणः सम्बन्ध**" इत्यनेनौत्पत्तिकत्वं पुनरुपोद्बलयति ।

(२)"**आह-यदि प्रत्यायकश्शब्दः प्रथमश्रुतः किं न प्रत्याययति**" । स्वतो हि सर्वभावानां प्रवृत्तिश्चक्षुरादीनामिव रूपग्रहणे । तस्मात्सापेक्षत्वं शब्दस्यार्थप्रतिपत्तावस्तीति **प्रथमश्रुतः किं न प्रत्याययतीत्युक्तम्** । (३)"**सर्वत्र नो दर्शनं प्रमाणमिति**" । स्वाभाविकानां स्वभावत एव कार्यकारिणां सापेक्षत्वमन-

---

**एव तादात्म्यरूपश्**शब्दार्थयोस्सम्बन्धः । सोऽयं **संश्लेषः** कार्यानुपलब्ध्या न घटत इति क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्यातामित्युक्तम् । **यदि तादात्म्यं नास्ति** कथं तर्हि गौरयमिति तुल्यो निर्देशः शब्दार्थयोः ? **अत्र परिहारः**—अस्त्ययं निर्देशः । स तु नाध्यासकृत इत्याकृतिग्रन्थे **परिहारं** वक्ष्यामः । यौनादयस्तु सम्बन्धाः शब्दस्यानुपपन्ना एवेत्यनभ्युपगमं दर्शयति । योऽत्र व्यपदेश्यः सम्बन्धस्तमेकं न व्यपदिशति भवान्—प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षणः सम्बन्ध इत्यनेनौत्पत्तिकत्वं पुनरुपोद्बलयति **राद्धान्ती** ।

आह—यदि प्रत्यायकश्शब्दः, प्रथमश्रुतः किं न प्रत्याययतीति **भाष्यम्** । **तत्राभिप्रायं टीकाकारो व्यनक्ति**—स्वतो हि सर्वभावानां प्रवृत्तिश्चक्षुरादीनामिव रूपग्रहणे । **सर्वभावा हि कार्यकरणे प्रवर्तमानाः स्वत एव प्रवर्त्तन्ते, यथा—चक्षुरादयो रूपग्रहणे । शब्दस्तु प्रथमश्रवणेऽप्रतिपादकत्वात् स्वत एव न प्रवर्त्तते । ( तस्मात्केनचित् सम्बन्धं कृत्वा प्रवर्त्तित इति ज्ञायते )** । तस्मात्सापेक्षत्वं शब्दस्यार्थप्रतिपत्तावस्तीति प्रथमश्रुतः किं न प्रत्याययती-

---

१. शा. भा. पृ. ९. पं २८. । २. शा. भा. पृ. ९. पं २९. ।
३. शा. भा. पृ. ९. पं ३०. । ( ) एतत्कुण्डलान्तर्गतो भागः ख. पुस्तके नास्ति ।

पेक्षत्वं च दर्शनादेवावगम्यते। दृष्टं हि चक्षुरादेस्स्वाभाविकत्वेऽपि रूपावगतावालोकसापेक्षत्वं दहने चानपेक्षत्वमग्न्यादेः। तदिद मुक्तं "सर्वत्र नो दर्शनं प्रमाण" मिति। दृष्टं हि कार्यं पुरुषप्रयत्नानपेक्षं पुरुषानुपलब्धेः। सापेक्षं च प्रथमप्रयोगादनवगतेः प्रयोगान्तरे चावगमात्। यदि प्रथमश्रुतो न प्रत्याययति कृतकस्तर्हीति कोऽभिप्रायश्चोदकस्य? यदि तावत्कृतकः कार्यो न सामयिक इत्यभिप्रायः, ततस्सिद्धं साध्यते। पुरुषान्तरप्रत्ययान्तरानपेक्षता हि शाब्दं प्रमाणमिति वदतोऽभिप्रेता चक्षुरादीनामिव रूपग्रहणे। न पुनरुत्पत्तिमत्तापि नेष्यते। उत्पद्यत एव हि सम्बन्धः, क्रियागर्भत्वात्तस्य। क्रियायाश्चोत्पत्तिमत्वात्तदनुवर्ती सम्बन्धोऽप्युत्पत्तिमानेव।

अथ कृतको रज्जुघटयोरिव पुरुषप्रयत्नजन्य इत्यभिप्रायः, तदयुक्तम्; चक्षुरादेरालोकाभावे कदाचित्कार्यमकुर्वतः तत्सद्भावे च कार्यं कुर्वतोऽपि पुरुषान्तरप्रत्ययान्तरानपेक्षत्वात्सम्बन्धस्य तथा

---

त्यनेन **भाष्येणोक्तम्**। सर्वत्र नो दर्शनं प्रमाणमिति स्वाभाविकानां स्वभावत एव (१)**पुरुषप्रयत्नमनपेक्ष्य** कार्यकारिणां **सापेक्षत्वं निरपेक्षत्वं च द्वयमपि** दर्शनादेवावगम्यते। दृष्टं हि चक्षुरादेः स्वाभाविकत्वेऽपि रूपावगतावालोकसापेक्षत्वं, दहने चानपेक्षत्वमग्न्यादेः। तेन **सापेक्षत्वमात्रं प्रथमश्रवणेऽर्थाप्रतिपादिकत्वात् स्यात न तु पुरुषप्रयत्नापेक्षित्वम्**। तदिदमुक्तं–सर्वत्र नो दर्शनं प्रमाणमिति। दृष्टं हि कार्यं पुरुषप्रयत्नानपेक्षम्, पुरुषानुपलब्धेः। सापेक्षता च प्रथमश्रवणादनवगतेः; प्रयोगान्तरे चावगमात्। यदि प्रथमश्रुतो न प्रत्याययति कृतकस्तर्हीति कोऽभिप्रायश्चोदकस्येत्यनेन **भाष्यमाक्षिपति। एकग्रन्थेनाह**—यदि तावत्कृतकः कार्य **इत्येतावानभिप्रायः न** सामयिकः **पुरुषसङ्केतप्रवर्तित इति**, ततः सिद्धं साध्यते। **कुतः**? पुरुषान्तरप्रत्ययान्तरानपेक्षता हि शाब्दं प्रमाणं वदतोऽभिप्रेता चक्षुरादीनामिव रूपग्रहणे। न पुनरुत्पत्तिमत्तापि नेष्यते। उत्पद्यत **एव** हि सम्बन्धः, क्रियागर्भत्वात्तस्य। क्रियायाश्चोत्पत्तिमत्वात्; तदनुवर्ती सम्बन्धोऽप्युत्पत्तिमानेव।

**स एव पुनरप्येकग्रन्थेनाह**—अथ कृतको रज्जुघटयोरिव पुरुषप्रयत्नजन्य इत्यभिप्रायः, तदयुक्तम्, चक्षुरादेरालोकाभावे कदाचित्कार्यमकुर्वतः तत्सद्भावे च कार्यं कुर्वतोऽपि पुरुषान्तरप्रत्ययान्तरानपेक्षत्वात् सम्बन्धस्य तथा शब्दस्यापि सम्बन्धस्स्या-

---

१. पुरुषप्रयत्नानपेक्षकार्यकराणां. इति० ख० पु०।

शब्दस्यापि सम्बन्धस्स्यादिति । तस्मादसमर्थमिव सिद्धान्तलङ्घने भाष्यं प्रतिभाति कृतकस्तर्हीति -नेदमसमर्थम् । अयमस्याभिप्रायः—नेदमुद्योतादितुल्यम् । उद्योतस्याप्यनुग्राहकत्वं कार्यसमधिगम्यमेव । अनवगतिपूर्वकत्वादवगतेश्चक्षुरादीनाम् ? (१)शब्देन सामयिकत्वं कृतकता वोक्ता ।

(२)"अथ गौरित्यत्र कश्शब्द" इति कोऽयं प्रश्नः ? अथ-

---

दिति । तस्मादसमर्थमिव।**शक्तमिव** सिद्धान्तलङ्घने भाष्यं प्रतिभाति कृतकस्तर्हीति । नेदमसमर्थम् । अयमस्याभिप्रायः—नेदमुद्योतादितुल्यं **द्वितीयादिश्रव**णं, उद्योतस्यापि ह्यनु**ग्रा**हकत्वमेतत्कार्यसमधिगम्यमेव । **तथैव कार्यदर्शनात्** । अनवगतिपूर्वकत्वात् अवगतेश्चक्षुरादीनाम् । **न च चक्षुरादयोऽवगमकत्वेनावगता अवगमकाः तेन तत्र युक्तम् । शब्दे पुनस्त्वयैवं वक्तव्यम्** अवगतिपूर्विकैवार्थावगतिरिति । **यस्माद्व्यवहारेऽयम**स्यार्थ इत्यवगम्य ततः शब्दादर्थं प्रतिपद्यते इति । **न च प्रतिपत्तावनुत्पन्नायामयमस्यार्थ इति ज्ञानं भवति । तस्मादवगतिपूर्विकैवार्थावगतिरिति त्वयाऽभ्युपगमनीयम् । न चैतद्युक्तम्, अवगतेरेव कारणं चिन्त्यते यतः । न चावगतिरेवावगतेः कारणमिति युक्तम । आत्माश्रयदोषप्रसङ्गात् । तस्मान्निमित्तान्तरापेक्षायां देवदत्तादिषु दृष्टः समय एव गवादिष्वर्थप्रतिपत्तिहेतुरिति साम्प्रतम् । तथा च कीर्त्तिनोक्तम—**

**"यज्जातीयो यतः सिद्धः स तस्मादग्निकाष्टवत् ।**
**अदृष्टहेतुरप्यन्यो विशिष्टस्सम्प्रतीयते" ॥ इति ।**

**तदिदमाह**—तस्मात्सम्बन्धान्तरपूर्विकैवार्थावगतिरिति सिद्धा सापेक्षता । तदिदं कृतकशब्देन सामायिकत्वं कृतकता वोक्ता । **यदाऽयमर्थः प्रतिपादयितुमभिप्रेतः तदा मयाऽयं शब्दः प्रयोज्य इति योऽयं प्रयोगनियमः स** समयः । **तेन निर्वृत्त**स्सामयिकः **शब्दार्थयोस्सम्बन्धः । तस्मिंश्च पक्षे शब्दप्रयोगादर्थप्रतिपादनाभिप्रायं प्रतीत्य तत्पुरस्सरमर्थज्ञानम्, अस्य शब्दस्यायमर्थ इति यावत् । पुरुषस्य सङ्केतः तेन सम्बन्धः कृतकोऽभिप्रेतः । तस्मिंस्तु पक्षे शब्दादेवार्थज्ञानम् । पक्षद्वये चास्मिन् पुरुषप्रयत्नापेक्षत्वात्सम्बन्धस्य तत्पुरस्सरत्वाच्च वेदादर्थावगतेः पौरुषेयत्वमेव वेदानाम् । पुरुषाश्च प्रमाणान्तरेणार्थमवगम्यावगमयन्तीति सापेक्षता । ततश्चाप्रामाण्यं चोदनाया इति स्थितोऽयमाक्षेपः ॥**

अथ गौरित्यत्र कश्शब्द इति कोऽयं प्रश्नः ? अस्यार्थः—**सापेक्षतया शब्द-**

---

१. अत्र ग्रन्थस्त्रुटितो व्याख्यानतोऽनुमेयः । २. शा. भा. पृ. १०. पं. १०.

मयं प्रश्नः–यद्यपरिणत्या शब्दोऽर्थं प्रतिपादयति कस्तर्हि शब्दोऽभिप्रेतः ?। यः श्रोत्रेणावच्छिद्यते स शब्दः ?। ओमित्युच्यते।
(१)"श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः। ते च श्रोत्रग्रहणाः" गकारौकारविसर्जनीयाः।

नन्वेवमर्थप्रत्ययो नोपपद्यते क्रमवर्तित्वाद्वर्णानाम्। क्षणिकत्वाच्च तदुपलब्धेः। उपलभ्यमानतया च पदादिव्यवस्था, न सन्मात्रतया। तस्मादनुपपन्नोऽर्थप्रत्ययः।

---

स्याप्रामाण्ये पूर्वपक्षवादिनाक्तेऽत्र कोऽयं प्रश्नः ? अयं सिद्धान्तवादिनः सिद्धान्तं कर्तुमवसरः। न चायं सिद्धान्तोपक्रम एव। तथा हि गकारौकारविसर्जनीया इति भगवानुपवर्ष इत्युत्तरं पूर्वपक्षवादिनः स्यात्। तच्चानुपपन्नम्। तस्मादयुक्तोऽयं प्रश्नः। अयमयं प्रश्नः–यद्यपरिणत्या शब्दोऽर्थमवगमयति। कस्तर्हि शब्दोऽभिप्रेतः ? अत्रेदमर्थतत्त्वं वैयाकरणः पूर्वपक्षवादिना सिद्धान्तिनि पराजिते सिद्धान्तिनमेव पर्यनुयुङ्क्ते संश्लेषलक्षणसम्बन्धं परित्यजता भवता प्रत्याय्यप्रत्यायकभावं चाभ्युपगच्छता अपरिणत्या शब्दोऽर्थमवगमयतीत्यभ्युपगन्तव्यम्। एवमभ्युपगच्छतस्ते कः शब्दोऽभिप्रेतः ? न तावद्वर्णात्मकः, तेभ्योऽर्थप्रतिपत्त्ययोगात्। तस्माद्वर्णात्मकश्शब्दोऽभ्युपेयः। तस्य चार्थतादात्म्यमविरुद्धम्। तेन संश्लेषलक्षणः सम्बन्धोऽभ्युपगम्यताम्। तथा च स्वाभाविकोऽपि सम्बन्धः सिद्ध इत्यनपेक्षत्वमपि सिद्धम्। तेन विमुच्यतां प्रत्याय्यप्रत्यायकभावलक्षणस्सम्बन्ध इति। तेन युक्तोऽयं प्रश्नः। एकग्रन्थेनाह— योऽयं श्रोत्रेणावच्छिद्यते स शब्दो भवतोऽभिमत ? इति। इदानीं सिद्धान्त्याह— ओमित्युच्यते अङ्गीकारे ह्योमिति। तेनाङ्गीक्रियत इति यावत्। यस्माच्छ्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः। ते च श्रोत्रग्रहणाः गकारौकारविसर्जनीयाः। तस्मात्त एव शब्दाः।

नन्वेवं सत्यर्थप्रत्ययो नोपपद्यते। कथम् ? क्रमवर्तित्वाद्वर्णानां, क्षणिकत्वाच्च तदुपलब्धीनामुपलभ्यमानतया च पदादिव्यवस्था, न तु सन्मात्रतया। तस्मादनुपपन्नोऽयमर्थप्रत्ययः। अस्यार्थः–वर्णास्तावन्न सन्मात्रतयाऽर्थं प्रतिपादयन्ति। तेषां सर्वगतत्वान्नित्यत्वाच्च सर्वदा सर्वत्र चार्थप्रतीतेः। उपलब्धिपक्षे तु प्रत्येकं प्रतिपादकत्वं नास्ति। न च समुदितानाम्, क्रमवर्तित्वात्तदुपलब्धीनाम्। न च क्रमोत्पन्नानामुपलब्धीनां स्थेम्नोपलब्धौ साहित्यम्। तासां क्षणिकत्वात्। न च तत्प्रकारातिरेकि प्रकारान्तरमस्तीत्यनुपप-

---

१. शा. भा. पृ. १०. पं. ११।

अथायमभिप्रायः- उपलब्धिविनाशेऽपि हि तत्स्मृत्यनुग्रहादर्थावगम इति । सापि न सर्वविषयिणी । उपलब्धिवत् । उपलब्ध्यनुसारिणी हि सा । अतोऽप्यर्थावगतिर्न घटते । तस्माच्छब्दतत्त्वमेवेदमर्थरूपतया विपरिवर्तत इत्युक्तं शब्दविद्भिः ।

किंचाविवर्तपक्षे श्रोत्रादिव्यापारनिरपेक्षैव स्वरूपेऽर्थे वाऽवगतिः शक्यते वक्तुम् । बाढम्, शब्दादयः श्रोत्राद्यवच्छेदेनैकरूपा अप्यनेकरूपतया प्रतिभान्ति । मरकतपद्मरागादिषु मुखमेकमनेकमिव प्रतिभाति तथात्रापि ।

---

न्नोऽर्थप्रत्ययः ।

अथायमभिप्रायः—उपलब्धिविनाशेऽपि हि तत्स्मृत्यनुग्रहादर्थावगम इति । अस्यार्थः—यद्यपि क्षणिकत्वादुपलब्धयो युगपन्न सम्भवन्ति, तथापि तत्स्मृत्यनुगृहीता वर्णा अवगमं करिष्यन्तीति । सापि न सर्वविषयिणी, उपलब्धिवत् । उपलब्ध्यनुसारिणी हि सा । अस्यार्थः—सापि स्मृतिस्सर्ववर्णविषयिका नास्ति, यथोपलब्धिः प्रत्येकवर्णविषया तथा सापि । यस्मादुपलब्ध्या संस्कारः क्रियते संस्काराच्च स्मृतिः । तेनोपलब्धिवदेकैकवर्णविषयात् संस्कारात् स्मृतिरिति न सर्ववर्णविषयत्वम् । न च प्रत्येकवर्ण(१)विषयाभ्य एव स्मृतिभ्यः संस्कारयौगपद्येन युगपद्भाविनीभ्योऽर्थप्रतीतिः, क्रमविपर्ययोच्चरितेष्वपि वर्णेषु संस्कारयौगपद्येन स्मृतौ यौगपद्याविशेषात्त(२)त्प्रसंगात् । अतोऽप्यर्थावगतिर्न घटते । तस्माच्छब्दतत्त्वमेवेदमर्थरूपतया विवर्तत इत्युक्तं शब्दविद्भिः । यस्माद्वर्णातिरेकी शब्दः कार्यगम्यः तस्मात्स विवर्ततेऽर्थरूपेणेति प्रतीतिविरुद्धता नास्ति । वर्णात्मके हि शब्दे गवादीनां तद्रूपता प्रत्यक्षेण विरुध्यते ।

किं चाविवर्तपक्षे श्रोत्रादिव्यापारनिरपेक्षैव स्वरूपेऽर्थे वाऽवगतिश्शक्यते वक्तुम् । अस्यार्थः—विवर्तवादिनापि हि श्रोत्रादिव्यापारापेक्षा शब्दस्वरूपेऽर्थे वाऽवगतिर्वाच्या । सा च भिन्नयोरेव शब्दार्थयोराकारं समर्पयति । यदि परं श्रोत्रादिव्यापारानपेक्षा प्रतीतिरभ्युपगम्येत तदा स्यादेव विवर्तः, न चासावस्तीति विवर्तपक्षोऽप्यनुपपन्नः । अत्रोत्तरम्—बाढम्, अतिशयेन शक्यते । शब्दादयः श्रोत्राद्यवच्छेदेन ह्येकरूपा अप्यनेकरूपा इव प्रतिभान्ति । अस्यार्थः—यद्यपि परमार्थतो भेदो नास्ति तथापि श्रोत्राद्युपाधिवशेन भिन्नबुद्धिर्भवति । अत्र दृष्टान्तमाह—मरकतपद्मरागादिषु मुखमेकमप्यनेकरूपमिव

१. विषयात्यये इति क० पु० । २. तदर्थसंवित्प्रसङ्गात् इति ख० पु० ।

ननु च खड्गादिष्वेकं ग्राहकम्। उपाधयो हि खड्गादयः तदेकग्राहकवशादेकं मुखमिति शक्यते वक्तुम्। भेदाश्चोपाधिनिबन्धनाः। अत्र पुनः किमेकं ग्राहकं शब्दादेः ? यद्वशाच्छ्रोत्राद्युपाधिकृतो भेदः, एकमेवेदं वस्त्विति वर्ण्यते। किमिदं प्रलप्यते- एकग्राहकवशादेकं वस्त्विति। एकत्वादेव ह्येकत्वम्। ननु चोक्तमेकत्वमेव न प्रतीयेत इति। श्रोत्रादयो हि प्रतीतेः कारणम्। ते च भेदेनैव प्रतीतिमुत्पादयन्तीति प्रतीतिभेदे सत्येकं वस्त्विति दुर्वचः। कथं तर्हि खड्गादिषु तदेवेदं मुखमिति ? बिम्बाकारप्रत्यभिज्ञानात् तदुपाधिनिबन्धनो भेद इति शक्यते वक्तुम्। उक्तं तर्हि त्वयैवैकत्वं- प्रत्यभिज्ञानादेकत्वमिति। अस्ति चेदमेकत्वं शब्दादावपि- गौरयं, शुक्लोऽयं, सुरभि चन्दनमिति। तस्मा-

---

प्रतिभाति तथात्रापि **भविष्यति**।

ननु खड्गादिष्वेकं ग्राहकं **चक्षुरिन्द्रियम्**। उपायो हि खड्गादयः **तस्यैकस्य** वशेनैकं मुखमिति शक्यते वक्तुम्। भेदाश्चोपाधिनिबन्धना **इति च शक्यते वक्तुम्**। अत्र पुनः किमेकं ग्राहकं शब्दादेः ? यद्वशाच्छ्रोत्राद्युपाधिकृतो भेदः, एकमेवेदं वस्त्विति वर्ण्यते। **एकस्मिन् ग्राहके श्रोत्रादयो भिन्ना उपाधिमात्रतयैवावतिष्ठन्ते। तद्वशाच्च भेद इति युज्येतापि। अत्रोत्तरम्**- किमिदं प्रलप्यते- एकग्राहकवशादेकं वस्त्विति। **अत्रापि नैकग्राहकवशादेकं मुखम्। किंतु** एकत्वादेव ह्येकत्वम्। **एकत्वेनैव प्रतीतेरेकत्वम्, तनात्राप्येकत्वेन प्रतीतेः शब्दरूपादीनामेकत्वमिति**। ननु चोक्तमेकत्वमेव न प्रतीयत इति। **कस्मात् ?** श्रोत्रादयः प्रतीतेः कारणम्। ते च भेदेनैव प्रतीतिमुत्पादयन्ति। प्रतीतिभेदे च सत्येकं वस्त्विति दुर्वचः। कथं तर्हि खड्गादिषु तदेवेदं मुखमिति ? बिम्बाकारप्रत्यभिज्ञानादुपाधि**निबन्धनो** भेद इति शक्यते वक्तुम्। अस्यार्थ **-कथमुपाधिषु नानावभासे सत्यपि तदेवेदं मुखमिति निश्चयः, यावता भेद एव स्यात्। यदि बिम्बाकारप्रत्यभिज्ञा स्यात्तद्दोषनिबन्धनो भेद इति शक्यते वक्तुम्, नान्यथा**। उत्तरम्—उक्तं तर्हि त्वयैवेकत्वम्। **त्वया** हि प्रत्यभिज्ञानादेकत्वं **भवेदिति वदता एकत्वमुक्तम्। कुतः प्रत्यभिज्ञानात् ? सर्वत्र तदेवेदं मुखमिति प्रतीतेः। अत्र भेदाभेदयोः परस्परविरोधित्वे भेदस्योपाधिवशेनाप्युपपत्तेरभेद एव पारमार्थिक इति निश्चीयते**।

**ननु च भवत्वेवं मुखे, शब्दादिषु कथमिति, तत्राह**—अस्ति चेदमेकत्वं

दत्राप्येकतया प्रत्यभिज्ञानात् श्रोत्राद्युपाधिनिबन्धन एव भेद इत्युपपन्नम् । श्रोत्रादिभेदः किंनिबन्धनः ? विषयभेदप्रतिपत्तिनिबन्धन इति वदामः । विषयभेदप्रतिपत्तेः किं निबन्धनम् ? । श्रोत्रादिभेद इत्युक्तम् । एवं तर्हीतरेतराश्रयतोक्ता भवति । बाढमुक्ता । अविद्यामातृकेयम् । अत एवाविद्येत्युच्यते बुधैः । तस्माद्विवर्त्त एवाश्रयणीयस्तत्त्वविद्भिरवगतेः कारणम् । तस्मादशब्दज्ञो देवानां प्रियः । यो हि युतसिद्धयोश्शब्दार्थयोस्सम्बन्धमर्थावगतौ कारणं मन्यते । पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इति कोऽयं संस्कारो नाम ? यदि तावद्वर्णावगतिः, प्रत्युक्ता सा । स्मरणमपि तथैव ।

---

शब्दादावपि । गौरयमिति **जातिशब्दयोस्तुल्यव्यपदेशादेकत्वावगमः** । शुक्लोऽयमिति **रूपशब्दयोः** । सुरभि चन्दनमिति **गन्धशब्दयोर्द्रव्यशब्दयोश्च** । तस्मादत्राप्येकतया प्रत्यभिज्ञानात् श्रोत्राद्युपाधिनिबन्धन **एवायं** भेद इत्युपपन्नम् । **अस्यार्थः**—**सर्वशब्देषु तावच्छब्द इत्येका बुद्धिः । अभिव्यञ्जकध्वनिवशात् भेदः । शब्दस्य जात्यादीनां तुल्यव्यपदेशादभेदः, श्रोत्राद्युपाधिवशेन च भेद इत्युपपन्नम् ।** अत्र चोदयति—श्रोत्रादेः किंनिबन्धनो भेदः ? **अत्राभिप्रायः—त्वन्मते सर्वं जगदेकरूपम् । अतश्श्रोत्रादेरपि कथं भेद इति** । विषयभेदप्रतिपत्तिनिबन्धन इति वदामः । **कार्यभेदाच्छ्रोत्रादीनामपि भेद इत्यर्थः** । विषयभेदप्रतिपत्तेः किं निबन्धनम् ? **विषयभूतानां शब्दानां भेदप्रतिपत्तेः किं कारणमित्यर्थः** । श्रोत्रादिभेदो **निबन्धनमित्युक्तमेवानन्तरम्** । एवं सतीतरेतराश्रयतोक्ता भवति । **सा च न युक्ता** । बाढमुक्ता, अविद्यामातृकेयम् । **येयमितरेतराश्रयता सेयमविद्या मातृका मातृसदृशी । यदि हि काचिदत्रानुपपत्तिर्न स्यात् विद्यैव स्यात् । न तूपपन्नार्थे चाविद्या ।** अतएवाविद्येत्युच्यते बुधैः । **यत एवानुपपन्ना तस्मात्** विवर्त एवाश्रयणीयस्तत्त्वविद्भिर**वगतेः कारणम्, विवर्तस्योपपन्नत्वात् ।**

**एवं वैयाकरणः स्वपक्षं साधयित्वा मीमांसकं पराजित्य पर्यनुयुङ्क्ते**—अतो न शब्दज्ञो देवानां प्रियः, यो हि युतसिद्धयोः शब्दार्थयोस्सम्बन्धं अर्थावगतौ कारणं मन्यत इति । पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इति कोऽयं संस्कारो नाम ? यदि तावद्वर्णावगतिः **संस्क्रियतेऽर्थप्रतीतियोग्यात्मा क्रियतेऽनयेति व्युत्पत्त्या;** प्रत्युक्ता सा **अर्थोपलब्धौ कारणत्वं तस्या न सम्भवति, अयौगपद्यादित्युक्तम् । अथ स्मरणं संस्कारः, अत्राह—**स्मरणमपि तथैव **यथैवोपलब्धिस्तथैवाकारणम्, अयौगपद्यादेव ।**

अथ स्मृतिकार्यान्यथानुपपत्त्या कश्चित्पदार्थः कालान्तराव- स्थायी विद्यत इति कल्प्यते, असावपि प्रतिवर्णविषय एवेति शक्यते कल्पयितुम् । एकैकवर्णविषयत्वादुपलब्धेः, तदनुसारित्वाच्च स्मृतेः, तत्कार्यत्वाच्च संस्कारस्य । तस्माद्वर्णोपलब्धिवदसावपि न कारणम् ।

न च स्मृतिविज्ञानशून्यस्संस्कारोऽस्तीति प्रमाणमस्ति । दर्शयति च प्रत्येकवर्णविषयमेव संस्कारं(१) "पूर्ववर्णजनितविशेषसं- स्कारसहितोऽन्त्यो वर्णो वाचक" इति ब्रुवन् । तस्मादुपलब्धि-

---

अथ स्मृतिकार्यान्यथानुपपत्त्या कश्चित्पदार्थविशेषः कालान्तरावस्थायी विद्यत इति कल्प्यते । अनुभूत एव वस्तुनि स्मरणं भवति, नाननुभूते । तत्र यद्यनुभवः कञ्चिदतिशयमात्मनि नादध्यात् तदानुभूताननुभूतयोरविशेषादुभय- त्रापि स्मृतिस्स्यात् । न चोभयत्रापि । अतश्चेयं व्यवस्थया स्मृतिरुपजा- यमानाऽनुभवाहितसंस्कारं प्रकल्पयति । सोऽपि यद्यनुभववत्क्षणिक- स्स्यात् कालान्तरे स्मृतिर्नोपपद्यते । तस्मात्कालान्तरावस्थायी संस्का रोऽस्तीति गम्यते । तेनास्य स्थास्नुतया यौगपद्यमुपपद्यत इति । त- त्राह—असावपि प्रतिवर्णविषय एवेति शक्यते कल्पयितुम् । एकैकवर्णविषयत्वादुपलब्धे स्तदनुसारित्वाच्च स्मृतेस्तत्कार्यत्वाच्च संस्कारस्य । अस्यार्थः—संस्कारो हि वर्ण- स्मृतिजनकतया वर्णान् स्मृतौ युगपदुपलम्भयन् अर्थप्रतीतौ कारणतां यायात् । स चैकैकवर्णविषय एव न सकलवर्णविषयः । कस्मात् ? उ- पलब्धिभिराधीयन्ते संस्काराः । उपलब्धयश्च प्रत्येकवर्णविषया एव । तेन कारणमुखेन तावदेकैकवर्णविषयस्संस्कारः । तथा कार्यमपि यत्सं स्कारस्य कल्पकं तदपि प्रत्येकवर्णविषयमेव, उपलब्ध्यनुसारित्वात्स्मृ- तेः । उपलब्धं हि स्मर्यते, नानुपलब्धम् । न च समुदिता वर्णा उपलब्धा इति न समुदितवर्णविषया स्मृतिः । तत्कार्यत्वाच्च संस्कारस्य सैव स्मृतिः कार्यं यस्य स तत्कार्यः, तस्य भावस्तत्कार्यत्वम् , तस्मात् । एतदुक्तं भवति—स्मृतितः संस्कारः कल्प्यमानः कार्यानुरूप्यात्प्रतिवर्णविषय एव कल्पनीय इति । तस्माद्वर्णोपलब्धिवदसावपि न कारणम् ।

ननु भवतु स्मृतिहेतुस्संस्कारः प्रतिवर्णविषयः, अन्य एवापूर्वः प्रतिवर्णजनितोऽर्थप्रतीतिहेतुरस्तु । तत्राह—न च स्मृतिज्ञानशून्यः संस्कारो- ऽस्तीति प्रमाणमस्ति । अर्थप्रतीतिलक्षणकार्यस्य विवर्त्तनाप्युपपत्तेरिति वक्ष्यति । दर्शयति च प्रत्येकवर्णविषयमेव संस्कारं "पूर्ववर्णजनितसंस्कारसहितो-

---

१. शा भा. पृ. १०. पं १८. अत्र मुद्रितभाष्यपुस्तके पाठभेदोऽस्ति ।

स्मृतिभ्यां किमधिकमस्यार्थप्रतिपत्तौ सामर्थ्यं मन्यते भाष्यकारः ! स्फोटवादिनो वा कथमित्येतदप्यनुत्तरम् । न ह्यभ्युपगतिरर्थसिद्धौ हेतुः । तस्मादुपवर्णनीयोऽयं ग्रन्थः ।

अथ कालान्तरावस्थायितैव विशेषः, तन्न ; परस्परासम्बन्धे हि किमवस्थितिः करिष्यति । अथार्थप्रतिपत्तिरेव सम्बन्धहेतुः । एवमितरेतराश्रयता प्राप्नोति । भवत्विति चेत् ! न तत्त्वागमे युक्तोऽयमभ्युपगमः । कथं तर्हि बीजाङ्कुरादिषु ? दर्शनादिति यद्युच्येत, तदिहापि दर्शनं शक्यते वक्तुं विवर्तप्रतिपक्षसम्भवात् । अर्थावगतिर्हि का-

ऽन्त्यो वर्णः प्रत्यायक" इति ब्रुवन् । पूर्ववर्णास्संस्कारजनकाः, अन्त्यो नेति । अतो न संभूय वर्णाः संस्कारमारभन्त इति ज्ञायते । उपसंहरति—तस्मादुपलब्धिस्मृतिभ्यां किमभ्यधिकमस्यार्थप्रतिपत्तौ सामर्थ्यं मन्यते भाष्यकारः । नास्याधिकं सामर्थ्यमस्तीति भावः ।

ननु यथार्थप्रतीतिरनुपपन्ना तथा स्फोटाभिव्यक्तिरप्यनुपपन्ना । तस्मान्नैकैकेन वर्णेन ध्वनिना वा स्फोटोऽभिव्यज्यते । न च नाभिव्यज्यतामिति वाच्यम् । अनभिव्यक्तादर्थप्रत्ययप्रसङ्गात् । न च समुदितैः, समुदायासम्भवात् । न च भागशोऽभिव्यक्तिः, भागाभावात् । तस्मादर्थप्रतीतिरेव परमस्तु वर्णेभ्यः, किं स्फोटकल्पनयेति । तत्राह—स्फोटवादिनो वा कथं स्फोटाभिव्यक्तिरित्यनुत्तरं सिद्धान्तिनः । नाभ्युपगतिरर्थसिद्धौ हेतुः । यत्खल्वनुपपन्नं तदनुपपन्नमेव । न चाभ्युपगमादुपपन्नता भवति । तस्मादुपवर्णनीयोऽयं ग्रन्थः ।

अथ कालान्तरावस्थायितैव विशेषः, उपलब्धिस्मृती क्षणिके, संस्कारस्तु कालान्तरावस्थायीति । तस्मादधिकत्वम् । तन्न; परस्परासम्बन्धे किमवस्थितिः करिष्यति ? एकैकवर्णविषयस्मृतिहेतुत्वात्तस्य, स्मृतीनां च यौगपद्याभावात् स्थायितापि नोपकारिणीति । अथार्थप्रतिपत्तिरेव सम्बन्धहेतुः अर्थप्रतिपत्तिरन्यथानुपपन्ना युगपत्सर्ववर्णविषयां स्मृतिं कल्पयति, स्मृतिरपि संस्काराणां परस्परं संभूय कारितामित्यर्थप्रतिपत्तिरेव संस्काराणामन्योन्यसम्बन्धे हेतुः । उत्तरम्—एवमितरेतराश्रयता प्राप्नोति । वर्णेभ्य एव ह्यर्थप्रतिपत्तौ निश्चितायां परस्परसम्बन्धकल्पना, परस्परसम्बन्धाच्च वर्णेभ्य एवार्थप्रत्ययो वाच्यः । स्फोटादप्यर्थप्रतिपत्त्युत्पत्तेः । भवत्वितरेतराश्रयता, न च दोषमावहेद्विवर्त्तवादिन इवेति चेत् ! न तत्त्वावगमे युक्तोऽयमभ्युपगमः । कथं तर्हि बीजाङ्कुरादिषु ? बीजादङ्कुरोऽङ्कुराच्च बीज-

रणमात्रस्य हेतुतां प्रतिपद्यते। न संस्कारसम्बन्धस्यैव। बीजाङ्कुरादिषु विशेषदर्शनादुपपन्नम्। इह त्वानुमानिकत्वात्संस्कारस्य विशेषोपलब्धिर्नोपपद्यते। तस्माद्विवर्तमेवोपपन्नतरं मन्यामहे। अत एवेदमप्ययुक्तम्। किमयुक्तम्? सा च शब्दकल्पना चेति। कथमयुक्तम्? विवर्तपक्षे हि का नामेयं शब्दकल्पना? यस्मात् अध्यासितोपाधि सर्वप्रमाणावगम्यमेकं वस्त्वित्युक्तम्। तस्मादशब्दज्ञतैवेयं यदुत भिन्नयोरपि शब्दार्थयोरौत्पत्तिकस्सम्बन्धोऽभिधीयते।

नन्वेकत्ववादिनोऽपि नैवायं विभागः शक्यतेऽवगन्तुम्-ज्योतिष्टोमोऽयं, दर्शपूर्णमासाविमाविति। एकत्वे हि न वाक्यैकत्व एवावस्थितिः। सर्ववाक्यानामेकता प्राप्नोति वर्णानामिव पदे पदानामिव वाक्ये; एकत्वावगमादेव। भवति हि सर्ववाक्येषु शब्दः शब्द इत्येका बुद्धिः। सर्ववाक्यार्थेषु च वाक्यार्थ इति। त-

---

मिति। तत्रापि कथमितरेतराश्रयता न भवति? दर्शनादिति यद्युच्येत दृश्यते तावद्बीजादङ्कुरोऽङ्कुराच्च बीजम्। न च दृष्टेऽनुपपत्तिरिति यद्युच्येत, तदिहापि दर्शनं शक्यते वक्तुम्। अर्थप्रतीतिर्हि वर्णप्रतीत्यनुरोधिनी दृश्यते। नैतद् दर्शनं सिद्धम्, विवर्तस्य प्रतिपक्षस्य सम्भवात्। विवर्तादप्यर्थप्रतीतिसम्भवादित्यर्थः। अर्थावगतिर्हि कारणमात्रस्य हेतुतां प्रतिपद्यते कारणमात्रं गमयति न संस्कारस्सम्बन्धस्यैव हेतुतां प्रतिपद्यते। बीजाङ्कुरयोस्तु कारणविशेषदर्शनादुपपन्नं साक्षादेव बीजादङ्कुरोत्पत्तिदर्शनादङ्कुराच्च बीजोत्पत्तेः। इह त्वानुमानिकत्वात्संस्कारस्य वर्णविषयस्य कारणविशेषोपलब्धिर्नोपपद्यते। तस्माद्विवर्त्तमेवोपपन्नतरं मन्यामहे। यतो विवर्त्त एवोपपन्नतरः अत इदानीमिदमप्ययुक्तम्। किमयुक्तम्? सा च शब्दकल्पना चेति। कथमयुक्तम्? विवर्त्तपक्षे हि का नामेयं शब्दकल्पना? यस्मादध्यासितोपाध्यध्यासितविशेषं सर्वप्रमाणावगम्यमेकं वस्त्वित्युक्तम्। तस्मादशब्दज्ञतैवेयं यदुत भिन्नयोरपि शब्दार्थयोरौत्पत्तिकः सम्बन्धोऽभिधीयते। भिन्नयोर्हि वाच्यवाचकलक्षणस्सम्बन्धोऽभ्युपगमनीयः। स चोक्तेन न्यायेन नास्तीत्युच्यते पूर्वपक्षवादिना।

नन्वेकत्ववादिनोऽपि नैवायं विभागः शक्यते(१)वगन्तुं—ज्योतिष्टोमोऽयं, दर्शपूर्णमासाविमाविति। कस्मादित्यत्राह—एकत्वे हि न वाक्यैकत्व एवावस्थितिः, किं तु सर्ववाक्यानामेवैकता प्राप्नोति वर्णानामिव पदे पदानामिव

१. वक्तु इति ख. पु.।

दिदमभिन्नं सर्वमेव ज्योतिष्टोमादि कर्मजातं प्राप्नोति । दृश्यन्ते चाधिकारभेदा विरुद्धाश्चाविरुद्धाश्च । विरुद्धा विरुद्धफलाः । अविरुद्धाश्चाविरुद्धफलाः । तत्र विरुद्धाः कृष्णलचरुसर्वस्वारादयः । अविरुद्धाश्चाग्निहोत्रादयः । नचैतदेकत्व उपपद्यते । सत्यं नैकत्व उपपद्यते । भिन्नार्थानि चैतानि वाक्यानि । एकार्थप्रतिपत्त्यर्था चैकता । न चात्रैकार्थताऽवसीयते । तस्मादेकस्मिन् वाक्ये पदवर्णापलापो युक्तः । वाक्यान्तरे तु किंकृतो वाक्यान्तरस्यापलाप इति । तस्मान्नेयं विरुद्धाविरुद्धचोदनोपपद्यते । शब्दप्रामाण्यवादिनो ह्यर्थसम्बद्धः(१) शब्दः शब्देनोच्यते, न काकवाशिताद्यपि श्रोत्रग्राह्यम् ।

ननु–श्रोत्रादिभेदमुपवर्णयता सर्वमेतदविद्याजातमित्युक्तम् ।

---

वाक्यं । कस्मात् ? एकत्वस्यावगमादेव । भवति हि सर्ववाक्येषु शब्दः शब्द इत्येका बुद्धिः । **तेन वाक्यानि तावदभिन्नानि । वाक्यवदेव च न वाक्यार्थो भिद्यते** ; सर्ववाक्यार्थेषु वाक्यार्थ इत्येका **बुद्धिरस्ति । तद्वशादप्येकता प्राप्नोति** । तदिदमभिन्नं सर्वमेव ज्योतिष्टोमादि कर्मजातं प्राप्नोति । **न चैतदङ्गीकर्त्तुं शक्यम् । तदाह**—दृश्यन्ते चाधिकारभेदा विरुद्धाश्चाविरुद्धाश्च । विरुद्धा विरुद्धफलाः, अविरुद्धाश्चाविरुद्धफलाः । तत्र विरुद्धाः(२) कृष्णलचरुसर्वस्वारादयः, आयुर्मरणयोः फलयोर्विरोधात् । अविरुद्धाश्चाग्निहोत्रादयः । न चैतदेकत्वे **वाक्यानामुपपद्यतेऽनेकार्थत्वम् । समाधत्ते**—सत्यं नैकत्व **इदमुपपद्यते** । भिन्नार्थानि चैतानि वाक्यानि, **साक्षादर्थभेदस्यावगम्यमानत्वात् । ननु च वाक्यानामेकत्वेन तदर्थानामप्येकता । तत्राह**—अर्थप्रतिपत्त्यर्था चैकता । **एकवाक्यत्वमन्तरेणार्थप्रतिपत्त्यनुपपत्तेरेकं वाक्यमङ्गीक्रियते । न च भिन्नेषु वाक्येषु** एकार्थताऽवसीयते । तस्मादेकस्मिन् वाक्ये पदवर्णापलापो युक्तः । वाक्यान्तरे तु किंकृतो वाक्यान्तरस्यापलाप **इति** । तस्मान्नेयं विरुद्धाविरुद्धचोदनोपपद्यते । शब्दप्रामाण्यवादिनश्चार्थसम्बद्धः शब्दोऽभिमतः, न काकवाशिताद्यपि श्रोत्रग्राह्यम् । **तेनार्थभेदादर्थप्रतिपादकशब्दभेदो युक्तः ।**

ननु च श्रोत्रादिभेद**मविद्याकल्पितमित्यु**पवर्णयता सर्वमेतदविद्याजातमित्युक्तम् ।

---

१. शब्दोऽभिमतः इति व्याख्यानसम्मतः पाठः ।

२. "प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इति वाक्येनायूरूपफलमुद्दिश्य विहितायामायुष्कामेष्टौ विहितः कृष्णलचरुः । कृष्णलः माषाकृतिस्सुवर्णखण्डः ॥ "मरणकामो यजेत यः कामयेताऽनामयता स्वर्गं लोकमियाम्" (आप.२२.७.२०) इति विहितो यागविशेषः सर्वस्वारः ॥

किमिदमिदानीमर्द्धजरतीयमुपन्यस्यते—वाक्यवाक्यार्थयोर्भेद एवेति। अनभिप्रायज्ञो देवानां प्रियः। ब्रह्मण्यभावभेद उक्तः। तद्रूपतया केन भेदोऽभिधीयते ? शास्त्रार्थावगतौ च केन वा भेदोऽपह्नोतुं शक्यते श्रोत्रादीनामिव ? सत्यं नापह्नूयते। अविद्या तु प्राप्नोति। विद्या चेष्यते वैदिकोऽर्थः। कथमविद्यातोऽभ्युदयः शक्यते वक्तुम्। अविद्या हि प्रत्यवायस्य निमित्तम्। सत्यं यथा भवानाह। प्रत्यवायस्त्वापेक्षिकः। सर्वं हि क्षयि प्रत्यवायायैव। किन्तु प्रत्यवाय एवैकत्र। स चोपायश्चान्यत्रेति विशेषः। तस्मान्न किञ्चिदत्र पूर्वं परेण विरुध्यते।

ननु वाक्यवाक्यार्थयोर्भेदेऽपि कर्मोत्पत्तिवाक्यैर्गुणवाक्यानां कथमर्थत एकता शक्यते वक्तुम् ? उक्तं भिन्नत्वेऽप्येकानुष्ठानसिद्धि-

---

किमिदमर्द्धजरतीयम् **अर्द्धेन जरत्यर्धेन तरुणीवदिदमुपन्यस्यते**(१) **"समासाच्च तद्विषयात्"** **इतीवार्थे छः।** अत्र वाक्यवाक्यार्थयोर्भेद एवेति। **अत्र समाधत्ते।** अनभिप्रायज्ञो देवानां प्रियः, **यतो** ब्रह्मणि **ब्रह्मावस्थायाम**सावभेद उक्तः। तद्रूपतया केन वा भेदोऽभिधीयते(२)शास्त्रार्थावगतौ च केन वा भेदोऽपह्नोतुं शक्यते श्रोत्रादीनामिव। **अविद्यानिबन्धनो भेदः, परमार्थतस्त्वभेद इत्याशयः।**

**पुनराक्षिपति**—सत्यं **नापह्नूयेत त्वया भेदः,** किन्तु अविद्या प्राप्नोति, विद्या चेष्यते वैदिकोऽर्थः। **अन्यथा** कथमविद्यातोऽभ्युदयः शक्यते वक्तुम् ? अविद्या हि प्रत्यवायस्य निमित्तम्। **परिहरति**—सत्यं यथा भवानाह। प्रत्यवायस्त्वापेक्षिकः। **किञ्चिदिष्टमपि किञ्चिदपेक्ष्य प्रत्यवाय इत्युच्यते, यथा-स्वर्गो मोक्षम्, अन्तवत्त्वात्। तेन** सर्वं क्षयि **कर्मजातं** प्रत्यवायायैवा**न्तवत्त्वादिदोषात्। स च प्रत्यवायो विषयोऽभ्युदयोपायश्च सिध्यतीत्यनभ्युदयार्थिभ्योऽप्यापातरमणीयेभ्यो विशेषः। तदाह**—किन्तु प्रत्यवाय एवैकत्र ब्रह्महत्यादौ। स चोपायश्चान्यत्र **वैदिकोऽर्थ** इति विशेषः। तस्मान्न किञ्चिदत्र पूर्व**मभेदाभिधानं परमार्थाश्रयं** परेणा**विद्यानिबन्धनभेदाभिधानेन** विरुध्यते।

**ननु यदि वाक्यानां वाक्यार्थानां चैक्यं नास्ति तदा** वाक्यवाक्यार्थयोर्भेदेऽपि कर्मोत्पत्तिवाक्यैः**"रग्निहोत्रं जुहोती"त्येवमा**दिभिर्गुणवाक्यानां **"दध्ना जुहोती"त्येवमादीनां** कथमर्थत एकत्वं शक्यते वक्तुं **भिन्नार्थानामिति भावः।**

---

१. पा. सू. ४. ३. १०६.।

२. शास्त्रार्थतया इति ख. पु. शास्त्रसत्वार्थतया वा इति क. पु.।

रिति नित्यकाम्यप्रयोगयोरिव । तस्मात्सर्वमुपपन्नम् ॥

स्यादेतदेवं यद्येका बुद्धिः स्यात् । न ह्यत्रैका बुद्धिरस्ति । ननु च सर्वशब्देषु शब्दः शब्द इत्येका बुद्धिरस्ति । असत्यां चैकबुद्धौ शब्दशब्दवाच्यताऽपि न स्यात्सर्वशब्दानाम् । एकनिमित्तता ह्येकशब्दवाच्यता, न पुनरेकत्वकृता । अत्र चैकं निमित्तमस्ति श्रोत्रग्राह्यता । श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः । किं पुनः कारणं श्रोत्रग्राह्यतैवात्र गृह्यते ? न पुनर्गो-

---

उक्तं भिन्नत्वेऽप्येकानुष्ठानसिद्धिरिति । **न हि 'दध्ना जुहोती'त्यादिभिर्भिन्नमनुष्ठानं चोद्यते** नित्यकाम्ययोरिव **प्रयोगयोः । यथा काम्यस्याग्निहोत्रादिप्रयोगस्य नित्यस्य चैकानुष्ठानसिद्धिः ।** तस्मात्सर्वमुपपन्नमस्मि**मन्नपि पक्षे ॥**

**इदानीं सिद्धान्तमुपक्रमते**—स्यादेतदेवं यद्येका बुद्धिः स्यात् । न ह्यत्रैका बुद्धिरस्ति । ननु च सर्वशब्देषु शब्दः शब्द इत्येका बुद्धिरस्ति । **यदि चैका बुद्धिर्न स्यात्** असत्यां चैकबुद्धौ शब्दशब्दवाच्यतापि न स्यात्सर्वशब्दानाम् । **यथा रूपादिषु शब्दशब्दो न प्रवर्त्तते तथा गकारादिष्वपि न प्रवर्त्तेत । अत्र प्रतिसमाधत्ते**—एकनिमित्तता ह्येकशब्दवाच्यता । न पुनरेकताकृता । अस्यार्थः—**न वर्णेष्वेकाकारा बुद्धिरस्ति । यस्मादेकेन निमित्तेन विनैकशब्दप्रवृत्तिर्न भवति । तच्च निमित्तं क्वचिज्जातिः क्रिया गुणो द्रव्यं वा गौर्गन्ता शुक्लो विषाणीति यथा । क्वचिद्वस्तुनैवैकत्वं यथा तस्मिन्नेव वस्तुनि पुनः शब्दप्रवृत्तावाकाशमाकाशमिति । न पुनरेकत्वमेवास्या निमित्तम् । अतोऽनैकान्तिकत्वादेकशब्दप्रवृत्तेर्न सिध्यत्येका बुद्धिः ।**

**ननु—निमि(१)त्तान्तराभावाद्वस्तुस्वरूपैकतैव निमित्तमेकशब्दप्रवृत्तेरित्याशङ्क्याह**—अत्र च **शब्दशब्दप्रवृत्तावेकं** निमित्तमस्ति श्रोत्रग्राह्यत्वं, **यतः** श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः । **तस्माच्छ्रोत्रग्राह्यतैव शब्दशब्दप्रवृत्तौ निमित्तम् । न च सत्ववर्णत्वादौ व्यभिचारः । सत्वादीनां श्रोत्राग्राह्यत्वात् । न हि सत्ववर्णत्वादि सामान्यमस्तीन्द्रियग्राह्यमिति समनन्तरमेव निवेदयिष्यामः ।** किं पुनः कारणं **केन पुनः कारणेनेत्यर्थः । 'निमित्तकारणहेतुष्वि'ति प्रथमा द्वितीया वा तृतीयार्थे ।** श्रोत्रग्राह्यतैवात्र **निमित्तं** गृह्यते **अङ्गीक्रियते** न पुनर्गोत्ववच्छब्दत्वमेवाश्रयियते **निमित्तम् ।**

---

१. "निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्" (का. वा. २. ३. २७) इति कात्यायनवार्तिकानुसारेणेत्यर्थः ॥

त्ववच्छब्दत्वमाश्रीयते । सामान्यविशेषविषयमज्ञानमत्रापराध्यत एवं चोदयतः । किं पुनः सामान्यविशेषविषयं ज्ञानम्? इदं ज्ञानं–यस्मिन् पदार्थग्रहणे सति पूर्वदर्शनसम्बन्ध्यवमर्शो भवति, तत्सामान्यम् । न च गकारादिष्वेकवर्णग्रहे सति वर्णान्तरावमर्शो भवति पाचकादिवत् ।

अथोत्तरम्—सामान्यविशेषविषयमज्ञानमत्रापराध्यते एवं चोदयतः । एवं चोदयन् भवान्न सामान्यं विशेषं वा जानातीति लक्ष्यते । यदि सामान्यं वा विशेषं वा जानीयात् नैवं चोदयेत् । किं पुनः सामान्यविशेषविषयं ज्ञानम्? यन्मम नास्तीति पृच्छति । तत्र प्रतिवदति—यस्मिन् पदार्थग्रहणे सति पूर्वदर्शनसम्बन्ध्यवमर्शो भवति, तत्सामान्यम् , यथा विलक्षणशाबलेयादिपदार्थग्रहणे सति गौर्गौरित्यादिपूर्वदृष्टाकारानुसन्धानम् । तत्र यद्विषयं तत्सामान्यं गोत्वादि । अत्र च समानवर्त्तिकावर्त्तिनीषु ज्वालासु ज्वालात्वं सामान्यं नास्तीति दर्शयितुं पदार्थग्रहणे सति विशेषणमुपात्तम् । न हि ज्वालानां भेदकं किञ्चिदवबुध्यते । एकबुद्धिरपि तत्र भेदाग्रहणनिबन्धनेति(?) शब्दाधिकरणे वक्ष्यामः । न च गकारादिष्वेकवर्णग्रहणे सति वर्णान्तरावमर्शो भवति । वर्णान्तरेऽनुभूतस्यावमर्शो न भवतीत्यर्थः । पाचकादिष्विव । यथा बहुषु पुरुषेषु पाचकेषु नैकाकारा बुद्धिरस्ति, तथेहापि । एतेन सत्वादिसामान्यानि प्रत्युक्तानि । न हि जातिगुणक्रियाद्रव्येषु साधारणाकारावमर्शोऽस्ति । सदादिशब्दानां प्रमेयादिशब्दवत्प्रवृत्तिसम्भवात् । किं पुनःसच्छब्दस्य प्रवृत्तिनिमित्तम्? प्रमाणसम्बन्धः ।

नन्वेवं तर्हि प्रमाणसम्बन्धस्यापरिकल्पने अप्रमीयमाणावस्थायां सच्छब्दानुविद्धा बुद्धिर्न स्यात्—अस्ति घटः, आसीत् घटो, भविष्यति घट,–इति । न खलु पचिक्रियासम्बन्धानवबोधे पाचक इति कश्चिद्व्यपदिशति । यदि तु प्रमाणोत्तरकालभाव्येव चायं व्यपदेशः स्यात् तथापि त्रिधा भेदो नोपपद्यते । सर्वस्य प्रमाणस्यानिवृत्तत्वादासीदिति भवेत् । सत्ताख्ये तु महासामान्ये तस्य चातीतत्वादासीदित्युच्यते, तथा वर्त्तमानत्वादस्तीति, आगामित्वाच्च भविष्यतीति । अत्र प्रतिविधीयते–यस्यापि सामान्यं व्यतिरिक्तमस्ति तस्यापि तत्किमिति क्वचिद्विचालितमागमिष्यति वा विनष्टत्वादाश्रयभूतस्य द्रव्यस्योत्पद्यमानत्वाच्चेति

१. पू. मी. १ १.६.

तस्मात् क्रियानिबन्धनैवेयं शब्दशब्दवाच्यता । कस्यायं विवर्तः ? कस्य वा श्रोत्रादय उपाधितामापद्यन्ते ? तस्माद्विडम्बनैषा विवर्ततेऽर्थभावेनेति । तस्मात् कार्यत एव सम्बन्धोऽपि कल्पनीयस्संस्काराणाम्, नोपलब्धिस्मृत्योः, अनवस्थितेः ।

---

चेत् ? कः पुनर्विनाशः ? सत्तापगम एवेति चेत् ! सूक्तमिदं सत्तापगमात् सत्तापगम इति । अथ स्वरूपापगमो विनाशः, तथा भाविन्यपि स्वरूपस्यैव भावित्वमिति । अङ्गीकृतं तर्हि स्वरूपसत्तापि भावानामस्तीति । सा चेदभ्युपगता तदा तस्या एव त्रैकाल्यादासीदस्ति भविष्यतीत्युपपन्नस्त्रेधा व्यपदेशः । महासामान्यं च सत्तामवजानीमहे । न स्वरूपसत्तामपि । एतेनेदमपि निराकृतम्—यदुच्यते निवृत्तसकलप्रमाणसम्बन्धे वस्तुनि सत्तासन्देहो न स्यात् । प्रमाणसम्बन्धस्य निरस्तत्वात् । तल्लक्षणत्वाच्च सत्ताया इति । यतोऽस्तमितसकलप्रमाणव्यापारे स्वरूपमेव सन्दिह्यते । भिन्नेषु तु पदार्थस्वभावेषु सच्छन्दप्रवृत्तौ प्रमाणसम्बन्धयोग्यतैव निमित्तमित्युच्यते, न पुनः प्रमाणसम्बन्ध एव सच्छब्दवाच्यः । यथा बहुषु पुरुषेषु परस्पराभिन्नेषु एकपाचिक्रियोपाधिवशेन पाचकशब्दो निविशत इति नानुपपन्नम् । प्रकृतमुपसंहरति—तस्मात् क्रियानिबन्धनैवेयं शब्दशब्दवाच्यता । कस्यायं विवर्तः ? कस्य च श्रोत्रादय उपाधितामापद्यन्ते ? येनैकरूपोऽपि श्रोत्राद्युपाधिभेदेन भिन्नो भातीति कल्प्यताम् । एकस्य वस्तुनोऽभावात् । तस्मात् विडम्बनैषा विवर्ततेऽर्थभावेनेति । मुखादौ युक्तम्, आदर्शादिष्वेकमुखाकारानुसन्धानेन सर्वप्रतीतीनामुदयात् । यत एव विवर्तः प्रतिपक्षभूतोऽर्थप्रतिपत्तिहेतुर्नास्ति, तस्मादर्थप्रतिपत्तिलक्षणात् कार्यादेवान्यथानुपपन्नात् संस्काराणां सम्बन्धोऽप्यभिन्नस्मरणाख्यकार्यजनकत्वरूपः कल्पनीयः । नोपलब्धिस्मृत्योरनवस्थादर्शनात् ॥

अत्रापरे पर्यचोदयांबभूवुः—यदि प्रत्येकवर्णोपलम्भसम्भूतभावनोपजातसकलवर्णविषयस्मृतिनिबन्धनोऽर्थप्रत्ययः, तर्हि विपरीतक्रमोच्चारितेष्वपि वर्णेषु प्रत्येकानुभवाहितानां भावनानामविशेषाद्यौगपद्याच्च मिलितसकलवर्णगोचरस्मरणकारणत्वादर्थप्रतीतिः किं न भवेत् ? तथा नानापुरुषसमुच्चारितेष्वप्येकैकोपलम्भानामभेदात् ।

अत्रेदमेव तावदुत्तरं वाच्यम्—कार्यतस्साहित्ये कल्प्यमाने यथाकार्यमेव कल्पयितुं न्याय्यमिति । किन्तु क्रमविशेषपरिगृहीता एव वर्णाः अर्थप्रतीतिहेतवः ।

यदप्युक्तम्—अयुक्तं सा च शब्दकल्पना चेति। तत्राप्यर्थापरिज्ञानमेवापराध्यते। इदं हि तत्रोच्यते—परमार्थस्योपाधिकल्पना, अविद्यमानस्य च कल्पनेति। तदिदं सा च शब्दकल्पना चेति। सुरभिचन्दनादीनामाकृतिग्रन्थे परिहारं वक्ष्याम इत्युक्तम्। ननु च शब्दादर्थं प्रतिपद्यामह इत्येतदिदानीं लौकिकं वचनं नोपपद्यते। किं गकारादयो न शब्दाः? शब्दास्ते, न शब्दः। शब्दादिति चैकवचनं पदाभिप्रायम्। न चैतत्पदमस्तीत्युपपन्नैवेयमनुपपत्तिः। तथा च शास्त्रकारैरपि

---

स्यान्मतम्—स्वभावतो नित्यानां विभूनां वर्णानां कालानिबन्धनस्य देशानिबन्धनस्य च पौर्वापर्यस्याभावादुपलब्धिनिबन्धनं तदुपेयम्। एका चेयं सकलस्मरणात्मिका बुद्धिरिति न तन्निबन्धनः क्रम उपपद्यत इति। तदिदमसाम्प्रतम्। उक्तं स्मरणात्मिका धीरियमिति। तेन पूर्वोपलम्भसम्बन्धसम्भवं पौर्वापर्यं पर्यालोचयन्ती जायत इति किमनुपपन्नम्? नन्वेकक्षणभाविनी स्मृतिः कथं भिन्नमवध्यवधिमद्भावं भासयति? क्रमवदवगतनानावर्णविषयत्वात्तस्याः स्मृत्तेः। एतेन नदीदीनादिषु पदभेदबुद्धिर्व्याख्याता। क्रमभेदेन तदुपपत्तेः। एवं च विच्छेदोच्चरितेऽष्वर्थप्रत्ययो न भवति। युगपत्स्मरणाभावात्। भाष्ये च "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचक" इत्यनास्थावादः। परमार्थतस्तु सर्ववर्णेषु स्मरणारूढेष्वेवार्थप्रत्ययः, अन्विताभिधानस्यान्यथानुपपत्तेरिति वक्ष्यामः।

यदप्युक्तमयुक्तं सा च शब्दकल्पना चेति, तत्राप्यर्थापरिज्ञानमेवापराध्यते। इदं हि तत्रोच्यते—परमार्थस्यैव **वर्णजातस्यो**पाधिकल्पना अविद्यमान**स्यैकस्य वस्तुनस्सत्व**कल्पनेति। तदिदं सा च शब्दकल्पना चेति। **एवं तावत्परस्परं शब्दानामैक्यं नास्तीत्युक्तम्। इदानीं शब्दानामर्थानां च भेदं दर्शयति**—सुरभिचन्दनादीनामाकृतिग्रन्थे परिहारं वक्ष्याम इत्युक्तम्। ननु च शब्दादर्थं प्रतिपद्यामहे इत्येतदिदानीं लौकिकं वचनं नोपपद्यते। **सिद्धान्ती पृच्छति** किं गकारादयो न शब्दाः? **येनानुपपत्तिः। पूर्वपक्षी ब्रूते**—शब्दास्ते बहवः, न शब्द एक; शब्दादिति चैकवचनं पदाभिप्रायम्। **न च वर्णव्यतिरिक्तं पदमस्ति। वर्णाश्च बहवः। न तदभिप्रायेणैकवचनोपपत्तिरित्युपपन्ना युक्तिमतीयमनुपपत्तिर्लौकिकस्य वचनस्य सिद्धान्त इति।** तथा च शास्त्रकारैरपि पदाभिप्रायेणैवोपन्यस्तं—पूर्वापरीभूतं भावमाख्यातेनाचष्ट—इति। कामं मोपपादि, **यस्मा**दनुपपन्नार्थमपि लौकिकं वचनं दृष्टं—**दश दाडिमानि षडपूपा इति। यान्येव दश दाडिमानि तान्येव** षडपूपा **इत्यर्थः। किंच**

पदाभिप्रायेणैवोपन्यस्तम्-(१)"पूर्वापरीभूतं भावमाख्यातेनाचष्ट" इति । कामं मोपपादि । अनुपपन्नार्थमपि हि लौकिकं वचनं दृष्टम्-दश दाडिमानि षडपूपा इति । लोके चानुपपन्नार्थमेव किञ्चित् दृष्ट्वा शास्त्रं तन्नियमाय प्रवृत्तम् । इह पुनर्नैवेयमनुपपत्तिः, समुदायस्य निमित्तत्वात् । कार्यैक्यात्त्वेकत्वोपचारः । तस्माच्छास्त्रकारवचनमप्यनयैव युक्त्योपपन्नम्, पदवाक्यनिर्देशश्च । गौः पदं, अश्वः पदं, लौकिकं वाक्यं, वैदिकं वाक्यमिति च । तस्माद्गकाराद्येव पदं, स एव शब्दो नान्यद्व्यतिरिक्तमस्तीति सिद्धम् ॥

(२)"अथ गौरित्यस्य शब्दस्य कोऽर्थ" इति नायं प्रश्न उपपद्यते । अथ गौरित्यत्र कः शब्द इति युक्तम् । वर्णपक्षेऽपि हि वाचकता नोपपद्यते इत्याशङ्कानिराकरणाय । अभिधेये तु न कश्चिद्विशेषः । आकृतिर्व्यक्तिर्गुणो वा भवतु । न ह्यौत्पत्तिकत्वे कश्चिद्वि-

---

यत एव लौकिकं वचनमनुपपन्नमपि संभवति अत एव व्याकरणादि तन्निवृत्त्यर्थं प्रवृत्तम् । तदाह—लोके चानुपपन्नार्थमेव किंचिद्दृष्ट्वा **प्रयोगं** व्याकरणादि शास्त्रं तन्नियमाय प्रवृत्तम्; **अन्यथा अप्रसक्त एवापभ्रंश इति नारभ्यं** व्याकरणम् । इह पुनर्नैवानुपपत्तिः, समुदायस्य निमित्तत्वा**त्तस्य चैकत्वादेकवचनोपपत्तेः। अत्राह-ननु शब्दशब्दः समुदाये वर्तितुं नार्हति । न वाचकसमुदाये वाचकशब्दो वर्तत इति । कुत एतत्? लोकत एवेति चेत्! एवं तर्हि वर्तत इत्यवेहि, एकवचनस्यान्यथानुपपत्तेः । निरस्तश्च विवर्तः । अपि च सर्वेषां वर्णानां मिलितानामर्थप्रत्यायकत्वादेकाकारावस्थेत्युपपन्नमेकवचनम् । तदाह**-कार्यैक्याच्चैकत्वोपचार **इति** । तस्मात् शास्त्रकारवचनमप्यनयैव युक्त्योपपन्नम् । पदवाक्यनिर्देश**श्चोपपन्नो** गौः पदं, अश्वः पदं, लौकिकं वाक्यं, वैदिकं वाक्यमिति चे**त्यादिकः** । तस्माद्गकाराद्येव पदम् । स एव शब्दो नान्यद्गत्वादिव्यतिरिक्तमस्तीति सिद्धम् ।

अथ गौरित्यस्य शब्दस्य कोऽर्थ इति नायं प्रश्न उपपद्यते । **ननु शब्दो निरूपितः, संप्रत्यर्थो निरूप्यत इति ; तत्राह**-अथ गौरित्यत्र कः शब्द इति युक्तं **यत्पृष्टम्** । वर्णपक्षे हि वाचकत्वं नोपपद्यते इति **वैयाकरणाना**माशङ्कानिराकरणाय । अभिधेये तु न कश्चिद्विशेषः । आकृतिर्वा गुणो वा व्यक्तिर्वाऽभिधेया भवतु **तथापि संबन्धस्यौ**त्पत्तिकत्वे

---

१. निरु. १. १. ८.     २. शा. भा. पृ. ११. पं. १०.

रोधः । अस्थायी चायं पक्षः । नायं राद्धान्तो-यदुताऽऽकृतिवचनतैव सर्वशब्दानामिति । गुणवचनताऽप्यरुणादिषु दृष्टा, व्यक्तिवचनतोद्भिदादिषु । तस्मात् प्रश्नस्तावन्निष्प्रयोजनः । उत्तरमपि राद्धान्तविरुद्धम् ।

अथायमभिप्रायः-उदाहरणाभिप्रायमिति । अत्रापि प्रश्नस्तावन्निष्प्रयोजन एव । उत्तरमपि; यदि शब्दस्य व्यक्तिरर्थः, अथापि सामान्यम्, सम्बन्धे को विशेषः ? विशेषविवक्षायां च प्रयोजनं वक्तव्यम् ।

---

न कश्चिद्विरोधोऽस्ति, यतः सम्बन्धौत्पत्तिकत्वौपायिकं चात्र प्रदर्शयितुं युक्तम् । अस्थायी चायं पक्षः आकृतिगुणव्यक्तीनामभिधेयतेत्येवंरूपः । नायं मीमांसकराद्धान्तः-यदुताकृतिवचनतैव सर्वशब्दानामिति । गुणवचनताऽप्यरुणादिषु दृष्टा । गुणे सत्यरुणादीनां प्रयोगादसति चाप्रयोगात् ।

ननु प्रतिगुण्यरुणादीनां भेदादेकं सामान्यमङ्गीकर्तुमुचितम् । अन्यथा शब्दानां प्रवृत्त्यनुपपत्तेः । अत्राभिधीयते-भिन्नत्वमभिन्नत्वं वा वस्तुनो भिन्नाभिन्नावभासिबुद्धिनिबन्धनम् । तत्र तावदरुणिमादिषु न भेदबुद्धिरस्ति । यापि च पटुमन्दतादिभिर्विशेषैर्विशिष्टबुद्धिः सापि न स्वरूपभेदमावहति, विशेषमात्रत्वात् । नन्वरुणिमादयः परमाणुषु पार्थिवेषु पाकजाः सर्वकार्यद्रव्येषु च कारणगुणपूर्वका इत्युत्पत्तिपरतैवावसीयते । मैवम्; कस्यायमभ्युपगमः आकृतिवद्द्रव्येषु गुणस्समवैतीति ? वयं प्रतिपद्यामहे—सगुणसमवायः कस्य चित्कथञ्चिदुदेत्यपैति च । न च समवायमपि नित्यमेक(१)मभ्युपैति । तेन सकलद्रव्येष्वेकोऽरुणिमाऽरुणमः पदाभिधानीय इति । व्यक्तिवचनता चोद्भिदादिषु । कर्मविशेषनामधेयान्युद्भिदादीनि वक्ष्यति । तस्मात्प्रश्नस्तावन्निष्प्रयोजनः । उत्तरमपि राद्धान्तविरुद्धम्-सास्नादिविशिष्टा आकृतिरिति । किन्तु एवं वाच्यम्-आकृत्यादय इति ।

अथायमभिप्रायः-उदाहरणाभिप्रायमेतदिति । 'अथ गौरित्यस्य शब्दस्य कोऽर्थ' इत्युदाहृतप्रश्नेनानेन तदीयमेव वाच्यमुपदर्शयितुमाकृतिरित्युक्तमिति । अत्रापि प्रश्नस्तावन्निष्प्रयोजनो विशेषशब्दार्थविषयः । एवमेव प्रष्टुमुचितं कशब्दस्यार्थ इति । न पुनर्गोशब्दमेव विशेषणाश्रित्य । उत्तरमपि निष्प्रयोजनम् । यस्माद्यदि गोशब्दस्य व्यक्तिरर्थो यदि वा सामान्य-

---

१. अभ्युपगमः । तेन इति ख. पु.

अथेदमुच्यते—व्यक्तिपक्षे हि सम्बन्धस्य सापेक्षता प्राप्नोतीति। का कथा पाचकादिषु? तत्र क्रियोपलक्षणमिति चेत्! इहाप्याकृतिर्भविष्यति! तत्र ह्यभिहिता क्रिया धातुभागेन, इह त्वनभिहिता जातिर्नालमुपलक्षणायेति चेत्! कल्प्यतामभिधानम्, न पुनस्सापेक्षताभिधाने उपयोगमस्य पश्यामो, निरपेक्षताभिधाने वा। तस्मान्मन्दप्रयोजनता प्रश्नोत्तरयोः।

अत्रोच्यते—वाचकरूपैव सर्ववाक्येष्ववगतिरिति मन्वानः

---

सर्थः संबन्धे को विशेषः? औत्पत्तिकत्वानौत्पत्तिकत्वं प्रति तेन विशेषाभावादुत्तरमेव न दातुमुचितम्। तथार्थविशेषस्याकृतिलक्षणस्य विवक्षायां च प्रयोजनं वक्तव्यम्। एवं हि युज्यते वक्तुमाकृत्यादिभिरिति।

अथेदमुच्यते—व्यक्तिपक्षे यदि व्यक्तिर्वाच्या स्यात्तदा सम्बन्धस्य सापेक्षता प्राप्नोतीति विशेषणाकृतिवचनतां साधयितुं प्रश्नोत्तरे इति। का कथा पाचकादिषु? पाचकादिशब्दा व्यक्तिवचनाः। तेषु संबन्धस्यानपेक्षत्वं कथमिति। तत्र क्रियोपलक्षणमिति चेत्! अस्यार्थः—यद्यपि व्यक्तिवचनता तेषां तथापि पाचकादिषु क्रियाया उपलक्षणभूताया विद्यमानत्वादुपाधिवशेन सम्बन्धग्रहणं सुकरमित्यनपेक्षत्वम्। इहापि गवादिष्वपि आकृतिरुपलक्षणं भविष्यति—एवमाकृतिको गौरिति। ननु च पाचकादिषु युक्तमुपलक्षणत्वम्। तत्र ह्यभिहिता क्रिया धातुभागेनेति भवदुपलक्षणम्। इह त्वखण्डत्वाच्छब्दस्यानभिहिता जातिर्नालमुपलक्षणायेति। उत्तरम्—कल्प्यतामभिधानं यद्युपलक्षणता न संभवति। अयमभिप्रायः—यदत्र न्यायानुगतं तद्भवतु वाच्यत्वमुपलक्षणत्वं वा, न पुनस्सम्बन्धस्य सापेक्षताभिधानेनास्योपयोगं पश्यामः। तस्मान्मन्दप्रयोजनता प्रश्नोत्तरयोः॥

अत्रोच्यते—वाचकरूपैव सर्व(१)वाक्येष्ववगतिरिति मन्वानः शब्दार्थयोर्भेदो नोपपद्यते इति(२)पृष्टवान् पूर्वपक्षवादी। अस्यार्थः—पूर्वं गकारादि विसर्जनीयान्तं वर्णा एव पदमित्युपसंहृतम्। तदाचिक्षिप्सुः पृच्छति पूर्वपक्षवादी—अथ गौरित्यस्य शब्दस्य कोऽर्थ इति। अयं च तस्य भावः—वनमिति बहुषु वृक्षेष्वेकवचनान्तं पदं नोपपद्यते। शब्दरूपे ह्यभिधेये युज्यते। तेन वाचकरूपैव सर्ववाक्येष्ववगतिः। तत्र यदि वर्णात्मकं पदं तदा स्पष्टभेदावभासप्रसङ्गः स्यात्। तस्मादन्यदेवेदं शब्दतत्वम्। तेनायं भाष्यस्यार्थः—गौरित्यस्य शब्दस्य कोऽर्थो भवतोऽभिमतः? किं शब्दाद्व्यतिरिक्तम्?

---

१. वाच्येषु इति ख. पु. २. इत्युक्तवान् इति मूलपुस्तके

शब्दार्थयोर्भेदो नोपपद्यत इति पृष्टवान् पूर्वपक्षवादी। इतरस्तु—अविवेकोऽस्य प्रयोगे अभिधाने च ; प्रायौगिकीं बुद्धिमभिधेयेऽध्यवस्यतीति तदपनुत्तये सास्नादिविशिष्टा आकृतिः—इत्युक्तवान्। प्रदर्शनार्थं चैतदभिधानवत्।

(१)"नन्वाकृतिः साध्याऽस्ति वा न वे"त्यभिधेयतया शब्दरूपतां न जहातीत्युक्तवान्। ननु च तद्रूपापत्तावभावाभिधाने किं प्रयोजनम्? अभिधेयाभिप्राय एवायमभाव उक्तः, न स्वरूपा·

---

येन वर्णा एव पदं ब्रवीषीति। अत्र च न बहिरर्थापह्नवः क्रियते। स्थापितत्वात्, किन्तु शब्दाभिधेयं शब्दाद्व्यतिरिक्तं न भवतीति पूर्वपक्षः क्रियते। इतरस्तु—अविवेकोऽस्य प्रयोगे अभिधाने च। प्रायौगिकीं बुद्धिमभिधेयेऽध्यवस्यति। तदपनुत्तये सास्नादिविशिष्टा आकृतिः इत्युक्तवान्। अस्यार्थः—अस्य वैयाकरणस्य पूर्वपक्षिणः प्रयोगसाधौ अभिधाने अर्थसाधौ अविवेकः, नैवं विविनक्ति—अभिधानसाधुरर्थसद्भाव एव प्रयुज्यते, प्रयोगसाधुस्तु विनाऽप्यर्थेन प्रयुज्यत—इति। तेन प्रायौगिकीं प्रयोगे साधुभावात्मकां बुद्धिमभिधेयेऽध्यवस्यति। वस्तु भवतु बाह्यं शब्दव्यतिरिक्तमेवाव्यपदेश्यम्। अभिधेये तु शब्दात्मकमेवेत्येवं विवेकमपश्यन् शब्दात्मकमभिधेयं दर्शयितुमितरः सिद्धान्ती सास्नादिविशिष्टा आकृतिरित्युक्तवान्। प्रदर्शनार्थं चैतदाकृतिरिति, अभिधानवत्। यथा अभिधानमुपलक्षणं गौरित्यस्य शब्दस्येत्यत्रान्येऽपि शब्दा द्रष्टव्याः, तथाऽऽकृतिरिति उपलक्षणम्, व्यक्त्यादयोऽपि द्रष्टव्याः।

"नन्वाकृतिः साध्याऽस्ति वा न वे"ति भाष्यमाकृतिसद्भावमाक्षिपति। तच्चानुपपन्नम्, वृत्तिकारग्रन्थे साधितत्वादाकृतेरित्यतोऽन्यथा व्याचष्टे—नन्वाकृतिः साध्याऽस्ति वा न वेत्यभिधेयतया शब्दरूपतां न जहातीत्युक्तवान्। अस्यार्थः—न स्वरूपेणाकृतिर्नास्तीत्युच्यते। किं त्वभिधेयतया शब्दरूपा। ननु च तद्रूपापत्तावभावाभिधाने किं प्रयोजनम्? भाष्ये किला'स्ति वा न वे'ति ग्रन्थेनाऽऽकृतेरभावः प्रतिपाद्यते। तच्च न युक्तम्। एवं वक्तव्यम्—शब्दस्वरूपवाऽऽकृतिरिति। परिहरति—अभिधेयाभिप्राय एवायमभाव उक्तः, न स्वरूपाभिप्रायः। अस्यार्थः—अभिधेयरूपा जातिः(२) शब्दव्यतिरिक्ताऽस्ति वा न वेति भाष्येणोक्तम्। न पुनः स्वरूपेणास्ति वा न वेति। अत्र भाष्यम्—'न प्रत्यक्षा सती'ति स्वरूपसद्भावमेवाकृतेः समर्थयमानमिव दृश्यते। तच्चानुपपन्नम्।

१. शा. भा. पृ. ११. पं. ११. २. शब्दवत् इति ख. पु.

भिप्रायः । (१)"न प्रत्यक्षा सती साध्या भवितुमर्हति" इति । यदि परं स्वरूपस्यैवाभावस्साध्यते तदैवानभिधेयता । न चाभावश्शक्यते वक्तुम्, प्रत्यक्षगम्यत्वात् । (२)"व्यामोह इति चे" दिति । केन चोक्तं स्वरूपेणास्या अभाव इति । इतरस्तु तमेवाभिप्रायं बुद्धौ कृत्वा (३)"नासति प्रत्ययविपर्यासे व्यामोह" इत्युक्तवान् । (४)"असत्यप्यर्थान्तर एवञ्जातीयके भवति प्रत्ययः— पंक्तिर्यूथं वनामिति यथेति चे"दित्यभिधेयतया अभावं प्रकटयति । नैवायं प्रत्यक्षविरुद्धोऽर्थोऽभिधीयते आकृतेरभावः । किं तर्हि ? अभिधेयरूपतया अभिधानरूपमवगम्यत इत्युक्तम्, नचेदमविवर्तवादिन उपपद्यते । तस्माद्विवर्तपक्षः श्रेयानित्यभिप्रायः ।

(५)"असम्बद्धमिदं वचनमुपन्यस्त"मिति पंक्त्यादावपि नैव शब्दरूपावगतिरस्तीत्यभिप्रायः । कथं तर्ह्येकप-

---

**अनाक्षिप्तत्वादित्यन्यथा व्याचष्टे**- न प्रत्यक्षा सती साध्या भवितुमर्हतीति यदि परं स्वरूपस्यैवाभावस्साध्यते तदैवानभिधेयता **बाह्याया आकृतेस्स्यात् । यदा त्वस्ति तदा सैवाभिधेया स्यात् ।** न चाभावश्शक्यते वक्तुं प्रत्यक्षगम्यत्वात् । व्यामोह इति चेदिति **भाष्यं पठित्वा व्याचष्टे** केन चोक्तं स्वरूपेणास्या अभाव इति । **पूर्वपक्ष्येव ब्रूते-न मया स्वरूपेणैवाकृतेरभाव उच्यते । किंतु स्वरूपेणास्त्येव । सैव त्वभिधीयत इति व्यामोह एव ।** इतरस्तु **राद्धान्ती** तमेवाभिप्रायं **स्वरूपापह्नवमन्तरेणाभिधेयापह्नवो न युक्त इति पूर्वोक्तं** बुद्धौ कृत्वा नासति प्रत्ययविपर्यासे व्यामो**होऽवगम्यत** इत्युक्तवान् । **अपरमपि भाष्य 'मसत्यप्यर्थान्तर' इत्यादि स्वरूपापह्नवपरमिव लक्ष्यते इति मत्वाऽऽह**--असत्यप्यर्थान्तर एवञ्जातीयके भवति प्रत्ययः-पङ्क्तिः, यूथं, वनमिति यथेति चोदित्यभिधेयतया **अस्य** अभावं प्रकटयति । नैवायं प्रत्यक्षविरुद्धोऽर्थोऽभिधीयते आकृतेरभावः । किंतु अभिधेयतयाभिधानरूपमवगम्यते इत्युक्तम् । **यद्यदभिधीयते तत्तदभिधानरूपमेव यथा वने वृक्षेष्वेकत्वम् ।** नचेद(६)मविवर्त्तवादिन उपपद्यते । तस्माद्विवर्त्तपक्ष एव श्रेयानित्यभिप्रायः ।

**'असंबद्धमिद'मित्यादिभाष्यं पठित्वा व्याचष्टे**—असंबद्धमिदं वचनमुप-

---

१. शा. भा. पृ. ११. पं. १२. २. शा. भा. पृ. ११. पं. १३.
३. शा. भा. पृ. ११. पं. १३. ४. शा. भा. पृ. ११. पं. १४.
५. शा. भा. पृ. ११. १५. ६ अविवर्तमान इति ख० पु०

त्ययः ? न च शब्दादृते पंक्त्यादिष्वेकमुपलभ्यते किंचिदन्यत् । अस्ति चायं प्रत्ययः । तस्मादध्यासनिबन्धन एवायम् । (१)"किमसति वने वनप्रत्यय" इति असति वृक्षव्यतिरिक्ते एकस्मिन्वनाभिधेयेऽर्थे एकप्रत्ययो नोपपद्यते इति किं प्रत्यक्षगम्या वृक्षा अपि न सन्तीति शक्यते वक्तुम् । कोऽभिप्रायः ? वृक्षा एवात्रै[3]कतया प्रतीयन्ते न पुनर्वनशब्दरूपता गम्यते ।

अथायमभिप्रायः—(२)"वृक्षा अपि नैव सन्ती"ति । तदपि हि शब्दाध्यस्तमेव रूपमिति "प्रत्युक्तः स माहायानिकः पक्षः" । अर्थविषया हि प्रत्यक्षा संवित् । न बुद्धिविषयेत्युक्तम् । बुद्धिविषयत्वे वा संविदः किं सिध्यति शब्दाध्यासः ? अन्यैव वृक्षसंवित् , अन्या-

न्यस्तमिति । पंक्त्यादावप्यभिधेये नैव शब्दरूपावगतिरस्तीत्यभिप्रायः । प्रत्यक्षं शब्दाकारविलक्षणा पंक्तिः प्रतीयते । इदानीमाशयमाविष्करोति—कथं तर्ह्येकप्रत्ययः ? न च शब्दाद्व्यतिरिक्तं किंचिदन्यत् पंक्त्यादिष्वेकमुपलभ्यते । अस्ति चायमेकप्रत्ययः । तस्माच्छब्दाध्यासनिबन्धन एवायं शब्द एवाऽर्थेऽध्यस्तोऽभिधीयते । तस्यैकत्वादेकवचनमुपपद्यते । किमसति वने वनप्रत्यय इति । असति वृक्षव्यतिरिक्ते एकस्मिन्वनाभिधेयेऽर्थे एकप्रत्ययो नोपपद्यते इति । अनेन भाष्यं व्याख्यातम् । वनशब्देन भाष्यगतेन चाभिधेयमुक्तं वनप्रत्यय इत्यनेनाप्येकवचनप्रत्ययः । किं प्रत्यक्षसमधिगम्या वृक्षा अपि न सन्तीति शक्तं वक्तुम् । कोऽभिप्राय एवंवदतो भाष्यकारस्य ? उच्यते—वृक्षा एवात्रै(१)करूपतया प्रतीयन्ते न पुनः शब्दरूपतावऽगम्यते । अस्यार्थः—वनशब्दे समुच्चरिते वृक्षा एव प्रतीयन्ते, तत्र भवानेवं वदति-शब्दव्यतिरिक्तोऽर्थो नास्तीति । तथा सति प्रत्यक्षा एव संतीति प्राप्तम् । न चेदमुचितम् । शब्दातिरेकिणां तेषां प्रत्यक्षसिद्धत्वात् ।

अथायमभिप्रायः—वृक्षा अपि न सन्तीति । तदपि हि शब्दाध्यस्तमेव रूपमिति । अनेन च यद्येवमिति भाष्यं व्याख्यातम् । प्रत्युक्तोऽयं माहायानिकः पक्षः । अर्थविषया हि प्रत्यक्षा संवित् , न बुद्धिविषयेत्युक्तम् । संविदिति भाष्ये बुद्धिपदं विवृतम् । अन्यथा बुद्धिरनुमेया कथं प्रत्यक्षेत्याशङ्का स्यात् । इदानीमिदमाक्षिपति-बुद्धिविषयत्वे वा संविदः किं सिध्यति शब्दाध्यासः ?

१. शा. भा. पृ. ११. पं. १६. २. शा. भा. पृ. ११. पं. १७. ३. एकतया इति ख.पु.

**वनसंवित्। तस्माद्बुद्धिविषया वा भवत्वर्थविषया वा, सर्वथा वनशब्दरूपता नास्तीत्येतावद्वक्तव्यम् । अतः प्रत्यक्षमेवाक्षिप्यत इति लक्ष्यते । नैवम्; वनशब्दाकारवादिनो हि भिन्नरूपावगतिरेवोत्तरम्। सा च वृक्षरूपाद्भिन्नैवात्र प्रतीयते । यदि परं तदभावादप्रतीतिः । स चाभावः प्रत्यक्षे प्रत्यर्थिनि नोपपद्यते ।**

**ननु विज्ञप्तिप्रत्यक्षपक्षेऽप्येतदुपपद्यत इत्युक्तम् । न, भेदावगतेः परिकल्पनापक्षपातित्वात् । तस्मात् सुष्ठूच्यते–प्रत्युक्तस्स माहायानिकः पक्ष इति ।**

---

**येन शब्दाध्यासे निराचिकीर्षिते बुद्धिविषयता संविदो निराक्रियते ।** अन्यैव हि वृक्षसंविदन्या च वनसंवित् । अस्यार्थः—**यदि वृक्षसंविद्वनसंविन्निका स्यात् न तदा बुद्धिविषयत्वे संविदोऽस्यास्सिध्यति शब्दाध्यासः । न चैतदस्ति ।** तस्माद्बुद्धिविषया वा भवत्वर्थविषया वा । सर्वथा वनशब्दरूपता नाऽस्तीत्येतावत् वक्तव्यम् । अतः प्रत्यक्षमेवाक्षिप्यत **इत्यादिग्रन्थस्यासम्बन्धतैव प्रतिभाति । तस्मादाकृतिसद्भाव एवाक्षिप्यते इति** लक्ष्यत **इति ।**

**एकदेशिमतमुपन्यस्तं समर्थयते**— नैवम् ; वनशब्दाकारवादिनो हि भिन्नरूपावगतिरेवोत्तरम्—**यो हि वनशब्दाकार एव वनशब्देनोच्यत इति वदति तस्य शब्दाकारव्यतिरिक्ताकारावगतिरेव निराकरणीयतयोपन्यसनीया ।** सा च (१)वृक्षस्वरूपात् भिन्नैवात्र प्रतीयते । यदि परं **तदभावात् वृक्षाभावाद**प्रतीतिः । स चाभावः प्रत्यक्षे **वृक्षविषये** प्रत्यर्थिनि **प्रतिपक्षभूते भावग्राहिणि** नोपपद्यते । **आत्यन्तिकप्रमाणप्रत्यस्तमय एवाभावो यतः ।**

ननु विज्ञप्तिप्रत्यक्षपक्षेऽप्येतत्**प्रत्यक्षं शब्दातिरिक्तवृक्षविषयमु**पपद्यत **इत्युक्तं बौद्धैः । तेन वृक्षसंवित्प्रत्यक्षाऽस्तु, मा भूवन् वनव्यतिरिक्ता वृक्षा इति । अत्र च विज्ञप्तिशब्दस्य साधुत्वाय क्षिप्राबादित्वात्(?) वक्तव्यः । अन्यथा एयन्तत्वाद्गुजव स्यात् । अत्रोत्तरम्**—न; भेदावगतेः परिकल्पनापक्षपातित्वात् । अस्यार्थः—**ज्ञानादपि भेदेन वृक्षाः प्रतिभान्ति । तत्र त्वया (किं?) वक्तव्यं भेदावगतिरियं कल्पनामात्रमिति । न चेदं युक्तम् । न हि सर्वलोकावगतोऽर्थः काल्पनिक इति शक्यते वक्तुम् । तस्मात्सुष्ठु शोभनमुच्यते**—प्रत्युक्तस्स माहायानिकः पक्ष इति । अत्रेदमभिप्रेतम्—**यदि वैयाकरणो वृक्षविषयं प्रत्यक्षं बुद्धिविषयं ब्रूयात् तदा बाह्यवृक्षाभावे शब्दमात्रमभिधेयमिति**

---

१. भिन्नवृक्षस्वरूपात् इति ख. पु.

नन्विदानीमेकबुद्धिरनालम्बनैव प्राप्ता । (१)"अथ किमाकृतिसद्भाववाद्युपालभ्यते-सिद्धान्तान्तरं ते दुष्यति वनेऽपि तेऽसति वनप्रत्ययः प्राप्नोतीति" । कः पुनरत्र सिद्धान्तो यो दुष्यति । एकस्मिन्वर्तमानात् प्रातिपदिकादेकवचनमिति । बहवश्च वृक्षाः, तत्रेदं प्रातिपदिकमित्युक्तमायुष्मता । यथैवाकृतिरस्तीति भवतां सिद्धान्तः तथाऽयमपि । तदिदं राद्धान्तान्तरदूषणं भवति । प्रमाणान्तरमूलत्वात् स्मृतेः । यदि दूषणं भवति भवतु नाम । न ह्यभ्युपगममात्राद्धेतोरदुष्टस्यापि दुष्टता शक्यते वक्तुम् । अदुष्टश्चायं हेतुः प्रत्यक्षावगतिर्नाम । तस्माद्यद्येकत्वमन्तरेणाप्येकवचनम्, किं कुर्मः कमुपालभेमहि । न चायमुपलम्भस्य विषयः । 'एकस्मिन्नेकवचन'मिति

---

स्यादप्येतत् । न चेदं शक्यम्, भेदप्रतीतेरर्थज्ञानयोरिति ।

अत्र भाष्यम्—किमाकृतिसद्भाववादी'त्यादि । तेन चेदमाशङ्कितम्—यदि वृक्षा एव वनप्रातिपदिकाभिधेयाः, तदा तेषां बहुत्वादेकत्वाभावे सति कथमेकवचनम् ? अथ बहुत्वेऽप्येकवचनम्, तर्हि "कस्मिन्नेकवचन"मिति भवतामभ्युपगमो न युक्तः । एवं चेदाकृतिर्विद्यत इत्ययमपि भवतामभ्युपगमो मृषाभूत एवेति । एतदुपजीव्याह—नन्विदानीमेकबुद्धिः पिण्डेष्वनालम्बनैव प्राप्ता, आकृतेरभावात् । इदानीं भाष्याक्षराणि व्याचष्टे—अथ किमाकृतिसद्भाववाद्युपालभ्यते-सिद्धान्तान्तरं ते दुष्यति वनेऽपि तेऽसति वनप्रत्ययः प्राप्नोतीति । कः पुनरत्र सिद्धान्तो यो दुष्यति ? एकस्मिन् वर्त्तमानात्प्रातिपदिकादेकवचनमिति । कथं दुष्यति ? बहवश्च वृक्षाः । तत्र चेदं प्रातिपदिकं वर्त्तत इत्युक्तमायुष्मता । यथैवाऽऽकृतिरस्तीति भवतां राद्धान्तः तथाऽयमपि राद्धान्तः । तेन तुल्ययोगित्वादेकाभ्युपगमापायेऽपराभ्युपगमो दुष्ट इति तत्सिद्धान्तान्तरदूषणं निग्रहस्थानमसाधकत्वादित्युत्तरभाष्यं व्याचष्टे—तदिदं सिद्धान्तान्तरदूषणमुच्यते । न पुनराकृतिसद्भावस्य दूषणमित्यर्थः । कस्मात् ? न हि स्मृतिदूषणात् प्रत्यक्षमपि दूषितं भवति । तेन प्रत्यक्षसिद्धा नाकृतिरपह्नोतुं शक्यते । प्रमाणान्तरमूलत्वात्स्मृतेः । मूलाभावे यदि दूषणं भवति भवतु नाम, न पुनरभ्युपगममात्राद्धेतोरदुष्टस्यापि दुष्टता शक्यते वक्तुम् । अदुष्टश्चायं हेतुराकृतिसद्भावे प्रत्यक्षावगतिर्नाम । उपसंहरति-तस्माद्यद्येकत्वमन्तरेणाप्येकवचनप्रयोगः किं कुर्मः ? कमुपालभेमहि ? अनादित्वात्प्रयोगस्यैवमवगन्तव्यं-वनादिष्वस

---

१. शा. भा. पृ. ११. पं. १८.

प्रायिकमेतत्। दारादिषु व्यभिचारात् । तस्मात् प्रायोगिकमिदमेकवचनम्, नान्वयिकम् ! अतस्सिद्धान्तान्तरापरिज्ञानमेवात्र गर्हणीयम् । तस्मान्न क्वचिच्छब्दाध्यस्ता वाच्ये बुद्धिरस्तीत्युपपन्नं जैमिनेर्वचः—आकृतिश्शब्दार्थ इति। आकृतिप्रतिपत्तिमुखेन गोशब्दादीनां निमित्ततेति । एतच्चाकृत्यधिकरणे निपुणतरमुपपादयिष्यामः।

अथ सम्बन्धः कः ? (१)"यच्छब्दे विज्ञातेऽर्थो विज्ञायते" इति कः पुनरयं सम्बन्धः पृष्टश्चोपन्यस्तश्च ? पूर्वोक्त एवेति वदामः । ननु

---

त्यप्येकत्वे एकवचनं भवतीति । न चायमुपलम्भस्यापि विषयः । यस्मा "देकस्मिन्नेकवचनं, द्वयोर्द्विवचनं, बहुषु बहुवचन"मिति प्रायिकमेतत् । दारादिष्वसत्यपि बहुत्वे बहुवचनदर्शनाद्व्यभिचारात् तस्मात्प्रायोगिकमिदमेकवचनं प्रयोगस्यानादितया प्राप्नोति । नान्वयिकं नार्थान्वयाय प्रभवति । अतस्सिद्धान्तापरिज्ञानमेवात्र गर्हणीयं भवतः योऽयमस्मदीयं सिद्धान्तं न जानाति— किंचित्प्रायोगिकमपि भवति किञ्चिदान्वयिकमिति ।

यत्पुनरत्र कैश्चिद्दारादिष्ववयवसङ्ख्याभिप्रायेण विभक्तिवर्णनं कृतं (२)तदस्ति वाघटमानं (?) यत्र हि प्रातिपदिकं वर्त्तते तत्संख्यायामेव विभक्तयो भवन्ति(३) "समर्थः पदविधि"रिति । न चावयवादिगताः संख्या वाक्यार्थेऽन्वीयन्ते। अनन्वीयमानाश्चाभिधीयन्त इति साहसमेतत् । एतच्च नवम एव वक्ष्यामः। तस्मान्न क्वचिच्छब्दाध्यस्ता वाच्ये बुद्धिरस्ति वनादिष्वपि परिहृतत्वादित्युपपन्नं जैमिनेर्वचः—आकृतिश्शब्दार्थ इति । ननु यत्परश्शब्दः स शब्दार्थः । न चाकृतिमात्रपरता कस्यचिच्छब्दस्य; सर्वेषां कार्यपरत्वादित्याशङ्क्याह—आकृतिप्रतिपत्तिमुखेन गोशब्दादीनां निमित्ततेति । अस्यार्थः—आकृतिं कार्यान्वयिनीं प्रतिपादयन्तो गवादिशब्दाः कार्यपराः । तेनाकृतिश्शब्दार्थ इत्युक्तमिति । एतच्चा(४)कृत्यधिकरणे निपुणतरमुपपादयिष्यामः ।

अथ सम्बन्धः क इति । यच्छब्दे विज्ञाते सत्यर्थो विज्ञायत इत्यनेन भाष्येण कः पुनरयं सम्बन्धः पृष्टश्चोपन्यस्तश्च ? पूर्वोक्त एवेति वदामः । य एव प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षणस्सम्बन्ध इति पूर्वमुक्तः स एव पृष्टश्चोऽपन्यस्तश्चेति । इदानीं येनाभिप्रायेण भेदं मत्वा प्रश्न उक्तस्तमा-

---

१. शा. भा. पृ. ११. पं. २१. २. वितन्तीं वा घटमानां इति ख. प.
३. पा. सू. २. १. १. ४. पू. मी, १. ३. १५.

चासौ संज्ञासंज्ञिलक्षणः सम्बन्धः ? तस्मादन्य एवायं सम्बन्ध इति मन्यते ! तदयुक्तम् , तत्रापि प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षणः सम्बन्ध इति । स एवायं ज्ञाप्यज्ञापकलक्षणः सम्बन्ध उक्तः ।

ननु च प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षणस्सम्बन्ध इति वदता प्रत्याय्यस्य प्रत्यायकस्येति षष्ठ्यभिधानेन सम्बन्धान्तरमुक्तं भवति । मैवम्; तदेवेदं प्रत्याय्यप्रत्यायकत्वं संज्ञासंज्ञिलक्षणमिति षष्ठ्या प्रतिपादितम् । कुत एतत् ? ननु व्यतिरेकं षष्ठी प्रतिपादयति । अस्त्येवात्र हेतुहेतुमत्तया व्यतिरेकः । प्रत्याय्यप्रत्यायकत्वं संज्ञासंज्ञिलक्षणसम्बन्धस्याभिधाने निमित्तम् । अन्यथा प्र-

---

विष्करोति—ननु चासौ संज्ञासंज्ञिलक्षणस्सम्बन्धः । असाविति दूरस्थः पूर्वोक्तः, तस्मादन्य एवायं सम्बन्ध इति मन्यते । अयमाशयः—अत्र यच्छब्द उच्चरितेऽर्थो विज्ञायत इति वदता ज्ञाप्यज्ञापकलक्षणस्सम्बन्ध उक्तः । शब्दे ह्युच्चरितेऽर्थो विज्ञायत इतीदमेव शब्दस्य ज्ञापकत्वमर्थस्य ज्ञाप्यत्वम् । न पुनरन्यत् । तत्र पुनः प्रत्याय्यस्य प्रत्यायकस्येति षष्ठ्या प्रत्याय्यप्रत्यायकभावातिरेकी संज्ञासंज्ञिलक्षणस्सम्बन्ध उक्त इति; तदयुक्तम् । यस्मात्तत्रापि प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षणः सम्बन्ध इति भाष्ये प्रत्याय्यप्रत्यायकशब्दप्रयोगात्स एवायं योऽत्रापन्यस्तो ज्ञाप्यज्ञापकलक्षणस्सम्बन्ध उक्तः ।

इदानीमाशयमाविष्करोति—ननु च प्रत्याय्यस्य प्रत्ययाकस्य च यस्संज्ञासंज्ञिलक्षणस्सम्बन्ध इति वदता प्रत्याय्यस्य प्रत्याय्यकस्येति षष्ठ्यभिधानेन सम्बन्धान्तरमुक्तं भवति । मैवं वादीः तदेवेदमत्रत्यं प्रत्याय्यप्रत्यायकत्वं हि संज्ञासंज्ञिलक्षणं इति षष्ठ्या प्रतिपादितम् । अयं भावः—ज्ञाप्यज्ञापकभाव एव प्रत्याय्यप्रत्यायकयोस्संज्ञासंज्ञिलक्षणस्सम्बन्धो नान्यः । षष्ठी च सम्बन्धसम्बन्धिनोर्भेदादुपपद्यत इति । कुत एतदिति भावमपरिभावयतः प्रश्नः । ननु व्यतिरेकं षष्ठी प्रतिपादयतीत्येकग्रन्थेन भावं विवृणोति । अस्त्येवात्र हेतुहेतुमत्तया व्यतिरेकः । प्रत्याय्यप्रत्यायकत्वं हि संज्ञासंज्ञिसम्बन्धस्याभिधाने निमित्तम् । अस्यार्थः—ज्ञाप्यज्ञापकाभ्यां सम्बन्धिभ्यामस्त्येव सम्बन्धस्य व्यतिरेकः । हेतुहेतुमत्तयेति व्यतिरेकमेव स्पष्टयति । तस्मादयं शब्दार्थयोस्सम्बन्धः संज्ञासंज्ञिसम्बन्ध इत्युच्यते, यतः प्रत्याय्यप्रत्यायकयोः । तेन प्रत्याय्यप्रत्यायकौ सम्बन्धिनौ सम्बन्धस्य विशिष्टरूपतामापादयन्तौ हेतुभूतौ । सम्बन्धश्च हेतुमान् भवति । न चाव्यतिरेके

त्याय्यप्रत्यायकोपन्यासोऽनर्थकः । तमेकं न व्यपदिशति भवान् यः संज्ञासंज्ञिलक्षणस्सम्बन्ध इति वक्तव्यम् । अत एव कृतक इति पूर्वमुपपादितमित्यनेन ग्रन्थेन पूर्वोक्तस्यायमुपन्यास इति प्रकटयति ।

किं पुनः कारणं पुनः प्रश्नोपन्यासयोः ? इदमत्र कारणम्–विवर्त्ताक्षेपे हि युतासिद्धयोरनपेक्षत्वं न शक्यते वक्तुमिति मन्वानस्य प्रश्नः । शक्यते हि वृद्धव्यवहारस्यानादितया ऽनपेक्षता वक्तुमिति तस्यैवोपन्यासः । स तु कृतक इति पूर्वोपवर्णितेनैवाभिप्रायेणोक्तम् । (१)"तस्मान्मन्यामहे–केनापि पुरुषेण शब्दानामर्थैस्सह सम्बन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता" इति सापेक्षत्वमुपसंहृ-

---

हेतुमद्भाव उपपद्यत इति । एवं तावत्साधितमेक एवोभयत्रापि सम्बन्ध इति । यदाहित्य एव तत्रापि सम्बन्धो नाभिमतस्स्यात् । अन्यथा हि प्रत्याय्यप्रत्यायकोपन्यासोऽनर्थकस्तत्र स्यात् । तमेकं न व्यपदिशति भवान् यस्संज्ञासंज्ञिलक्षणस्सम्बन्ध इत्येव वक्तव्यम् । यत एवोभयत्रापि स एव सम्बन्धः, अत एव स तु कृतक इति पूर्वमुपपादितमित्यनेन ग्रन्थेन पूर्वोक्तस्यैवायमुपन्यास इति प्रकटयति । अन्यथाऽन्यस्सम्बन्धः पूर्वोक्तः, अयमन्य इति नेदं वचनमुपपद्यते । स तु कृतक इति पूर्वमुपपादितमिति ।

किं पुनः कारणं पुनः प्रश्नोपन्यासयोः ? अस्यार्थः–पूर्वं कृतकस्तर्हीत्येवमन्तेन ग्रन्थेन परैराक्षेपे कृते तत्समाधानमात्रमेव कर्त्तव्यम् । न पुनः प्रश्नोपन्यासाविति । इदमत्र कारणम्–विवर्ताक्षेपे(२)युतसिद्धयोः कथं पुनरनपेक्षत्वं शक्यते वक्तुमिति मन्वानस्य प्रश्नः–निराकृतस्स्वपक्षो विवर्त्तवादी मीमांसकमेव पर्यनुयुङ्क्ते । यदि युतसिद्धौ शब्दार्थौ अथ सम्बन्धः कः ? मत्पक्षे हि तादात्म्यादेव शब्दार्थयोस्सम्बन्ध उपपद्यते । यदि पृथग्भूतयोरपि प्रत्याय्यप्रत्यायकलक्षणं सम्बन्धमभ्युपगच्छेत् तदानपेक्षत्वं न सिध्यतीति । अनेन प्रश्नस्तावत्समर्थितः । शक्यते हि वृद्धव्यवहारस्यानादितया वक्ष्यमाणेन मार्गेणानपेक्षता वक्तुमिति तस्यैव ज्ञाप्यज्ञापकलक्षणसम्बन्धस्योपन्यासः, स तु कृतक इति पूर्वोपवर्णितेनैव सम्बन्धाक्षेपवादस्थानोक्तेनैवाभिप्रायेणोक्तं वैयाकरणेनैव । त-

---

१ शा. भा. पृ. १२. पं. १.

२. युतासिद्धयोः कथं पुनरपेक्षत्वं इति. ख. पु. युतासिद्धयोरनपेक्षत्वं न शक्यते वक्तुमिति मूलानुयायी पाठः ॥

तम् । तदिदानीमुच्यते–अपौरुषेयत्वात्सम्बन्धस्य सिद्धमिति । वृद्ध-व्यवहारस्यानादितोपन्यासः ।

किमिदं तर्हि प्रश्नोत्तरम् ? कथमिति पृष्टे पुरुषस्य सम्बन्धुरभावादित्युत्तरमयुक्तम् । अनादिताप्रतिपक्षनिरासायेदमुच्यते । कथं पुनरिदं प्रतिपक्षतयाऽऽशङ्क्यते ? बाढमाशङ्क्यते । अनादिनापि वृद्धव्यवहारेण शब्दार्थावगमसिद्धौ यत्र कर्तोपलभ्यते तत्रादिमत्त्वैव बलात् प्राप्नोति, वृद्धिरादैजितिवत् । तस्मात्कर्तुरुपलंभो निराकरणीयः । कथं पुनस्सम्बन्धा नास्तीतियस्य प्रश्नस्य किमिदमुत्तरमुपपद्यते ? प्रत्यक्षस्य प्रमाणस्याभावात् , तत्पूर्वकत्वाच्चेतरेषामिति । कथं नोपपद्यते ? अनुमानादेरपि प्रमाणत्वाभ्युपगमात् ।

---

स्मान्मन्यामहे भवन्मते केनापि पुरुषेण शब्दानामर्थैस्सह सम्बन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता इति सापेक्षत्वमुपसंहृतम् । यदि हि सम्बन्धः कृतकः तदा सम्बन्धोत्तरकालभाविनो वेदा अपि कृतकाः । अन्यथा हि सङ्केतात्प्राच्येषु वेदेषु नार्थप्रतीतिस्स्यात् । सम्बन्धकर्तृवेदप्रणेत्रोश्चैकतोपलक्षणमात्रम् । सर्वथा कृतकसम्बन्धानुबन्धिनो वेदा अपि कृतका इति विवक्षितम् । तदिदानीमुच्यते–अपौरुषेयत्वात्सम्बन्धस्य सिद्धमिति । भाष्यं व्याचष्टे–वृद्धव्यवहारस्यानादितोपन्यासोऽयम् ।

यदि वृद्धव्यवहारस्यानादितैवात्रोपन्यस्यते किमिदं तर्हि प्रश्नोत्तरम् ? तदेव दर्शयति–कथमिति सम्बन्धस्यापौरुषेयत्वहेतौ पृष्टे पुरुषस्य सम्बन्धुरभावादित्युत्तरं न युक्तम् । एवं वक्तव्यम्—वृद्धव्यवहारस्यानादित्वादिति । वृद्धव्यवहारस्यानादिताप्रतिपक्षनिरासायेदमुपन्यस्तम् । पुरुषस्य सम्बन्धुस्सद्भावो वृद्धव्यवहारस्यानादितायाः प्रतिपक्ष इति । सोऽनेन ग्रन्थेन निराक्रियते । कथं पुनरिदं सम्बन्धुरुपलम्भनं प्रतिपक्षतयाऽऽशङ्क्यते ? बाढमाशङ्क्यते । अनादिनापि वृद्धव्यवहारेण शब्दादर्थावगमसिद्धौ यत्र सम्बन्धस्य कर्तोपलभ्यते तत्रादिमत्त्वोपलब्धिबलात् प्राप्नोति(१)"वृद्धिरादैजि" तिवत् । अस्यार्थः–यद्यपि वृद्धव्यवहारानादितयापि शब्दादर्थावगम उपपद्यते, तथापि साक्षात्सङ्केतकारणदर्शने न शक्यतेऽनादिता वक्तुमिति भवति सम्बन्धृपुरुषोपलम्भने प्रतिपक्षभूतम् । तस्मात्कर्तुरुपलम्भो निराकरणीयः । कथं सम्बन्धा नास्तीतियस्य प्रश्नस्य किमिदमुत्तरमुपपद्यते ? प्रत्यक्षस्य प्रमाणस्याभावत्त-

---

१. पा. सू. १. १. १.

तत्पूर्वकत्वं चायुक्तं सापेक्षत्वप्रसङ्गात् । क्रियादिषु चाननुमेयतापत्तेः । सापेक्षत्वे च शब्दस्यौत्पत्तिकत्वप्रयासोऽनर्थकः । तदिदमापतितं घोटारूढस्य विस्मृतो घोट इति । अभिप्रायानभिज्ञस्यैवैतच्चोद्यम् । केवलानुमानागमप्रमेयता तावन्न सम्भवत्यनादौ वृद्धव्यवहारे प्रत्यर्थिनि । तस्मात्प्रत्यक्षं तत्पूर्वकं चागमानुमानं निरसनीयमिति । तस्मादुपपन्नमुत्तरम् । बहुवचनमिदानीं किमर्थं–तत्पूर्वकत्वाच्चेतरेषामिति । कथं नोपपद्यते ? अनुमानादेरपि प्रमाणत्वाभ्युपगमात् । तेन प्रत्यक्षमात्रनिराकरणं न सम्बन्धु(१)र्नास्तितामावहति ।

ननु प्रमाणप्रत्यक्षे निराकृते तत्पूर्वकत्वाच्चेतरेषामित्यनेन ग्रन्थेनानुमानाद्यपि निराकृतमित्यत आह–तत्पूर्वकत्वं चायुक्तं, शब्दस्य सापेक्षत्वप्रसङ्गात् । अस्यार्थः–यदि यद्यत् प्रत्यक्षपूर्वकं तत्तत्प्रत्यक्षे निराकृते निराकृतं भवति । तदा यत्रैव तर्हि प्रत्यक्षं प्रवर्त्तते तत्रैव तेन तेन प्रवर्त्तितव्यमित्यायातम् । शब्दोऽपि च प्रत्यक्षपूर्वक इति तेनापि प्रत्यक्षविषय एव प्रवर्त्तितव्यम् । अतश्चास्य प्रत्यक्षसापेक्षता प्राप्ता । क्रियादिषु च प्रत्यक्षाविषयेष्वननुमेयतापत्तेः । अनुमानस्यापि प्रत्यक्षपूर्वकत्वेन तद्विषय एव प्रवृत्तिनियमापत्तेः । सापेक्षत्वे च शब्दस्य सम्बन्धस्यौत्पत्तिकत्वप्रयासोऽनर्थक एव । अप्रामाण्यस्य दुष्परिहरत्वात् । तदिदमापन्नं यल्लोके शून्यमनःकथासु श्रूयते—घोटारूढस्य भवतो विस्मृतो घोट इति । विस्मृतश्चित्तादपक्रान्तः । स्मरतेः कर्मकर्तृविषयस्येदं रूपम् । अभिप्रायानभिज्ञस्येदं चोद्यम् । केवलानुमानागम(२)गम्यता तावन्न सम्भवत्यनादौ वृद्धव्यवहारे प्रत्यर्थिनि । अस्यार्थः–तौ तावदनुमानागमौ केवलप्रत्यक्षव्यापारनिरपेक्षौ । तद्गम्यता तावत्सम्बन्धुर्न भवति । यस्मात्कार्यतः कारणानुमानं केवलानुमानम् । शब्दाच्चार्थप्रतीतिः कार्यभूता । सा च नैकान्तेन सम्बन्धान्तरमेवानुमापयितुमलम्, वृद्धव्यवहारानादितयाऽप्युपपत्तेः । तथा–आगमोऽपि स्वतन्त्रस्तावन्न सम्बन्धुसत्त्वे प्रमाणम्, कार्यैकविषयत्वात् । यदि परं प्रत्यक्षानुमानपूर्वको वक्तव्यः । तत्रानुमानपूर्वकोऽप्यनादिवृद्धव्यवहारप्रतिपक्षसम्भवेन केवलानुमानाभावात् प्रत्यक्षानपेक्षो न सम्भवतीति। तस्मात्प्रत्यक्षं तत्पूर्वकं च प्रत्यक्षगृहीतविषयमागमानुमानं निरसनीयमिति । तस्मादुपपन्नमुत्तरम् । बहुवचनमिदानीं किमर्थम् ? तत्पूर्वकत्वाच्चेतरेषामिति यदि सम्भवत्प्रमाणनिरसनं तदोपमानस्य निरासोऽनर्थकः, तस्य सादृश्यमात्रविषयत्वात् । सम्ब-

१. नास्तितां इति क. पु. । २. प्रमेयता इति ख० पु० ।

कत्वाच्चेतरेषामिति ? इतरयोरिति वक्तव्यम् । द्वयोराशङ्कनीयनयो-पन्यासात् । असम्भवस्तु सर्वेषामेवत्युपपन्नं बहुवचनम् ।

ननु—चिरवृत्तत्वादित्यसिद्धतामाह । कथमसिद्धता ? पूर्वजानां प्रत्यक्षविषयतोपपत्तेः । न हि चिरवृत्तस्सन् न स्मर्येतेति न पूर्वजानामपि प्रत्यक्षमत्र सम्भवतीत्यभिप्रायः । यदि स्यात्पाणिनिवत्स्मर्येत । न च हिमवदादिकूपारामादिवदस्मरणं भवितुमर्हति । तत्रास्मरणे हेतुरुपपद्यते पुरुषवियोगादिः । "न च पुरुषवियोगः शब्दानामस्ती"ति किमभिप्रेतम् ? कृतकपक्षे हि तत्प्रमाण्यात् प्रामाण्यं स्यात्, न निष्प्रयोजनतया विच्छेदस्स्मरणस्योपपद्यते इत्यभिप्रायः । तच्च पाणिनिपिङ्गलोपन्यासेन प्रक-

---

न्धरि सम्बन्धाभावात् । अर्थापत्तेस्तु सम्बन्धुः कल्पनया विना कस्यचिदपि विरोधाभावात् असम्भव एवेति । समाधिमाह—द्वयोराशङ्कनीयतयोपन्यासात् । असम्भवस्तु सर्वेषामित्युपपन्नं बहुवचनम् । अस्यार्थः—अभावस्तावत्सर्वेषां प्रमाणानाम्, तेन युक्तमेवैवं वक्तुमितरेषां चाभावात् सम्बन्धा नास्तीति । तत्र यत्र शङ्का नास्ति तत्र हेतुनिराकरणान्नोपन्यस्यते । यत्र तु सम्भावनापि तत्र सहेतुकं निराकरणं क्रियते इति ।

ननु चिरवृत्तत्वादित्यसिद्धतामाह । अनेन "ननु चिरवृत्तत्वात्प्रक्षस्यागोचरो भवेदिदानींतनाना" मिति भाष्यस्य तात्पर्यमाह । अनेन भाष्येण भाष्यकारः प्रत्यक्षाभावस्यासिद्धतामाह । कथमसिद्धता ? पूर्वजानां प्रत्यक्षविषयतोपपत्तेः । न हि चिरवृत्तः सन् न स्मर्येतेति न पूर्वजानामपि प्रत्यक्षमत्र सम्भवतीत्यभिप्रायः । यदि स्यात् प्रत्यक्षं पूर्वजानां पाणिनिरिव तत् स्मर्येत । न च हिमवदादिकूपारामादिवदस्मरणं भवितुमर्हति । यस्मात्तत्रास्मरणे हेतुरुपपद्यते पुरुषवियोगादिः । आदिशब्देनाभियोगोऽपि ग्राह्यः। न च पुरुषवियोगः शब्दानामस्तीत्यनेन भाष्यमर्थेनाऽनुवदति । भाष्याभिप्रायं पृच्छति—किमभिप्रेतमिति पृच्छतश्चायमभिप्रायः—यद्यपि सम्बन्धा दृष्टः तथापि किमसाववश्यं स्मरणीय इति । इदानीमभिप्रायमाह—कृतकपक्षे हि तत्प्रामाण्यात्प्रामान्यं स्यात् । तस्मात् न निष्प्रयोजनतया विच्छेदः स्मरणस्योपपद्यत इत्यभिप्रायः । अस्यार्थः—यदि सम्बन्धा पुरुषः प्रत्यक्षसमधिगम्यः स्यात्तदा तत्सङ्केतृसम्प्रतिपत्त्यर्थः प्रतिपत्तव्यः । न हि सङ्केतृविप्रतिपत्तौ व्यवहारस्स्यादार्यद्रमिलयोरिव कलिशब्दे । तेन सङ्केतृसंप्रतिपत्त्यर्थं पुरुषस्स्मर्तव्यस्स्यात् । यदेतदवश्यं स्मरणीयत्वं तच्च पाणिनि-

टितम्। (१)"यद्यपि च विस्मरणमुपपद्यते तथापि न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहि, यथा विद्यमानस्यानुपलम्भो भवतीति नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे" इति किंविषयमिदं विस्मरणमुपन्यस्तम्? यदि तावत्सम्बन्धविषयम्, तदिदमेव प्रमाणं यदुत विस्मरणोपपत्तिः। उक्तं च (२)"विस्मरणमुपपद्यते" इति। तथा न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहीत्यहेतुः।

यदप्युच्यते—यथा विद्यमानस्याप्यनुपलम्भनं भवतीति नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामह इति, तदप्ययुक्तम्। यदि विद्यमानस्यैवानुपलब्धिः केन वा शक्यते वक्तुं शशविषाणं नास्तीति।

अथायमभिप्रायः—यद्यप्यन्यत्र विस्मरणोपपत्तिर्दृष्टा नैतावतान्यत्रापि विस्मरणोपपत्तिः शक्यते वक्तुमिति, असदभिप्रायोऽयम्।

---

पिङ्गलोपन्यासेन प्रकटितम्। उपन्यासो दृष्टान्तः। यद्यपि चेत्यादि भाष्यं पठित्वाऽऽक्षेप्तुमाह—यद्यपि च विस्मरणमुपपद्यत इति किंविषयमिदं विस्मरणमुपन्यस्तम्? यदि तावत् साध्यसम्बन्धविषयम्, तदा सम्बन्धसत्त्व इदमेव प्रमाणं यदुत विस्मरणोपपत्तिः। विस्मरणं हि तदुच्यते यद्गृहीतस्यापि वस्तुनः कुतश्चिन्निमित्तादस्मरणम्। न पुनः स्मरणाभावमात्रम्, अगृहीतेऽपि वस्तुनि यत एव च विस्मरणसिद्धेः सिध्यति ग्रहणं सद्भावश्चेति। अतो भवति विस्मरणं प्रमाणम्। उक्तं च स्मृत्यधिकरणे-विस्मरणमुपपद्यत इति। एतद्धेदवाक्यास्तित्वहेतुः।

यदप्युच्यते—यथा विद्यमानस्याप्यनुपलम्भनं भवतीति नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामह इति, तदप्ययुक्तम्। यदि हि विद्यमानस्यैव शशविषाणस्यानुपलम्भनं केन वा शक्यते वक्तुं शशविषाणं (३)नास्तीति। विद्यमानत्वेन निश्चितस्यैवमनुपलब्धिरिति निश्चये विद्यमानत्वस्यापि निश्चितत्वान्नाभावश्शक्यते वक्तुम्।

अथायमभिप्रायः—यद्यप्यन्यत्र हिमवत्कूटारामादिषु कर्तृविस्मरणोपपत्तिर्दृष्टा,

---

१. शा. भा. पृ. १२ पं. २१ किं विषयमिदं शशविषाणं प्रतिपद्यामहे इति मूलपुस्तके।
२. शा. भा. पृ. ४५. पं. १५. ३. अस्तीति ख. पु.

बाढमन्यत्र दृष्टमन्यत्र भवतीत्युच्यते । अयमेव हि सामान्यतो दृष्टस्य विषयः ।

अत्राभिधीयते—नैवेयं प्रमाणतयोपन्यस्यते विस्मृतिरनुपलब्धिर्वा । किंतु उपलब्धस्यार्थस्य कारणदोषनिराकरणायेद-(१)मुच्यते । इह पुनर्भवतानुपलब्धावेवेदमुपन्यस्तमित्यसंबद्धमित्युक्तम् । यथा घटादेरुपलब्धस्यानुपलब्धिरस्तीति नैतावता शशविषाणस्यास्तित्वं शक्यते वक्तुम् । उपलब्धिविषयस्यानुपलब्धिः कारणान्तरमपेक्षते । अनुपलब्धेः पुनरनुपलब्धेरेवानुपलब्धिः । तस्मात्सूक्तमिदम् ।

---

नैतावतान्यत्रापि सम्बन्धुविस्मरणोपपत्तिः शक्यते वक्तुमिति, असदभिप्रायोऽयम्, यतो बाढमतिशयेनान्यत्र दृष्टमन्यत्र भवतीत्युच्यते । अयमेवान्यत्र दृष्टस्यान्यत्र सद्भावो हि यस्मात् सामान्यतो दृष्टस्य विषयः । यदि पुनरेकत्र दृष्टमन्यत्र न भवतीति नियमः सामान्यतो दृष्टमनुमानं तर्हि हतम्।

अत्राभिधीयते—नैवेयं प्रमाणतयोपन्यस्यते विस्मृतिरनुपलब्धिर्वा; किंतु उपलब्धस्यार्थस्य कारणदोषनिराकरणायेदमुपन्यस्यते । अस्यार्थः न क्वचिदस्माभिर्विस्मरणमनुपलब्धिर्वा वस्तुसद्भावे प्रमाणतयोपन्यस्यते । किन्तु यदन्यत एवोपलब्धं, यथा स्मृत्यधिकरणे स्मरणान्यथानुपपत्त्या वेदवाक्यं, तस्य यः कारणदोषः संभाव्यते—यदि वेदवाक्यमस्ति स्मर्यतोपलभ्येतैव वा, तस्मान्नेदमनुमानमदुष्टसामग्रीकमिति—स विस्मरणेनानुपलब्ध्या च निराक्रियते—विस्मरणमप्युपपद्यते(२)अनुपलब्धिरप्युपपद्यत इति । इह पुनर्भवतानुपलब्धावेव सर्वैः प्रमाणैरप्यनुपलब्धावेव सम्बन्धुरिदं विस्मरणमुपन्यस्तमित्यसम्बद्धं कारणदोषनिराकरणेनापि न सम्बध्यत इत्युक्तम् । भाष्यार्थमाह—यथा घटादेरुपलब्धस्यानुपलब्धिरस्तीति नैतावता शशविषाणस्यास्तित्वं शक्यते वक्तुम् । कस्मान्न शक्यते ? इत्यत्राह—उपलब्धिविषयस्यानुपलब्धिः कारणान्तरमपेक्षते । यदि तादृश्येव सामग्री किमिति प्रागिव नोपलभ्यते ? तेन तत्रानुपलब्धौ कारणान्तरं वाच्यम् । अनुपलब्धेः पुनः शशविषाणादावनुपलब्धेरेवानुपलब्धिः, न तत्र कारणान्तरकल्पना । एवञ्च दृष्टान्तं व्याचक्षाणेन दार्ष्टान्तिकेऽप्येषा योजना दर्शिता । यद्यपि च विस्मरणमन्यत्रोपलब्धस्याप्यस्ति नैतावता विना प्रमाणेन स्मरणाभावमात्रात्सम्बन्धारं प्रतिपद्येमहीति । तस्मात्सूक्तमिदम् ।

---

१. उपन्यस्यते इति व्याख्यानपाठः । २ अनुपलब्धेरप्युपपत्तिर्विद्यत इति ख. पु.

'नन्वर्थापत्त्ये'ति किमियं प्रमाणसंज्ञोपन्यस्ता ? ओमित्युच्यते । किं पुनरत्र नोपपद्यते इत्यनया परिगृह्यते ? ननु च संबन्धस्य कर्ता । कथं पुनरसौ नोपपद्यते ? प्रथमश्रवणेऽर्थानवगतेः । यदि प्रथमश्रवणेऽर्थं न प्रतिपद्यते किमायातं सम्बन्धस्य कर्त्तुः ? एवं तर्हि यदि गृहे देवदत्तो नोपलभ्यते किमायातं बहिर्भावस्य ? न ब्रूमो बहिर्भावो नोपपद्यत इति । किन्तर्हि ? विद्यमानता नोपपद्यत इत्युक्तम् । सैवेयं बहिरस्तीति संवित् । इह पुनः प्रथमश्रवणेऽर्थानवगतेः सम्बन्धस्य कर्त्रा कस्सम्बन्धो दृष्टः ।

---

'नन्वर्थापत्त्या सम्बन्धारं प्रतिपद्येमही'ति भाष्यम् । तदाक्षिपति—नन्वर्थापत्त्येति किमियं प्रमाणसंज्ञोपन्यस्ता ? ओमित्युच्यत इत्येकदेशी ब्रवीति । सिद्धान्ती दूषयति—किं पुनरत्र नोपपद्यत इत्यनया बुद्ध्या परिगृह्यते ? अर्थापत्तौ यन्नोपपद्यत इत्यनया बुद्ध्या परिगृह्यते तदेव गम्यम् । तत्र यदीयमर्थापत्तिः तदाऽनयाऽप्यनुपपद्यमानतया गृह्यमाणेन प्रमेयेन भवितव्यम् । तत्र किं तदिति पृच्छति । एकदेश्येवाह—ननु च सम्बन्धस्य कर्तेति । सिद्धान्त्याह—कथं पुनरसौ नोपपद्यत इत्येवं परिगृह्यते । पुनरप्येकदेश्येवाह—प्रथमश्रवणेऽर्थानवगतेरिति । सिद्धान्त्याह—यदि प्रथमश्रवणेऽर्थं न प्रतिपद्यते किमायातं सम्बन्धस्य कर्तुः ? न तस्यानुपपत्तिः काचिदस्तीति भावः । एकदेश्याह—एवं तर्हि प्रसिद्धार्थापत्त्युदाहरणेऽपि यदि गृहे देवदत्तो नोपलभ्यते किमायातं बहिर्भावस्य ? तत्रापि गम्यस्य बहिर्भावस्यानुपपद्यमानता नास्तीत्यर्थः । सिद्धान्ती विवेकमाह—न ब्रूमो बहिर्भावो बहिर्देशविशिष्टो भावो नोपपद्यते इति । किं तर्हि ? विद्यमानता या आगमतः प्रतिपन्ना जीवति देवदत्त इति, सा नोपपद्यत इत्युक्तमर्थापत्तिलक्षणे । विद्यमानतैव हि गृहादर्शने सत्यनुपपन्नतया गृह्यत इति व्यासेन विवृतमस्माभिः । सैवेयं विद्यमानतानुपपद्यमानतया गृह्यमाणा बहिरस्तीति संवित् । तस्मात्तत्रानुपपद्यमानमेव प्रतीयते । इह पुनः प्रथमश्रवणेऽर्थानवगतेस्सम्बन्धस्य कर्त्रा कः सम्बन्धो दृष्टः ? तत्र हि गृहाभावदर्शनं देवदत्तसत्तासम्बन्ध्येव । तेन तदनुपपत्तिसत्ताया वितनोति । इह पुनः प्रथमे(१) श्रवणेऽर्थानवगतेः सम्बन्धा सह कश्चिदपि सम्बन्धो नास्तीति नासौ सम्बद्धुरनुपपत्तिमावहति ।

---

(१) श्रवण प्रमेया इति क. पु. ।

अथेदं मनसि वर्तते-न प्रथमश्रवणात् प्रतिपद्यते, प्रतिपद्यते च द्वितीयादिश्रवणात्। तस्माच्छब्दादन्यत् कारणान्तरं मृग्यमिति। कार्यतस्तर्हि कारणानुमानमुक्तम्। कथं तर्ह्यर्थापत्तेति? अर्थादनुमानादापत्तिरित्यर्थः। कस्मात्? अर्थात्कार्यादित्युक्तम्।

ननु चानुमानमपि नोपपद्यते, प्रथमश्रवणादप्रतीतेरनैकान्त्यात्। वेदवाक्यादेव प्रथमश्रुतादर्थावगतेः।

ननु च पदगतेयं चिन्ता। किमिदं पदं नाम? प्रसिद्धा गवादयः 'देवदत्त गामभ्याजे' त्येवमादिषु वाक्येषु। किं कार्यान्यतया प्रसिद्धाः? उत वाक्यार्थावगतिरेव कार्यम्? बाढं कार्यान्यतया

---

अथेदं मनसि **विपरिवर्त्तते** न प्रथमश्रवणात् प्रतिपद्यते। प्रतिपद्यते च द्वितीयादिश्रवणे। तस्मात् शब्दादन्यत्कारणं मृग्यमिति। **यदि हि शब्द एवात्र कारणं स्यात् तदादौ प्रथमश्रवणेऽपि शब्दमात्रादवगतिर्भवेत्। न च भवति। तस्मादन्यदेवार्थावगतेः कारणमस्तीति। दूषयति**—कार्यतस्तर्हीदं कारणानुमानमुपन्यस्तम्। **संप्रति निरस्त एकदेश्याह**—कथं तर्ह्यर्थापत्त्येति भाष्यं **त्वत्पक्षेऽपि? सिद्धान्ती समर्थयते**—अर्थादनुमानादापत्तिरित्यर्थः। **तेनार्थादापत्तिरर्थापत्तिरुक्ता। आपत्तिः कल्पना अनुमानं चासावापत्तिश्चेत्यनुमानापत्तिः। कस्मात्?** अर्थात्कार्याद**र्थावगतिलक्षणा**दित्युक्तं **सम्बन्धाक्षेप एव।**

ननु चानुमानमपि नोपपद्यते, प्रथमश्रवणादप्रतीतेरनैकान्त्यात्। वेदवाक्यात्प्रथमश्रुतादेवार्थावगतेः। **अत्र चानैकान्तशब्देन भागासिद्धो वेदितव्यः। वेदे प्रथमश्रवणेऽर्थप्रतीत्यसिद्धेर्न पुनः सव्यभिचारो नैकान्तिकोऽभिमतः। यदि साध्यसम्बन्धसद्भावव्यतिरेकेणापि वृत्तिम्सिध्येत् स्यात्सव्यभिचारता। न च साऽस्ति। वेदवाक्यस्यापि साध्यकोटिनिक्षेपात्।**

**अत्रैकदेशी स्वमतेन परिहरति**—ननु च पदगतेयं चिन्तेति। अस्यार्थः—**पदपदार्थयोरौत्पत्तिकसम्बन्धचिन्तेयम्। तेन पदाभिप्रायेणदमुच्यते-प्रथमश्रवणेऽर्थानवगमादिति। न च किञ्चन पदं प्रथमश्रवणेऽर्थमवगमयतीति नास्ति भागासिद्धतेति। सिद्धान्ती दूषयति**—किमिदं पदं नाम? **यद्विषया चिन्ता भवता क्रियते। एकदेश्याह**—प्रसिद्धा गवाश्वादयश्शब्दा "देवदत्त गामभ्याजे" त्येवमादिषु वाक्येषु। **सिद्धान्त्याह**—किं

प्रसिद्धाः । कस्मिन् ? व्यवहारे, येन वृद्धा व्यवहरन्ति । केन वृद्धा व्यवहरन्ति ? देवदत्त गामभ्याज शुक्लामित्येवमादिना । एवं तर्हि वाक्येनार्थे व्यवहारः । न हि व्यवहाराप्रसिद्धोऽर्थः कार्यान्तरतया शक्यते वक्तुम् ।

कथं तर्ह्यथ गौरित्यस्य शब्दस्य कोऽर्थः, सास्नादिविशिष्टा आकृतिरिति चोत्तरमसति कार्यान्यत्वे ? कथं वा वृद्धव्यवहारेणास्यौ-

---

कार्यान्यतया प्रसिद्धाः ? उत वाक्यार्थावगतिरेव कार्यमिति । अयमाशयः—न पदानां वाक्यार्थावगतेरन्यत्कार्यमस्ति । यावत्सा वाक्यार्थावगतिः सा प्रथमश्रवणेऽपि भवति । वाक्याद्धि सा भवति । नैकस्मात् पदात् । न च वाक्यस्य द्वितीयश्रवणापेक्षा । एकदेश्याह—बाढं कार्यान्यतया प्रसिद्धाः । आवापोद्धाराभ्यां हि पदानां पदार्थमात्रावगम एव कार्यतयाऽवसितः । राद्धान्ती पृच्छति—कस्मिन् ? उत्तरम्—व्यवहारे येन वृद्धा व्यवहरन्ति । व्यवह्रियतेऽनेनेति व्युत्पत्त्या वाक्यमेव व्यवहारशब्देनोच्यते । तेन यद्यपि वाक्येन व्यवहारः तथापि न वाक्यार्थावगतिरावापोद्धाराभ्यां पदानां कार्यमिति भावः । पुनः पृच्छति—केन वृद्धा व्यवहरन्तीति । अस्यायमाशयः—वाक्येन वृद्धा व्यवहरन्ति । तत्र च वाक्यार्थावगतिरेव कार्यं दृश्यते न शुद्धपदार्थावगतिरिति । पुनरुत्तरं तेनैवाशयेन—देवदत्त गामभ्याज शुक्लामित्येवमादिना । सिद्धान्त्यापादयति—एवं तर्हि वाक्येनार्थे व्यवहारः । न हि व्यवहाराप्रसिद्धोऽर्थः कार्यान्तरतया शक्यतेऽवगन्तुम । अत्र चार्थे हिशब्दः, न चेत्यर्थः । यद्यप्यावापोद्धाराभ्यां पदानां शक्तिनिरूपणा (?) तथापि यथाव्यवहारमेव युक्ता । व्यवहारश्च वाक्यार्थविषय एव दृश्यते । तद्विषयैव च शब्दस्यापि शक्तिः कल्पयितुं युक्ता । तेन वाक्यार्थस्य प्रधानभूतस्यानेकार्थानुबन्धत्वात्तदनुबन्धभूतार्थावगतिः कारणतैवावापोद्धाराभ्यामवसीयते । तेन नान्तरीयकी पदार्थावगतिः । कार्यं तु सर्वपदानामपि वाक्यार्थावगतिरेवेति ।

एकदेशी ग्रन्थविरोधमाह—कथं तर्हि "अथ गौरित्यस्य शब्दस्य कोऽर्थ" इति सास्नादिविशिष्टा आकृतिरिति चोत्तरमसति कार्यान्यत्वे ? यदि पदस्य पृथक्कार्यं नास्ति कथमर्थविशेषावगतिलक्षणकार्यविषयः प्रश्नः, पदार्थावगतिलक्षणकार्यप्रदर्शनेन चोत्तरम् ? राद्धान्त्येवाह—कथं वा वृद्धव्यवहारेणास्यौत्पत्तिकताभिधानम् ? अस्यार्थः—यथायं ग्रन्थो मन्मते न घटत इति मन्यसे तथा त्वन्म-

त्पत्तिकत्वाभिधानम ? तस्मात्प्रतिज्ञासाधनयोर्यथैकवाक्यता भवति तथाऽयं ग्रन्थो वर्णनीयः। स तु तद्भूताधिकरणे स्वयमेव भाष्यकारेण वर्ण्यते इत्युपरम्यते।

(१)कथं तर्ह्यनैकान्तिकपरिहारः? निमित्ताभिप्रायेणोच्यते । अप्रतिपन्ननिमित्तः प्रथमश्रुतान्न प्रतिपद्यते । तस्माच्छब्दान्निमित्तान्तरमस्तीत्यभिप्रायः ।

कः पुनर्वाचकनिमित्तयोर्भेदः ? इदमर्थमेव हि तद्भूताधिकरणमारभ्यत इत्यलमतिप्रपञ्चेन ।

---

तेऽपि वृद्धव्यवहारेणास्य सम्बन्धस्यौत्पत्तिकताभिधानं न घटते। वृद्धव्यवहारे हि निरूप्यमाणे वाक्यार्थावगतिरेव कार्यतयाऽवभाति, न पदार्थावगतिः । यत एवं श्लिष्टता, तस्मात्प्रतिज्ञासाधनयोर्यथैकवाक्यता भवति तथाऽयं ग्रन्थो वर्णनीयः । प्रतिज्ञासम्बन्धस्यौत्पत्तिकतासाधनं वृद्धव्यवहारस्यानादिता । तयोर्यथा साध्यसाधनभावेनैकवाक्यता भवति तथाऽयं ग्रन्थो वर्णनीयः । स तु तद्भूताधिकरणे स्वयमेव भाष्यकारेणैव वर्णितः "पदार्थप्रतिपत्तिद्वारेणैव पदानां वाक्यार्थप्रतिपादकत्वमिति" वदता । तेन निमित्तभूताकृत्यर्थतोक्ता । एतच्चोत्तरमपि टीकाकारेणोक्तम् ।

संप्रति निराकृतपक्ष एकदेश्येव सिद्धान्तिनं पर्यनुयुङ्क्ते—कस्तर्ह्यनैकान्तिकपरिहार इति । उत्तरं ददाति—निमित्ताभिप्रायेणोच्यते । अप्रतिपन्ननिमित्तः प्रथमश्रुतान्न प्रतिपद्यते । अस्यार्थः—निमित्तं वाक्यार्थप्रतिपादने पदार्थात्मकमभिप्रेत्योच्यते—प्रथमश्रुतः किं न प्रत्याययतीति । एतदुक्तं भवति—प्रथमश्रुतं पदं निमित्तभूतं पदार्थं न प्रतिपादयति । अप्रतिपन्ननिमित्तश्च प्रथमश्रुतात् पदाद्वाक्यार्थमपि न प्रतिपद्यत इति सिद्धं वेदेऽपि प्रथमश्रुतस्याप्रतिपादकत्वम् । तस्माच्छब्दादन्यन्निमित्तान्तरं वाक्यार्थप्रतिपत्तेरित्यभिप्रायः ।

नन्वेवं यदि सर्वपदान्येव वाक्यार्थप्रतिपत्तौ निमित्तभूतानि तदा वैयाकरणदर्शनमङ्गीकृतं-सर्वं पदजातं मिलित्वा वाक्यार्थं प्रतिपादयतीति । तत्र च काल्पनिक एव विभाग इति । तदनेनाभिप्रायेणाह-कः पुनर्वाचकनिमित्तयोर्भेद इति । उत्तरम्—इदमर्थमेव भेदकथनार्थमेव हि तद्भूताधिकरणमारभ्यते । तत्रेदमुच्यते—निमित्तपक्षे पदानि स्वार्थेष्वपि तेषु

---

१. कस्तर्हि इति व्याख्यानपाठः ।

(१)"न सिद्धवदुपदेशा"दिति । किमिदं सिद्धवदुपदेशादिति ? इदमिदम्—नात्र कर्ता शक्यते कल्पयितुं वृद्धव्यवहारस्यानादित्वात् । अत औत्पत्तिकस्सम्बन्ध इति सिद्धम् ।

---

व्याप्रियमाणानि वाक्यार्थप्रतिपत्तिमुपजनयन्ति, न पुनः प्रत्यस्तमित-पदविभागमनवयवमेव वाक्यार्थं वक्तीति । एवं च कथ्यमाने कथित एव वाचकनिमित्तयोर्भेद इत्यलं प्रपञ्चेन । तद्भूताधिकरण एव प्रपञ्चो भविष्यति ।

न सिद्धवदुपदेशादिति । अत्र च सूत्रे व्यपदेश इति प्रथमान्तं पञ्चम्यन्त-तया विपरिणमय्य सिद्धवदिति चाध्याहृत्य भाष्यकारेणेदमुक्तम् । अस्यार्थः—सिद्धवदिदं सम्बन्धस्यापौरुषेयत्वं सिद्धमित्यर्थः । उपदे-शात वृद्धोपदेशात् । एकेन वृद्धेनापरस्मै वृद्धायानुष्ठानोपदेशे पार्श्व-स्थस्य सम्बन्धग्रहणसंस्कारमात्रादेवार्थप्रतीत्युपपत्तेः सम्बन्धक्लृ-प्तानुपपत्तिः । तमिममस्यार्थमबुध्वा पृच्छति—किमिदं सिद्धवदुपदेशादि-ति ; इदमिदम्—नात्र सम्बन्धस्य कर्ता शक्यते कल्पयितुमिति । अतः वृद्धव्यवहारा-नादित्वादौत्पत्तिकस्सम्बन्ध इति सिद्धम् । यदि वृद्धव्यवहारोऽनादिर्न स्यात् तदा प्रथमवृद्धयोः सम्बन्धग्रहणोपायाभावाच्छब्दप्रयोगार्थ प्रतीती न स्याताम् ; तदभावाच्च वृद्धव्यवहाराप्रवृत्तावपरेषामपि स-म्बन्धग्रहणे तथैव प्रयोगप्रतीती विच्छिद्येयाताम् । अनादिस्तु वृद्ध-व्यवहारः, पुरुषान्तरपूर्वकत्वात्पुरुषान्तरोत्पत्तेः । यथा खल्वद्यतनाः पु-रुषाः पुरुषान्तरपूर्वकाः तथा प्राच्या अपीति ।

अत्र केचिदर्थवादगतसृष्टिप्रलयश्रुत्युपनिपातमात्रोपजातश्रद्धा-तिशयविप्रलुब्धबुद्धयः कणभक्षाक्षचरणमतप्रवणचेतसः सर्वस्य तनुभुवनादेरीश्वरं कारणमाचक्षाणाः प्रचक्षते—सर्वं सावयवमवयव संयोगसमासादितात्मलाभमधुनातनमुदीक्षामहे । सावयवं च तनु-भुवनादिकम् । अवयवसंयोगश्च द्व्यणुकपर्यन्तः । द्व्यणुकोऽप्यवयवी परमाणुद्वयसंयोगारम्भणीयः । परमाण्वोश्च परस्परं कर्मजस्संयोगः । कर्म चादृष्टवदात्मसंयोगादेव परमाणुषु प्रतिज्ञायते । तदुक्तं (२)"अणु-मनसोश्चाद्यं कर्मेत्यदृष्टकारितानी"ति । अदृष्टं चाचेतनम् । न चाचे-तनं चेतनानधिष्ठितं क्वचिदपि कार्ये पर्याप्नोति वास्यादिकमिव । न चेदमुचितं (३)य एव ते क्षेत्रज्ञास्त एव तेषामदृष्टानामधिष्ठातारो

---

१. शा. भा. पृ. १२. पं. २८ । २. वै. सू. अ. ५ आ. २ सू. २३,

३. यथैव ते इति क० पु० ।

भवेयुरिति । अज्ञत्वात् । ज्ञाता हि पदार्थस्य पदार्थसामर्थ्यस्य चाऽधिष्ठातोपलभ्यते । यथा तक्षा वास्याः । न च क्षेत्रज्ञाः स्वसमवायिनी अपि धर्माधर्मलक्षणे अदृष्टे स्वरूपतः शक्तितो वा वेदितुमलमिति तदतिरेकी चेतनः कल्प्यते । तेन चेतनातिशयाऽधिष्ठितादृष्टवशोपजातकर्मनिमित्तसंयोगस्वपरमाण्वारब्धद्व्यणुकादिकार्यपरम्परासम्भूतं तनुभुवनादिकमादिमदवगम्यते । तथोत्पत्तिमत् सकलं विनाशयोगीति साधितमिति कथमिदानीमनादिवृद्धव्यवहारपरम्परेति ।

तदिदं प्रतिपक्षकक्षामपि नारादु क्रमत इत्युपेक्षितं भगवता भाष्यनिबन्धनकारेण । तथा हि—यद्यपि सिद्ध्यदयं मनोरथः, तथापि कथमेकदैव सर्वेऽवयविनो विलीयन्त इति समधिगमनीयम् । अधुनेव किमिति कस्यचिदुदयः कस्य चिद्विलय इति नाङ्गीक्रियते दृष्टानुगमादिति मन्यामहे । एवं च वृद्धव्यवहारपरम्परां कोऽपहरति ?

अपि च यदि क्षेत्रज्ञा नाधिष्ठातारः, ज्ञानाभावात् । अन्यस्तर्हि कथमधिष्ठाता ? तस्यापि ज्ञानानुपपत्तेः । आत्ममनःसंयोगाददृष्टापेक्षाद्विज्ञानानामुत्पत्तेस्तत्तदिन्द्रियार्थसंयोगसचिवात् । न चादृष्टेषु सामग्रीत्वमुपपद्यते ।

अथ तस्य कारणान्तरमस्तीति, तन्न, दृष्टकारणपरिहारेण वाऽदृष्टकारणान्तरानुमानानुपपत्तेः । दृष्टानुसारि सर्वत्रानुमानम् । सामान्यतो दृष्टमपि न दृष्टापमर्देन क्वचिद्वर्त्तते । नन्वेतदपि दृष्टं चेतनानधिष्ठितमचेतनं न प्रवर्त्तत इति, एतत्तर्हि परिहीणं भवति । सत्यमुभयत्र परिहाणे किं परिहीयतामिति तत्र विशेषविषयत्वादस्मदीयमेव ज्ञानोदयकारणान्तरानुमानमादरणीयम्, न पुनरीश्वरवादिनामत्यन्तसामान्यविषयमचेतनं चेतनाधिष्ठितमिति । विशेषानुमानस्य बलीयस्त्वात् । तदुक्तं भगवता वार्त्तिककारेण—

> प्रसिद्धावयवे यस्मादविशेषे प्रतिष्ठितम् ।
> तत्साध्यांशकसामान्यदृष्टाच्च बलवत्तरम् ॥
> बाधः सामान्यशास्त्रस्य विशेषे श्रुतितो यथा ।
> अनुमानान्तरैरेवमनुमानस्य बाधनमिति ॥

एतेनेदमपि पराकृतं भवति—नित्यैवेश्वरस्य बुद्धिरिति । यतो या या बुद्धिः सा सा उत्पत्तिमती विनाशिनी च । तेनेश्वरस्यापि धिया तथाविधयैव भवितव्यम् । किं चाधिष्ठानार्थोऽपि वक्तव्यः । यादृशं हि वास्यादिषु करसंयोगादिकमधिष्ठानं दृष्टं तादृशमेवादृष्टेष्वप्यनुमातव्यम् । न च तत्संभवतीति । तथा प्रवृत्तिरपि काऽन्या स्वरूपलाभाद-

प्रमाणस्वरूपसिद्ध्यर्थः । प्रमाणान्तराभ्युपगमे को दोषः ? न खलु कश्चिद्दोषः । किन्तु अप्रमाणं प्रमाणमित्युक्तं भवति । लक्षणग्रन्थश्चानादृतो भवति । अनपेक्षत्वं च सर्वप्रमाणानां निराकृतं भवति । तस्मात्सिद्धं विषयान्तरं शब्दस्य । तत्सिद्धौ च प्रामाण्यसिद्धिः ।

किमर्थं तर्हि पञ्चग्रहणम् ? व्यवहारपञ्चकप्रदर्शनार्थम् । पञ्चग्रहणे

---

न्यत्वं सम्प्रतिपन्नं सम्मतमेव । व्यवहारसिद्ध्यर्थश्चायमुपन्यासः, न प्रमाणस्वरूपसिद्ध्यर्थः । शब्देनापि व्यवहारः कर्त्तव्य इत्येवमर्थमुपन्यस्तम्—स्यादेतदेवं यदि पञ्चैव प्रमाणान्यभविष्यन्निति । तेनायमर्थो भवति—यदि पञ्चैव प्रमाणव्यवहारसाधनान्यभविष्यन् यावता शब्दोऽपि प्रमाणव्यवहारसाधनमिति न पुनः प्रमाणस्वरूपमेवात्र साध्यते, येन पञ्चशब्दात् प्रमाणान्तरमापद्येत ।

नन्वेवं किमिति व्याख्यायते ? यावता प्रमाणशब्दः प्रमाणस्वरूपपर एवास्तु, प्रमाणव्यवहारसाधनाभिप्रायेण मा व्याख्यायि । अभावश्च प्रमाणान्तरमभ्युपगम्यताम् । तदाह—प्रमाणान्तराभ्युपगमे को दोष इति । परिहरति—न खलु कश्चिद्दोष इत्यादिः । किन्तु अप्रमाणं यत्प्रमाणमेव न भवति तत्प्रमाणमित्युक्तं भवति । उक्तेन न्यायेनाभावस्य प्रमाणता नास्तीति तस्य प्रामाण्यमुक्तं स्यादित्यसदङ्गीकार एव दोष इति । लक्षणग्रन्थश्च भाष्यकारीयोऽनादृतो भवति—प्रमाणाभावोऽभाव इत्येवंरूपः । अनपेक्षत्वं च सर्वप्रमाणानां निराकृतं भवति । अभावस्य प्रत्यक्षादिसापेक्षस्यापि प्रमाणत्वोपगमे अपरमपि प्रमाणं सापेक्षमित्याशङ्क्येत । तस्मात्प्रमाणान्तराभावात् व्यवहारसाधनाभिप्राय एवायं पञ्चशब्दः कृतः । उपसंहरति—तस्मात्सिद्धं विषयान्तरं शब्दस्य प्रत्यक्षादिविषयाद्विषयान्तरं शब्दस्य सिद्धम्, निरपेक्षकार्यप्रतिपादकत्वात् । तत्सिद्धौ च प्रामाण्यसिद्धिः ।

यदि शब्दप्रामाण्यसिद्धिरेवात्र प्रकृता कर्त्तव्या, तदा किमर्थं तर्हि पञ्चग्रहणम् ? एवं वक्तव्यम्—यदि चत्वारीति । यदि व्यवहारसाधनतामात्रं शब्दस्य साध्यं स्यात् तदा तावदिदं युक्तम् । यदा तु प्रामाण्यमपि साध्यमेव, तदा पञ्चग्रहणेन किम् ? परिहरति—व्यवहारपञ्चकप्रदर्शनार्थम् । शब्दव्यवहारातिरिक्तव्यवहारपञ्चकं दर्शयितु पञ्चग्रहणम् । पञ्चग्रहणे ह्यक्रियमाणे व्यवहारान्तरप्रदर्शनं न स्यात् । यत एव व्य-

ह्यक्रियमाणे(१)व्यवहारान्तरं प्रदर्शितं न स्यात् । अत एव चाफलवती शाखेति प्रत्यक्षमेव व्यवहारं मन्यन्ते । प्रमाणविषयावच्छेदजश्चायं व्यवहारः । न च प्रमाणविषयावच्छेदोऽपि विषयान्तरतया शक्यते वक्तुम् ।

न च विषयमात्रावगमात्पूर्वं प्रमाणावच्छेदादृते नास्तीति व्यवहारोऽवकल्पते । तस्मात्सिद्धं व्यवहारान्यत्वम् । अत एव व्यवहारकाल एव पञ्चसंख्योपन्यासो न प्रमाणस्वरूपाभिधानकाले षट्संख्योपन्यासः । तस्मादत्रैव पञ्चसंख्योपन्यासादवैतु भवान् अभावव्यवहारस्य भेदिका पञ्च संख्या, न स्वरूपस्य । प्रसिद्धिस्तु दत्तोत्तरा ।

---

वहारान्तरबुद्धिः प्रयत्नसाध्या, न सुखेन सम्भवति, अत एवाफलवती शाखेति प्रत्यक्षमेव व्यवहारं मन्यन्ते नैयायिकाः । ननु यदि मन्यन्ते मन्यन्तां तर्हि, तत्राह— प्रमाणविषयावच्छेदजश्चायं व्यवहारः । अयमेवाति प्रमाणविषयमवच्छिद्य सावधारणज्ञानेन निश्चित्याभावव्यवहारः प्रवर्त्तेत । नन्वेवं तर्ह्यवच्छेदकत्वे प्रमाणान्तरमापद्येत, तत्राह— न च प्रमाणविषयावच्छेदोऽपि विषयान्तरतया शक्यते वक्तुम् । यदा दृश्येऽपि वस्त्वन्तरस्वरूपमात्रोपलब्धिर्भवति, तदा वस्त्वन्तरस्य नास्तित्वमिति प्रमाणस्वरूपविमर्श एवावच्छेदो न पुनर्वस्तुतः स्वरूपान्तरम् । अतो न प्रमाणान्तरापत्तिः ।

कथं पुनः प्रमाणविषयावच्छेदजोऽयं व्यवहारः ? विषयस्वरूपावगमादेव किमिति न भवति ? तत्राह—न च विषयमात्रावगमात् पूर्वं प्रमाणानामवच्छेदादृते नास्तीतिव्यवहारोऽवकल्पते, नास्तीतिशब्दस्य प्रयोगात्मको निःशङ्कगमनलक्षणश्च व्यवहारो न स्वरूपमात्रावगमादेव भवति । तस्मात्सिद्धं व्यवहारान्यत्वम्-पञ्च व्यवहाराः स्वरूपावगमातिनिबन्धनाः । एको व्यवहारोऽवच्छेदनिबन्धनः । यत एव व्यवहारपरिज्ञानायेदमुक्तं न पुनरभावाख्यप्रमाणस्वरूपनिरूपणाय, अत एव व्यवहारान्तरसिध्यर्थं व्यवहारकाल एव पञ्चसंख्योपन्यासो, न प्रमाणस्वरूपाभिधानकाले षट्संख्योपन्यासः । तस्मादत्रैव पञ्चसंख्योपन्यासादवैतु भवान् अभावव्यवहारस्येयं भेदिका पञ्चसंख्या, न स्वरूपस्य । यदि हि स्वरूपस्य भेदोऽभिमतस्स्यात्प्रमाणाभिधानकाल एव षट्संख्योपन्यस्येत । तेन व्यवहारकाले पञ्चसंख्योपन्यासादवगच्छ व्यव-

१. मूलव्याख्ययोरत्र पाठभेदो दृश्यते ।

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तं--'स एष यज्ञायुधी यजमान इति प्रत्यक्षं शारीरकं व्यपदिशतीति'। अत्रापि शारीरकमित्यसिद्धम्। कस्तर्हि व्यपदिश्यते ? यस्यैतच्छरीरम्। नन्वेष इति व्यपदेशो, न यस्यैष इति। अभेदोपचारनिबन्धनोऽयं व्यपदेशः, मञ्चाः क्रोशन्तीतिवत्। किमित्यौपचारिकः शब्दार्थो गृह्यते ? उच्यते--तथा (१)ह्यवगतेः। उक्ता ह्यर्थवादानामन्यपरत्वात् गौण्याऽवगतिः।

ननु चान्यत्वोपलब्धौ सत्यां गोर्वाहीकस्य च गौण्या निर्देश उपपद्यते--गौर्वाहीक इति। न चात्र शरीरादन्यमुपलभामहे। नोप-

हारमात्र एव भेद इति। प्रत्यक्षसिद्धिरित्यत्र प्रत्यक्षप्रसिद्धि(२)तुल्यतोपपादनेन परप्रमाणासिद्धिर्निर्मूलेत्युक्तम्॥

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तं--स एष यज्ञायुधी यजमान इति प्रत्यक्षं शारीरकं व्यपदिशतीति। अत्रापि शारीरकमित्यसिद्धम्। कस्तर्हि व्यपदिश्यते ? यस्यैतच्छरीरं स व्यपदिश्यत आत्मा। नन्वेष इति व्यपदेशो न यस्यैष इति। यदि हि यस्यैष कायः 'स यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती'ति व्यपदेशः तदा यावदात्माभिप्रायेणापि यज्ञायुधिव्यपदेशो घटते। यदा त्वेष इति यज्ञायुधिन एव सामानाधिकरण्येन व्यपदेशः तदाऽऽत्मनोऽन्यपुरुषाऽप्रत्यक्षत्वान्नोपपन्नमिदमात्माभिप्रायेणापि। तत्रैषशब्दानुगुण्यात् यज्ञायुधीति शरीरमेव वाच्यम्। तत्र स्पष्टः प्रत्यक्षविरोधः। उत्तरम्--अभेदोपचारनिबन्धनोऽयं व्यपदेशो मञ्चाः क्रोशन्तीतिवत्। अस्यार्थः--एतच्छब्देन वक्तृप्रत्यक्षोऽर्थोऽभिधीयते। यच्च प्रत्यक्षं तदपि स्पष्टत्वे आत्मापि स्पष्टसद्भाव इति स गौण्या वृत्त्योच्यते। एष इत्यभेदोपचारशब्देन गौणी वृत्तिरुक्ता। परशब्देन परो व्यपदिश्यत इत्यत्र दृष्टान्तो मञ्चाः क्रोशन्तीति। लक्षणा त्वेषा न तात्स्थ्येनोच्यते किमित्यौपचारिकः शब्दार्थो गृह्यते ? उत्तरम्--तथावगतेः। अन्विताभिधानव्युत्पत्तेरन्वययोग्यार्थोपस्थापकतया तथावगतेः गौणतावगतेः। न हि शरीरं स्वर्गगमनयोग्यं उक्तमर्थवादपदानामन्यपरत्वात् गौण्यैवावगतेरिति। इतिशब्दश्चात्र द्रष्टव्यः।

ननु चान्यत्वोपलब्धौ सत्यां गोर्वाहीकस्य च गोवाहीकयोर्भेदोपलब्धौ सत्यां मुख्यत्वानुपपत्त्या गौणो निर्देश उपपद्यते--गौर्वाहीक इति। न चात्र शरीरादन्यमुप-

१. हि शब्दो नास्ति व्याख्यानपुस्तकयोः। २. तुल्यताभिधानेन० इति ख. पु.।

लभामह इति कोऽस्याभिप्रायः? अयमेवाभिप्रायो नोपलभामह इति।

ननु च कार्यभूतैः प्राणादिभिरुपलभामहे। ननु शरीरमेव प्राणित्यपानिति च। शरीरं नाम किमभिप्रेतमायुष्मतः? योऽयं चातुर्भौतिकस्सङ्घातः। न तर्हि शरीरकार्याण्येतानि, अयावच्छरी-

---

लभामहे ये गौण्या वृत्त्या व्यपदिश्येरन्। नोपलभामहे इति कोऽभिप्रायः? उपलब्ध एवेति मत्वा पृच्छति। उत्तरम्—अयमेवाभिप्रायो नोपलभामह इति।

ननु च कार्यभूतैः प्राणादिभिरेव तमुपलभामहे। कादाचित्कं कार्यं समवायिकारणमनुमापयति। तेनानुमानेनात्मा प्रतीयते। ननु शरीरमेव प्राणित्यपानिति च। प्रत्यक्षकारणसद्भावे न कारणान्तरानुमानमुपपद्यत इति भावः। परिहरति—शरीरं नाम किमभिप्रेतमायुष्मत इत्यनेन शरीरकार्यता प्राणादीनां न सम्भवतीति मन्वानः शरीरस्वरूपं पृच्छति। प्रतिवचनम्—योऽयं चातुर्भौतिकः सङ्घातः चतुर्णां भूतानां समूहः।

एषा त्वत्र पदार्थविदां स्थितिः—चतुर्णां भूतानां समाहारमात्रं शरीरम्, न चतुर्भूतारब्धम्। किंतु पार्थिवमेव शरीरम्। परतन्त्राण्यन्यानि तैजसानि वायवीयानि च द्रव्याणि संयोगीनि। तदुक्तं परैः—संयोगस्त्वपि विप्रतिषिद्धो मिथः पञ्चानामिति। तथा हि—शरीरमिदं न पञ्चभूतारब्धं, चतुर्भूतारब्धं वा, चाक्षुषाचाक्षुषद्रव्यारब्धस्य चाक्षुषत्वापत्तेः वायुवनस्पतिसंयोगवत्। तदाहुः (१)(योगा एव) 'प्रत्यक्षाप्रत्यक्षाणां न प्रत्यक्षत्वात्संयोगस्य पञ्चात्मकत्वं न विद्यत' इति। न च पृथिव्यप्तेजोभिरपि चाक्षुषैर्यथाक्रममनुष्णाशीतशीतोष्णस्पर्शैरारभ्यते; एतत्त्रयविलक्षस्पर्शापत्तेः। यथा हि सितासिततन्त्वारब्धः पटो विलक्षणचित्ररूपो भवति तथेदमपि शरीरं विलक्षणस्पर्शं स्यात्। अनुष्णाशीतस्पर्शं चेदम्। अतः केवलपार्थिवावयवारब्धम्। तदुक्तं तैरेव (२)'गुणान्तरप्रादुर्भावाच्च त्र्यात्मकमपि ने'ति। अनेन हेतुना द्व्यात्मकमपि न भवति। एकपार्थिवाणुगतस्य चैकाकिनो गन्धस्य गन्धान्तरारम्भकत्वानुपपत्तेरगन्धं शरीरमापद्येत। गन्धवच्चेदमिति पार्थिवमेव शरीरम्। तत्संयोगिनः परतन्त्राः परे भूतान्तरारब्धाः कार्यद्रव्यविशेषाश्चक्षुरादय इति तन्त्रान्तरादनुसरणीयम्, दिङ्मात्रं तूक्तम्। तेन चातुर्भौतिकस्सङ्घातः।

अत्रोच्यते—न तर्हि शरीरकार्याण्येतानि, अयावच्छरीरभावित्वात्। 'अनेन यावदस्य शरीर'मित्यादेर्भाष्यस्य यथाश्रुतोऽर्थो दर्शितः। सचायं नैका-

---

१. वैशे. सू. ४. २. २. कुण्डलान्तर्गतो भागोऽधिकः। २. वै. सू. ४. २. ३.

रभावित्वादित्यर्थः । सत्यपि भूतत्वे उपात्तानां न रूपादय इवो-
पलभ्यन्ते ।

किं च सुखादयश्च न भूतधर्माऽशक्यन्ते वक्तुम् । परेन्द्रि-
यग्राह्या हि भूतधर्मा रूपादयो भूतवदेव, न सुखादयः ।

---

न्तेन शरीरकार्यतायाः असंभवं साधयितुं क्षमते । वैगुण्येनापि यावच्छ-
रीरं कार्याभावसम्भवात् । मृतशरीरे वैगुण्यमविवादम् । तस्मादन्यथा
व्याख्यायते अयावद्भूतभावित्वादित्यर्थः । यदि भूतारब्धद्रव्यसमवा-
यीन्येतानि स्युः तदा कार्यद्रव्यसमवायित्वात् कारणद्रव्येऽपि तदा-
पत्तिस्स्यात् । कारणगुणपूर्वको हि कार्यद्रव्ये वैशेषिकगुणारम्भः, यथा-
घटे रूपाद्यारम्भः । वैशेषिकगुणाश्च बुध्यादयः ।

ननु द्रव्याणामप्यपां काठिनो विकारो दृश्यते करकादिः, अचेतनाच्च
गोमयादेश्चेतनो वृश्चिको जायते इति । तदिदनाकाशभ्रान्तम् । काठिन्यं
नाम न गुणान्तरम् ; अपि त्ववयवानामविरलस्संयोगः । न च संयोगो
वैशेषिकगुणः । अचेतनाच्चेतनोत्पत्तिरस्ति नास्तीति विवादास्पदीभूत-
मिदानीम् । तत्र यदि कारणद्रव्येऽपि बुध्यादयस्स्युः तदारब्धानि घटा-
दीनि बुद्ध्यादिभाञ्जि भवेयुः । न च तथाऽस्ति । तथा सत्यपि भूतत्वेना-
नुपात्तानां शरीरत्वेनास्वीकृतानां न रूपादय इव वैशेषिकगुणाः प्राणा-
दय उपलभ्यन्ते । तदाह भगवान् काश्यपः-(१)कारणाज्ञानात्कार्यतां न
कारणज्ञानामिति । कारणभूतस्य पृथिव्यादेरज्ञानात् ज्ञानाभावात्तदा-
रब्धस्य शरीरस्याज्ञानं ज्ञानाभावः; कारणाज्ञाने कार्यान्तरस्य घटादेर-
ज्ञानादित्यस्य सूत्रद्वयस्यार्थः ।

किं च सुखादयश्च न भूतधर्माऽशक्यन्ते वक्तुम् । परेन्द्रियग्राह्या हि भूतधर्मा रूपा-
दयो भूतवदेव । ये ये भूतधर्मास्ते ते परेन्द्रियग्राह्या दृष्टाः रूपादयः । भू-
तानामिवेति षष्ठ्यर्थे वतिः । न च सुखादयः परेन्द्रियग्राह्याः । तस्मान्न भू-
तधर्माः । गुणिनि चागृह्यमाणे गृह्यमाणस्य तद्गुणतेति दुर्भणम् । ये हि
गुणाः प्रत्यक्षाः प्रत्यक्षस्य द्रव्यस्य ते सह द्रव्येण गृह्यन्ते यथा रूपाद-
यः । न च सुखादयः प्रत्यक्षा अपि द्रव्यविशेषाश्रिता गृह्यन्ते । तेन
मन्यामहे-नूनमप्रत्यक्षस्य द्रव्यस्य गुणा एत इति । शरीरं च प्रत्यक्षम् ।
अतोऽन्यस्य गुणा एत इति । तस्माद्यस्येदं कार्यं सोऽयं गौण्या वृत्त्या
व्यपदिश्यते-स एष यज्ञायुधीति ।

---

१. वैशे. सू. ३-१-४, ५. अत्रैवमेव पाठोऽस्ति वैशेषिकसूत्रपुस्तकेषु तु कारणा-
ज्ञानात्, कार्येषु ज्ञानात्, अज्ञानाच्च, इतिसूत्रपाठो दृश्यते । तत्त्वं तु सुधीभिरूह्यम् ।

मा भूवन् भूतधर्मास्सुखादयः। तद्व्यतिरिक्तस्यान्यस्येति किमत्र प्रमाणम्?। ननु च कार्यमेतत्कारणादृते नोपपद्यत इतीदमेवात्र प्रमाणम्। निरस्ता च भूतानां कारणतेति सिद्धमन्यधर्मत्वम्। नैवं सिद्ध्यति, परस्परकार्यतयाऽप्युपपत्तेः। (१)न हि यो य उपलभ्यते तस्य तस्य सम्बन्धिना भवितव्यमिति यदुक्तं तदयुक्तमिव प्रतिभाति। यदुत्पत्तिमद्दृष्टं तत्कथं सम्बन्ध्यन्तरं नावगमयतीति। हेतुमती ह्युत्पत्तिरिति केचित्। विसभागहेत्वभिप्रायमेतत्। न पुनरुत्पत्तिरहेतुकैवोक्ता। कथं पुनरिदमवगम्यते—विसभागहेत्वभिप्रायमेतदिति? (२)"नहि चन्द्रमसमादित्यं वान्यत्र सम्बन्ध्यन्तरमित्यन्तरशब्दश्रवणात्।

---

मा भूवन् भूतधर्मास्सुखादयः। तद्व्यतिरिक्तस्यान्यस्येति किमत्र प्रमाणमित्यनेन बौद्धदृष्ट्याऽनुमानिकात्मवादिनं वैशेषिकं भूतचैतन्यवादीव दूषयति। इदं च दूषणं भूतधर्मत्वासंभवमभ्युपगम्य दीयते। परमार्थतस्तु—भूतधर्मत्वमेवाभिमतं हृदि स्थितम्। अत एव चान्ते भूतचैतन्यमेवोपसंहारिष्यति वेदोपन्यासमुखेन(३) "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ती"ति। तदिदं सर्वमाकूतं टीकाकारो वक्ष्यति। मा भूवन्निति चाभ्युपगम्यवादः।

ननु च कार्यमेतत्कारणादृते नोपपद्यत इतीदमेवात्र प्रमाणम् कार्यानुमानमेवात्र प्रमाणम्। निरस्ता च भूतानां समवायिकारणतेति सिद्धमन्यधर्मत्वम्। भूतचैतन्यवादी दूषयति—नैवं सिध्यति, परस्परकार्यतयाऽप्युपपत्तेः। तत्र भाष्यम्—"न हि यो य उपलभ्यते तस्य तस्य सम्बन्धिना भवितव्यमिति शक्यते वक्तु"मिति। तदाक्षिपति—तदयुक्तमिव प्रतिभाति। उत्पत्तिमद्धि प्राणादि दृष्टम्। तत् कथं सम्बन्ध्यन्तरं न गमयति? कस्मान्नावगमयतीत्यत्राह—हेतुमती ह्युत्पत्तिरिति केचित्। या चोत्पत्तिः सा सा हेतुमती, यथा—घटादीनाम्। परिहरति(४)विसभागहेत्वभिप्रायमेतत्। न पुनरुत्पत्तिरहेतुकैवोक्ता। अस्यार्थः—विसदृशकारणाभिप्रायेणेदमुक्तम्—न च सम्बन्ध्यन्तरेण भवितव्यमिति। समानजातीयं तु भवत्येव हेत्वन्तरम्। तेन बुद्ध्यादयः परस्परं कार्यकारणभूताः। कथं पुनरिदमवगम्यते (५)विसभागहेत्वभिप्रायमेतदिति? न हि चन्द्र-

---

१. शा. भा. पृ. १८. प. २०। २. शा. भा. पृ. १४. प. २२.।
३. बृह० उ. २ ४-१२.। ४. ५. विसदृशहेत्व इति क०पु०।

नन्वन्यत्वेऽप्यनन्तरशब्द उपपद्यत एव । सत्यमुपपद्यते, न तु कार्यमकारणमिति शक्यते वक्तुम् । भवतु दुष्टता ग्रन्थस्य । न पुनर्दोष एवार्थान्यत्वे हेतुः । न संतानाभ्युपगमात् । सन्ततिर्हि हेतुहेतुमद्भावनिबन्धना । तस्माद्विसभागहेत्वभिप्रायमित्यवेहि(?) । अतस्समानसन्ततिहेतुकमेवेदं कार्यजालं, (तं) नात्र विसदृशोपलब्धौ प्रमाणमस्तीत्युपसंहृतम् ।

यदि च विसभागादृते नोपपत्तिस्स्यात् अव्यवस्थैव स्यात् ।

---

मसमादित्य वेत्यत्र सम्बन्ध्यन्तरमित्यनन्तरशब्दश्रवणात् । अन्तरशब्दश्रवणे हि विलक्षणस्सम्बन्धी कारणभूतः प्रतीयते । स एव च प्रतिषिध्यते ।

नन्वन्यत्वेऽप्यनन्तरशब्द उपपद्यत एव । समानजातीयानामपि यदन्यत्वमस्ति तदभिप्रायेणाप्यनन्तरशब्द उपपद्यत एव । तेन विजातीयत्वे नेदं लिङ्गम् । सत्यमुपपद्यते, न तु कार्यमकारणमिति शक्यते वक्तुम् । तेन(१)कार्यकारणमेव सम्बन्धीति सम्बन्ध्यन्तरनिराकरणे कार्यादन्यस्य कारणस्य निराकरणमशक्यम् । अपि तु भिन्नजातीयस्य । भवतु दुष्टता ग्रन्थस्य । न पुनर्दोष एवार्था(न्यत्वे) तदर्थावगमे हेतुः, यदि कारणमात्रनिषेधोऽनुपपन्नो भवति, अनुपपन्नार्थतयैव ग्रन्थोऽप्ययं दुष्टो भवतु । न पुनरन्तरशब्दोच्चारणमात्राद् विजातीयसम्बन्ध्यन्तरावगमो युक्तः । न सन्तानाभ्युपगमात् । समानायां सन्ततावित्यनेन ग्रन्थेन संतानोऽभ्युपगतः । ततः किमित्याह— सन्ततिर्हि हेतुहेतुमद्भावनिबन्धना । हेतुहेतुमद्भावावस्थितानि वस्तूनि निरन्तरोत्पन्नानि सन्ततिशब्दाभिधेयानि । तदभ्युपगमे हेत्वङ्गीकारस्तावदस्ति, तदङ्गीकारे च सर्वथा हेतुनिषेधो न घटते । तस्माद्विजातीयहेत्वभिप्रायेण निषेधः । तदाह— तस्माद्विसभागहेत्वभिप्रायमेतदित्यवेहि । उपसंहरति— अतः(२)समानसन्ततिहेतुजमेवेदं कार्यजालं(त)म् । नात्र विसदृशोपलब्धौ प्रमाणमस्तीत्युपसंहृतं भाष्यकारेण । सभागानां प्रत्यक्षसिद्धानां कारणत्वोपपत्तौ नात्यन्तापरिदृष्टकारणानुमानमुपपद्यत इति । अत्र सभागविसभागशब्दौ बौद्धानां निकायप्रसिद्ध्या सजातीयविजातीययोर्वर्तेते ।

यदि च विसभागादृते(३)नोपपत्तिः स्यात्, अव्यवस्थैव स्यात् । अयमभिप्रायः— योऽसावात्माऽनुमेयः सोऽपि क्षणिक एव युक्तः; कार्यगम्यस्य कार्यात्प्राग्भावमात्रे प्रमाणसम्भवात् । तस्यापि कार्यभूतस्य विजातीयकारणान्तरं क्ष-

१. कार्यकारणमवश्यं भावीति, २. समानसन्तति० इति० ख०पु० ।

३. नोत्पत्तिः । इति क० पु० मूलपुस्तकेऽप्येवमेव पाठः ।

अनयैव युक्त्या कर्तृशब्दार्थ इच्छा स्मृतिश्च प्रत्युक्ताः। अन्यस्यादर्शनादिति। न ह्यदृष्टेऽन्यस्मिन्विसभागे स्मृत्यादयो नोपपद्यन्त इति शक्यते वक्तुम्। न हि दृष्टेऽनुपपन्नं नाम। तदिदमुक्तं (१)"अनुपपन्नमिति नः क्व संप्रत्ययः" ? इति।

किं पुनः कारणं सर्व एवामी प्रतिपत्तिहेतवः आत्मन उपन्यस्य निरस्यन्ते भाष्यकारेण। एभिरनात्मन्यात्मबुद्धिः प्राप्नोति। सर्वप्रकारं चाज्ञानं निरसनीयम्। यत्तावदिदमुक्तं प्राणादिभिरेनमुपलभामह इति, किमत्रायुक्तम्? भूतगुणा ह्यमी

---

णिकमेव। तस्याप्यन्यत्तादृशमित्यनवस्था। सजातीयकारणकल्पनायां पुनः परस्परकारणकल्पनेति नानुपपन्नं किञ्चित्। अनयैव युक्त्या बुद्ध्यादिभ्योऽन्यस्यानुपलब्धेः परस्परकारणतया चोपपत्तेः, जानातीतिकर्तृशब्दार्थ इच्छा स्मृतिश्च प्रत्युक्ताः। अन्यस्य ज्ञानातिरिक्तस्यादर्शनात्। न ह्यदृष्टेऽन्यस्मिन् विसभागे स्मृत्यादयो नोपपद्यन्त इति शक्यते वक्तुम्। न हि दृष्टेऽनुपपन्नं नाम। यदि हि ज्ञानादन्यस्य दर्शनं स्यात्, तदा तत्कारणत्वादेषां तदभावेऽनुपपत्तिरवगम्येत। अन्यस्य पुनरदर्शने न काचिदनुपपत्तिः। तद्व्यतिरेकेणैव दर्शनात्।

ननु प्राणादिलिङ्गनिराकरणं भाष्यकारस्य निरर्थकम्। यदि प्राणादीन्यात्मानमवगमयितुमीशते ततस्तेभ्योऽप्यात्मप्रतीतिरस्तु। अथ न, तदानादर एव युक्तः। किमर्थमेषां निराकरणमिति, तदाह—किं पुनः कारणं सर्व एवामी आत्मप्रतिपत्तिहेतव उपन्यस्य निरस्यन्ते भाष्यकारेणेति। प्रयोजनमाह—एभिरनात्मन्यात्मबुद्धिः प्राप्नोति। सर्वप्रकारं चाज्ञानं निरसनीयमिति। अस्यार्थः—यद्येते हेतवो न निराक्रियेरन् तदा शिष्याणामेष्वपि वैशेषिकादिदर्शनश्रवणविप्रलब्धबुद्धीनां समीचीनात्महेत्वभिमानस्स्यात्। हेत्वायत्ता च हेतुमद्व्यवस्थेति हेतुसामर्थ्यानुसारेण भूतसङ्घाता एवात्मेत्यनात्मन्येवात्माभिमानः स्यात्। सर्वप्रकारं चाज्ञानं शिष्याणामपनेयमित्येषां निराकरणम्। कथं पुनरमी हेतवोऽनात्मन्यात्मबुद्धिमुत्पादयन्ति? एकग्रन्थेनाह—यत्तावदिदमुक्तं प्राणादिभिरेनमुपलभामह इति। किमत्रायुक्तम्? भूतगुणा ह्यमी न भवन्ति अयावद्भूतभावित्वात्। घटादिष्वदर्शनादिति। एतच्च प्राग्विवृतम्। निरस्ते च भूतधर्मत्वे उत्पत्तिमत्तया च सम

---

१. शा. भा. पृ. १५. पं. १६।

किमिदमन्यथैव प्रक्रान्तमन्यथैवोपसंहृतम् ? शब्दादेवार्थावगतिरिति प्रक्रान्तम्। वृद्धव्यवहारादित्युपसंहृतम्। तदिदमन्यत्राहितमन्यत्रैव निपतितम्। वृद्धव्यवहारादर्थेऽवगम्यमाने नैव शब्दादवगतोऽर्थो भवति हस्तसंज्ञादिभ्य इव। हस्तसंज्ञादयोऽपि वृद्धव्यवहारप्रसिद्धा एव नार्थेन सम्बद्धा इति। व्युत्पत्तिरेव ह्यर्थावबोधकारणं न हस्तसंज्ञादयः। व्युत्पत्त्युपाधयो हि ते। तस्मादुपाधिरशब्दो नार्थावगतेः कारणम्। कशाङ्कुशप्रतोदाद्यभिघातवत्। अत एव च शब्दस्वभावज्ञैरुक्तं विवर्त्त एव च वेदवादिभिराश्रयणीय इति।

अत्राभिधीयते किमनेन विवर्त्तपक्षपातेन, प्रत्युक्तोऽयम्, एक-

---

दृष्टस्य ? यथा वाक्यात् क्रियाकाण्डादि संयोगश्च आत्मलाभश्चादृष्टस्य यागाद्यनुष्ठानादेवेति। तस्मादीश्वरवादोऽस्माभिरपि न निराकृतः।

अत्र चोदयति—किमिदमन्यथैव प्रक्रान्तमन्यथैवोपसंहृतम्। शब्दादेवार्थावगतिरित्युपक्रान्तं शब्दस्य प्रत्यायकत्वमर्थस्य प्रत्याय्यत्वमिति वदता प्रक्रान्तम्। वृद्धव्यवहारापेक्षार्थावगतिरिति वदताऽन्वयव्यतिरेकाभ्यां व्यवहारादेवार्थावगतिरित्युपसंहृतम्। तदिदमन्यत्राहितमन्यत्रैव निपतितमकुशलस्येव धन्विनः शरान्तकुरङ्गाणामिति। यस्माद्वृद्धव्यवहारात्पदार्थे गम्यमाने नैव शब्दादर्थोऽवगतो भवति हस्तसंज्ञादिभ्य इव। दृष्टान्तं विवृणोति—हस्तसंज्ञादयोऽपि वृद्धव्यवहारप्रसिद्धा एव। वृद्धा एव हस्तसंज्ञामपि सङ्केतयन्ति। तेनार्थेन हस्तसंज्ञादयः सम्बद्धाः अर्थप्रतिपादका न भवन्तीत्यर्थः। व्युत्पत्तिरेव ह्यर्थावबोधकारणं न हस्तसंज्ञादयः व्युत्पत्त्युपाधयो हि ते। अयमर्थः—हस्तसंज्ञा ह्येवं सङ्केत्यते—यदाऽयमर्थो ममाभिप्रेतः तदाऽयं मया हस्तश्चालयितव्य इति। स यदा तथैव हस्तं पुनश्चालयति तदा प्राचीं व्युत्पत्तिं स्मृत्वा हस्तसंज्ञातः पुनरभिप्रायविशेषमवसायार्थमवगच्छति। उपाधिमात्रं हस्तसंज्ञा। तस्मादुपाधिरशब्दो नार्थावगतेः कारणम्। कशाङ्कुशप्रतोदाद्यभिघातवत् कशाङ्कुशप्रतोदैरश्वगजवृषभाणामभिघातवत्। प्रतोदः प्राजनम्। यत एव मीमांसकपक्षे शब्दार्थयोः सम्बन्धो न निर्वहति, अत एव शब्दस्वभावज्ञैर्वैयाकरणैरिदमुक्तं—विवर्त्त एव वेदवादिभिराश्रयणीय इति।

अत्र सिद्धान्ती परिहरति—किमनेन विवर्त्तपक्षपातेन, प्रत्युक्तोऽयम्। शब्दा-

त्वानुपलब्धेः। यद्येवं प्रत्युक्तं तर्हि वेदस्य प्रामाण्यम्। अत्रोच्यते—वृद्धव्यवहारव्युत्पत्त्याऽवगम्यमानेऽर्थे शब्दादन्यत् कारणं किं वा मन्यते भवान्। ननु च व्युत्पत्तिमेव कारणतया मन्यामहे। मैवम्; शब्दार्थसम्बन्धविषया हि व्युत्पत्तिः, न व्युत्पत्तेः शब्दार्थावगतिः। व्युत्पत्तिरेव ह्यादिमती न पुनः शब्दार्थयोस्सम्बन्धः। तस्य विषयत्वात्। तस्मा'न्न सिद्धवदुपदेशा'दिति सम्यगभिहितम्।

ननु कार्येऽपि सम्बन्धे वृद्धव्यवहारव्युत्पत्तिर्बालानामनुगुणैव। कथमिदं प्रतिपक्षतया शङ्क्यते? सत्यं प्रमाणान्तरपरिज्ञेये हि कार्यत्वे व्युत्पत्तिर्व्याकरणादिव्युत्पत्तिरिवाविरोधः। अथ च कृतकः कस्य निरुणद्धि कल्पनाम्। न चात्र प्रमाणान्तरमस्तीत्युक्तम्।

---

**नामर्थानां** चैकत्वानुपलब्धेः। **विवर्त्तवाद्याह**—यद्येवं प्रत्युक्तं तर्हि वेदस्य प्रामाण्यं **शब्दार्थावगमकत्वाभावात्**। अत्रोच्यते वृद्धव्यवहारव्युत्पत्त्यावगम्यमानेऽर्थे शब्दादन्यत्किं वा कारणं मन्यते भवान्। ननु—व्युत्पत्तिमेव कारणतया मन्यामहे। मैवम्। शब्दस्यार्थसम्बन्धविषया हि व्युत्पत्तिः, न व्युत्पत्तेश्शब्दार्थावगतिः। अस्यार्थः **वृद्धव्यवहारे ह्यनेन शब्देनायमर्थः प्रतिपाद्यत इति शब्दार्थयोर्वाच्यवाचकसम्बन्धाध्यवसानमेव व्युत्पत्तिरित्युच्यते। न पुनरन्यत्। ततश्च व्युत्पत्तिस्वरूपमेवेदृशं, यदुत शब्दादर्थोऽवगम्यत इति। तेन** व्युत्पत्तिरेव **सम्बन्धावगतिरूपा** आदिमती। न पुनः शब्दार्थयोस्सम्बन्धः, तस्य विषयत्वात्। **यथात्मप्रतीतिरादिमती, नात्मापि।** तस्मा'न्न सिद्धवदुपदेशा'दिति सम्यगभिहितम्।

**सम्प्रति यदुक्तं परै"र्यज्जातीयो यतः सिद्ध" इति तत् दूषयितुं पूर्वपक्षमारचयति**—ननु च कार्येऽपि सम्बन्धे वृद्धव्यवहारव्युत्पत्तिरनुगुणैव बालानाम्। कथमियं प्रतिपक्षतयोपन्यस्यते? अस्यार्थः—**यथा कृतकसम्बन्धे देवदत्तादिपदे वृद्धव्यवहारे व्युत्पत्तिर्भवति, तथा गवादिष्वपि भवत्विति। दूषयति**-सत्यं प्रमाणान्तरप्रतिज्ञेये हि कार्यत्वे ( व्युत्पत्ति ) र्व्याकरणादिव्युत्पत्तिरिव न विरोधः। अथ च कृतकः कस्य पुनर्निरुणद्धि कल्पनामिति। अस्यार्थः—**यत्र प्रमाणान्तरेण कार्य एव सम्बन्धोऽवगतः तत्र भवतु कार्यता। यत्र पुनः प्रमाणान्तरं कार्यत्वे नास्ति, तत्र कार्यत्वं कल्पयितव्यम्। तच्चार्थप्रतीतिलक्षणात् कार्यात्। तच्चेत्कार्यं वृद्धव्यवहारव्युत्पत्तेरेव प्रत्यक्षभूताया उपपन्नं तर्हि न शक्यते कार्यतानुमानम्। न हि प्रत्यक्षदृष्टे कारणान्तरे सति सर्वत्र तदेव कारणमनुमातुं शक्यते। तेनार्थ-**

किञ्च कार्ये हि सम्बन्धे कर्तुर्दुर्गमेषु देशेषु सम्बन्धकरणे न किञ्चित्प्रयोजनमस्तीति । संव्यवहारार्थं हि सम्बन्धकरणम् । न दुर्गमस्थैर्व्यवहारोपपत्तिः । किञ्च कार्यस्सम्बन्धः सम्बन्धिशब्दादृते नोपपद्यते । यदि कार्यार्थः सम्बन्धोऽभ्युपगम्यते कृतं कार्येण ।

ननु च व्युत्पत्तिरपि कार्यतामपेक्षत एव । कथम् ? अयमत्र वाचक इत्येवमविज्ञातार्थस्य न शब्दादर्थावगतिरुपपद्यते । न हि दृष्टेऽनुपपन्नं नाम । व्यवहारमात्रादेव हि बालानामवगतिर्दृष्टा । तस्मात्प्रत्यक्षादृष्ट एवमुत्पद्यमानेऽर्थे न कर्तुः कल्पनोपपद्यते ।

---

प्रतिपत्तिकार्यबलेन तावन्न शक्यते सम्बन्धस्यापौरुषेयता वक्तुम् । यत्र पुनः साक्षादेव दृश्यते तत्र तथैवाङ्गीक्रियते । न चात्र प्रमाणान्तरमस्तीत्युक्तम् ।

किञ्च कार्ये हि सम्बन्धे न कर्तुर्दुर्गमेषु देशेषु सम्बन्धकरणे किञ्चित्प्रयोजनमस्ति । संव्यवहारार्थं हि सम्बन्धकरणम् । न च दुर्गमस्थैः संव्यवहारोपपत्तिः । अस्यार्थः— यद्येक एव पुरुषः शब्दानामर्थैः सह सम्बन्धं कृत्वा वेदान् प्रणयेत् तदा तेन वेदव्यवहारिष्वेव सङ्केतः कार्यः । न दुर्गमदेशव्यवस्थितेषु म्लेच्छादिषु । तेषां वेदव्यवहाराभावात् । दृश्यते च म्लेच्छादिदेशेष्वपि सास्नादिमति गोशब्दप्रयोगः । न चेदमुपपन्नं वेदकारादन्य एव सम्बन्धकार इति । सम्बन्धकरणस्य निष्प्रयोजनत्वात् । व्यवहर्त्तु हि पाणिनिपिङ्गलादयः सङ्केतं कुर्वन्ति । तस्मान्न कश्चिद्दोषः । अनेनाव्यतिरेकश्चेत्यस्य प्रथमा व्याख्या दर्शिता । द्वितीयां वर्णयति—कार्यश्च सम्बन्धः सम्बन्धिशब्दादृते नोपपद्यते । यदि कार्यार्थस्सम्बन्धोऽभ्युपगम्यते कृतं कार्येण । अस्यार्थः— अनेन शब्देनाऽयमर्थोऽत्र प्रतिपादयितव्य इतीत्थं सम्बन्धः कर्त्तव्यः । न च तत् शक्यते कर्त्तुम् । यदि वृद्धव्यवहार एव व्युत्पन्नाः केचन शब्दा व्युत्पाद्यानामङ्गीक्रियन्ते ते हि पूर्वशब्देन व्युत्पन्नानां सम्बन्धकरणवाक्यार्थमपि बोद्धुमलम् । यदि वृद्धव्यवहारप्रसिद्धाः केचन व्युत्पाद्यानामङ्गीक्रियन्ते तदा किमपरं सम्बन्धकरणेन ? वृद्धव्यवहार एव व्युत्पत्त्युपायोऽस्त्विति ।

सम्प्रति स्थिते राद्धान्ते चोदयति,—ननु च व्युत्पत्तिरपि कार्यतामपेक्षत एव । कथमिति प्रश्नः । उत्तरम्—अयमस्य वाचक इत्येवमविज्ञातार्थस्य न शब्दादर्थावगतिरुपपद्यत इति । एतच्च स्वपक्षतुल्यतापादनार्थं चोद्यम् । परिहारस्तु—न हि दृष्टेऽनुपपन्नं नाम । व्यवहारमात्रादेव हि बालानामवगतिर्दृष्टा । उपसंहरति·

इदमपरं व्यवहारानौपयिकम्। कृते हि सम्बन्धे अदृश्यमानस्यार्थस्य देवतादेः सम्बन्धकरणम्। अशक्तिस्तूपवर्णितैव। तस्मादौत्पत्तिकत्वात्सिद्धमनपेक्षत्वम्।

अथ यदुक्तमनिमित्तं शब्द इति किमिदं चोद्यते? परिहृतमेतदौत्पत्तिकत्वाभिधानेन सम्बन्धस्य। कस्य वाऽन्यस्य परिहारोऽवगम्यते औत्पत्तिकतया? किमिति नैवान्यदुपन्यस्तम्? विद्यमानोपलम्भनत्वेन हि विषयान्तराभावो नियोगस्य दर्शितः। सत्यं तस्यैवाथसौत्पत्तिकत्वेन परिहार उक्तः, किन्त्वौत्पत्तिकत्वे विषया

---

तस्मात्सत्यदृष्टे शब्दार्थावगतिकारणे व्यवहाराय एवमुपपद्यमाने न कर्तुः कल्पनमुपपद्यत इति पूर्वमेव व्याख्यातम्।

अर्थेऽनुपलब्धे इत्यस्यार्थं व्याचष्टे—इदमपरं व्यवहारानौपयिकम्; कृते हि सम्बन्धे तदाऽदृश्यमानस्यार्थस्य देवतादेः सम्बन्धकरणम्। अस्यार्थः—व्यवहाराय हि संज्ञा कार्या, यथा पुत्रस्य पित्रा "देवदत्तः" इति। न च देवतादिभिर्व्यवहारोऽस्ति। ननु किमिति प्रयोजनाभावे भाष्ये व्याख्यातमुक्तं देवतादीनां च प्रत्येतुमशक्यत्वात् सम्बन्धकरणाशक्यत्वमिति भाष्यकारेण नोक्तं किमिति न व्याख्यायत इत्यत आह—अशक्तिस्तूपवर्णितैवात्र भाष्ये। अतो न व्याख्याय ते। तेन संज्ञाकरणसम्बन्धविरहिणां निराकृतम्। देवतादिषु संज्ञाकरणस्यैवाभावात् औत्पत्तिकत्वात् सम्बन्धस्य सिद्धमनपेक्षत्वमिति।

अत्र भाष्यकारो "अथ यदुक्तमनिमित्तं शब्दः" इत्यनेनैव भाष्येणैवं चोदयति मीमांसकः—अथ यदुक्तं पूर्वमनिमित्तं शब्द इत्यस्माभिः तस्य परिहारः कः इति। तदुपक्षिपति अथ यदुक्तमनिमित्तं शब्द इति किमिदं चोद्यते? यावता परिहृतमेतदनिमित्तत्वं सम्बन्धस्यौत्पत्तिकत्वाभिधानेन। अथोच्येत—औत्पत्तिकसम्बन्धाभिधानेनान्यदेव परिहृतमिति, अत्राह—कस्य वाऽन्यस्य परिहारोऽवगम्यत औत्पत्तिकत्वाभिधानेन? किमिति नैवान्यदुपन्यस्तं यत्परिह्रियते। विद्यमानोपलम्भनत्वेनैव विषयान्तराभावो नियोगस्य दर्शितः "चित्रया यजेत पशुकाम" इत्यादौ। अस्यार्थः—विद्यमानोपलम्भनत्वात् प्रत्यक्षादेः पशूनां च साध्यसाधनभावस्य प्रमाणान्तराग्राह्यता। अतः प्रमाणान्तरागम्यमेव साध्यसाधनपूर्वकं कार्यत्वं नियोगस्य लिङादेर्विषयो, न विषयान्तरमिति पूर्वं दर्शितम्। अतस्तस्यैवौत्पत्तिकत्वेन परिहारो दत्तः। किमपरमपरिहृतमिवोपन्यस्यते? अत्र समाधिः—सत्यं तस्यैवौत्पत्तिकत्वपरिहार उक्तः। किन्तु औत्पत्तिकेऽपि सम्बन्धे विषयान्तरविवेकोऽनुक्त इव प्रतिभाति। तद्विवेकार्थं पुनरुप

न्तरविवेको नोक्त इव प्रतिभाति, तद्विवेकायेदं पुनरुपन्यस्यते । “(१)कर्मकाले फलादर्शनात् कालान्तरे च कर्माभावा”-दिति । ननु चानेन किं प्रयोजनम्? विषयान्तराभावात् प्रमाणान्तरविषयतया च सापेक्षत्वात्तदभावे चाप्रामाण्यं दर्शितम् । इहापि तदेव । किं पुनस्तदयुक्तमिव प्रतिभाति? इदं तत्; प्रमाणान्तराविषयत्वे ह्यनन्तरमस्मिन् सति नियोगः । तत्र चानुपलब्धेः स्फुटमेवाप्रामाण्यम् । न चास्मिन्नर्थे संभवति नियोगादेव नियोगसिद्धिरिति

---

स्यते । अस्यार्थः—पौरुषेये सम्बन्धे सति पलादापद्यमानं वेदानां पौरुषेयत्वं सापेक्षत्वादिकमौत्पत्तिकसम्बन्धाभिधानेन निरस्तम् । लोके तु स्वातन्त्र्यदर्शनेन शब्दस्य यः प्रमाणान्तरगोचरैकविषयत्वशङ्का सा निराक्रियते । औत्पत्तिके सम्बन्धे विषयान्तरं स्वतन्त्रं शब्दस्येत्ययं विवेकोऽनुक्त इव प्रतिभाति तद्विवेकार्थेदं चोद्यं पुनरुपन्यस्यते ।

कर्मकाले फलादर्शनात् कालान्तरे च कर्माभावादित्यनेन भाष्यं पठित्वाऽऽक्षिपति । ननु चानेन विषयान्तरविवेकायोपन्यस्तेन भाष्येण किं प्रयोजनम्? यस्माद्विषयान्तराभावात्प्रमाणान्तरविषयतया च सापेक्षत्वात् तदभावे चाप्रामाण्यं दर्शितं शब्दस्य प्रमाणान्तरावेद्यविषयत्वाभावात् प्रमाणान्तरग्राह्यार्थविषयतया च प्रमाणान्तरसापेक्षत्वात्प्रमाणान्तराभावे चाप्रामाण्यं दर्शितं चित्राक्षेपे । इहापि तदेवानेन भाष्येणोक्तमिति । किं पुनस्तद्यदनुक्तमिव प्रतिभाति? यदनेन भाष्येणोच्यते । समाधत्ते—इदं तत; प्रमाणान्तराविषयत्वे ह्यनन्तरमस्मिन्सति नियोगः तत्र चानुपलब्धेः स्फुटमप्रामाण्यमिति प्रागुक्तमेव । न चास्मिन्नर्थे सम्भवति नियोगादेव नियोगसिद्धिरिति शक्यते कल्पयितुम् । इदं तदनुक्तमुक्तमेतेन भाष्येणेति संबन्धः। अस्यार्थः—यद्यपि कर्मानन्तरं फलं न सिध्यति कालान्तरे च नास्ति कर्म, तथापि नियोगादेव कालान्तरे फलं भविष्यतीति तदनेन परिह्रियते । यस्मादस्मिन्नर्थे(२)प्रमाणान्तरविषयत्वात्मके सम्भवति नियोगादेव सिद्धिरिति न शक्यते कल्पयितुम्, नियोगस्य तदानीमप्रमाणकत्वात् । नियोगो हि प्रमाणान्तरावेद्यरूपः कथं प्रमाणान्तरसापेक्षशब्दप्रमेयः स्यात् । तस्मात्कर्मानन्तरं फलादर्शनात् कालान्तरे च कर्माभावात् नास्ति प्रमाणं पशुफलेष्टेरिति । त-

१ शा० भा० १३–पृ० २८. पं० ।

२. प्रमाणान्तराविषयात्मके इति० ख० पु० ।

शक्यते (कल्पयितुम्) वक्तुम्। तदिदानीं निराक्रियते—स्यादेतदेवं यद्यौत्पत्तिकता न स्यात्, साधिता चासौ। ततः किम्? इदं ततः—नानेनेत्यमुमर्थमपेक्षते नियोगः। प्रमाणान्तरावगम्येऽपि हि लौकिकेऽर्थे नैव नियोगस्य साध्यसाधनसिद्ध्यपेक्षाऽवसीयते। कारणदोष-

स्यादनुपलब्धे स्फुटमप्रामाण्यं चोदनाया इति। तदिदानीं निराक्रियते—स्यादेतदेवं यद्यौत्पत्तिकता न स्यात्। साधिता चासौ। यद्यौत्पत्तिकः सम्बन्धः ततः किम्? इदं ततः—नानेन कर्मणेदं फलं सिध्यतीत्यमुमर्थमपेक्षते नियोगः। अस्याभिप्रायः—यदि हि पौरुषेयः सम्बन्धः स्यात् तदा बलात् पौरुषेयता चोदनाया आपद्येत। तथा च सति प्रमाणान्तरविषयत्वापत्तेः साध्यसाधनभावापेक्ष एव नियोगार्थः स्यात्। साधिते त्वपौरुषेये सम्बन्धे स्वातन्त्र्याविरोधान्नाप्रामाण्यं शक्यते वदितुम्।

यत्तूक्तं लोके स्वातन्त्र्यं न प्रतीयत इति, तत्राह—प्रमाणान्तरावगम्येऽपि हि लौकिकेऽर्थे नैव नियोगस्य साध्यसाधनसिद्ध्यपेक्षाऽवसीयते। अस्यार्थः—प्रवृत्तिदर्शनेन लिङादीनां कार्यार्थप्रतिपादकत्वं तावदवगम्यते लोके। तथा व्युत्पन्नास्ते स्वार्थाभिधाने न प्रमाणान्तरमपेक्षन्ते। अतो यद्यपि वक्ता प्रमाणान्तरप्रतीतामेव कार्यतां विवक्षति तथापि शब्दस्स्वसामर्थ्येनैव तां प्रतिपादयति। तेन वेदेऽपि न साध्यसाधनावगमपूर्वकोऽर्थोऽभिधीयते। नियोग ''' चात्र लिङादिभिरभिप्रेतः। दर्शितं च भाष्ये आचार्यचोदितः करोमीति हि दृश्यते। नानेनास्य सिद्धिरिति। एतदुक्तं भवति—यतः प्रतिपत्ता कार्यमेव प्रतिपद्यानुतिष्ठति न पुनस्साध्यसाधनभावम्। अतः कुर्वाण आपृष्ट (१)आचार्यप्रेरितः करोमीति व्यपदिशति, न साध्यसाधनभावावगमम्। यदि पौरुषेयेऽपि वाक्ये प्रतिपत्ता निरपेक्षत्वमेव कार्यं बुध्यते तदा किमिति तर्हि पुरुषापेक्षा सम्बन्धस्य निराक्रियते।

भवतु पौरुषेयः सम्बन्धो, वेदाश्च पौरुषेयाः। तथापि निरपेक्षार्थप्रतिपादकतया प्रामाण्यं भविष्यति। अत्रोत्तरम्—कारणदोष(२)सम्भावनानिराकरणाय निराक्रियते। न पुनरात्मसंवित्तौ। अस्यार्थः—यदि पौरुषेयत्वं न निराक्रियते तदात्वत्रापि कार्यप्रतीतिः कारणदोषान्मिथ्या स्यात्। प्रामाण्यप्रतीतं हि स्वयमर्थं पुरुषः परस्मै प्रतिपादयति। तत्र च पौरुषेयस्य वचनस्य कार्यस्य कारणानुमापकता। यदि च वेदानां पौरुषे

१. आचार्येण कार्यं बोधयित्वा प्रेरितः, इत्यधिकं ख० पु०।

२. सद्भावनिराकरणाय इति क० पु०।

संभावनानिराकरणाय निराक्रियते । तस्मात्स्वातन्त्र्यं नियोगस्येत्यनेन विवेकः प्रदर्श्यते । पुरुषं हि नियुञ्जानः साध्यसिद्धिमवगमयतीति षष्ठे प्रतिपादयिष्यति । किमेवं सत्यनन्तरानुपलब्धिर्निरस्ता भवति ? । बाढं निरस्ता । न ह्यस्मिन् पक्षे क्रियाशक्तिनिरूपणासाध्यसिद्धिः । कथं तर्हि ? नियोगार्थवशात् । ततश्चास्मादस्य सिद्धिरित्येतावदवगम्यते, नानन्तरं व्यवहितं वेति । तच्चानपेक्षत्वं यत्नतः प्रतिपादितम् ।

---

तदा स्यात् तदा प्रमाणान्तरेण वेदार्थं प्रतीत्य पुरुषेणोपदेशः कार्यः । न च प्रमाणान्तरमस्तीति कारणदोषसमुत्पन्नापि प्रतीतिर्मिथ्या स्यात् । चैत्यं वन्देत स्वर्गकामः, ब्राह्मणाय भक्तं दद्यात्स्वर्गकाम इति वत् । न पुनरात्मसंवित्तौ प्रमातुः स्वयं प्रतिपत्तौ सापेक्षता भवतीत्येवमर्थं निराक्रियते । उपसंहरति—तस्मात्स्वातन्त्र्यं नियोगस्येत्यनेन विवेकः प्रदर्श्यते । यदि स्वातन्त्र्यं नियोगस्य । कथं तर्हि स्वर्गयागयोः साध्यसाधनभावावगमः प्रतीयते । विषयनियोज्यमात्रावच्छिन्नो हि नियोगः प्रतिपादितः नित्याधिकारवदित्यत्राह—पुरुषं हि नियुञ्जानः साध्यसिद्धिमवगमयति । एतच्च षष्ठे सयुक्तिकं वक्ष्यति । तदाह—षष्ठे प्रतिपादयिष्यतीति । यद्यपि स्वातन्त्र्येण कार्यं लिङादिरवगमयति किमेवं सत्यनन्तरानुपलब्धिर्निरस्ता भवति ? कामाधिकारे हि फलसिद्धिपर्यन्तो वाक्यार्थः । फलं चेदनन्तरं न दृश्येत तदा प्रमाणान्तरविरोधादप्रामाण्यमापादयन्ती किमनन्तरानुपलब्धिर्निरस्ता भवति ? बाढं निरस्ता, नाप्रामाण्यमापादयितुं क्षमा । कस्मादित्याह—न ह्यस्मिन्पक्षे क्रियाशक्तिनिरूपणा साध्यसिद्धिः । कथं तर्हि ? नियोगार्थवशात् । अयमर्थः—यदि क्रियाशक्तिनिरूपणा साध्यसिद्धिः तदानन्तरमेव फलेन भवितव्यमिति शास्त्रार्थः स्यात् । न चास्मिन्पक्षे स्वातन्त्र्येण कार्याभिधानपक्षे यस्मादियं क्रिया फलं साधयितुं शक्नोति तस्मात्कार्यात् फलसिद्धिश्चेति इत्येवं क्रियाशक्तिनिरूप्य साध्यसिद्धिः । किं तर्हि ? यस्मात्कामी कार्यं बोध्यते तस्मात्कार्यं फलमिति । न च क्षणभङ्गुरां क्रियां नियतदेहान्तरभोग्यस्वर्गसाधनात्मिकां स्वर्गकामः कार्यतया बोद्धुमलमित्यपूर्वं कालान्तरस्थायि फलसिद्धिसमर्थं लिङादयः कार्यतया बोधयन्तीति तस्य स्थास्नुतया कालान्तरेऽपि फलसाधनत्वाविरोधात् । ततश्चास्माद्यागादस्यापूर्वस्य सिद्धिर्व्यवधानेन फलसिद्धिरित्येतावदवगम्यते । नानन्तरं, व्यवहितं वेति । तच्चानपेक्षत्वं यत्नतः प्रतिपादितम् । यस्मात्प्रामाण्यापादकमनेनेदं सिध्यतीत्येतदर्थानपेक्षत्वम् । तच्च यत्नतस्सा-

किमिदं "(१)यदि पञ्चैव प्रमाणान्यभविष्यन्नि"ति ? इदमेवेदम्। ननूक्तमभावोऽपि प्रमाणाभाव इति। किमतो यद्येवम् ? एतदतो भवति–पञ्च प्रमाणानीति नोपपद्यते। शक्यते वा चतुर्भिर्नास्तीति वक्तुम् ? प्रमाणं तर्ह्यभावः। प्रमाणं वा प्रमाणाभाव इति शक्यते वक्तुम् ? अभावस्य च प्रामाण्ये प्रत्यक्षादिविषयापेक्षितो विषयः। अतः प्रमाणान्तरविषयपरिच्छेदकतयैवास्य लक्षणाभिधानम्। व्यवहारान्यत्वं तु संप्रतिपन्नमेव। व्यवहारसिद्ध्यर्थश्चायमुपन्यासः न

---

धितमपौरुषेयत्वप्रतिपादनेन।

किमिदं यदि पञ्चैव प्रमाणान्यभविष्यन्निति। शब्दातिरेकिप्रमाणपञ्चकोपन्यासो न युक्तः, प्रमाणपञ्चकाङ्गीकारात्। इदमेवेदमिति न पञ्च संख्यासङ्कीर्त्तनमनुपपन्नम्। पुनराक्षेपक आह—ननूक्तमभावोऽपि प्रमाणाभाव इति प्रमाणाभावोऽभाव इत्युक्तम्। तेन पञ्चप्रमाणनियमाच्छेदमुपपन्नमिति। सावष्टम्भेन समर्थयताऽऽह—किमतो यद्येवम्। आक्षेप्ताह एतदतो भवति। पञ्च प्रमाणानीति नोपपद्यते। समाधाताऽऽह—शक्यते वा चतुर्भिर्नास्तीति वक्तुम्? काका न शक्यत इत्याह—शब्दव्यतिरिक्तैश्चतुर्भिः प्रमाणैर्नास्तीति शब्दप्रयोगात्मको व्यवहारः प्रवर्त्तयितुं न शक्यते। आक्षेप्ताऽऽह—प्रमाणं तर्ह्यभावः। अत्र समाधाता ग्रन्थविरोधं तावदाह—प्रमाणं वा प्रमाणाभाव इति शक्यते वक्तुम् ? अत्रापि काका न शक्यते इत्युक्तम्। यदि प्रमाणान्तरमभावः स्यात्, प्रमाणाभाव इति कथं भाष्यकारेणोच्यते। युक्त्याऽप्यभावस्य प्रमाणान्तरत्वं नास्तीत्याह—अभावस्य प्रामाण्ये प्रत्यक्षादिविषयापेक्षितो विषयः। अस्यार्थः- यद्यभावः प्रमाणं तदा प्रत्यक्षादिपरिच्छिन्नातिरिक्तविषयान्तरानुपपत्तेः सापेक्षताऽभावस्य स्यात्। तथा हि—न तावत्प्रत्यक्षेण भूतले घटादिसङ्गाते व्यतिरिक्तं स्वरूपमेवावगम्यं नास्तीति प्रत्येतव्यम्, किन्तु दृश्येऽपि घटादौ स्वरूपमात्रेणोपलब्धे इति। तेन सापेक्षता विषयेऽप्यपरिच्छेदेऽभावस्य तद्व्यतिरिक्तविषयान्तराभावात्। यच्च स्वातन्त्र्येण विषयं नोपस्थापयति, न तत्प्रमाणान्तरम्। अतः प्रमाणान्तरप्रमितविषयावच्छेदकतयैवास्य लक्षणाभिधानं प्रमाणानां प्रत्यक्षादीनां विषयस्यावच्छेदकतयांऽसवेत्येवं निश्चायकतयाऽस्य लक्षणाभिधानम्, न पुनः प्रमाणान्तरतया। अनेन लक्षणग्रन्थविरोधः परिहृतः। सम्प्रत्याक्षेपं परिहरति—व्यवहारान्यत्वं तु सम्प्रतिपन्नमेव नास्तीति। व्यपदेशस्य नि शङ्कागमनादिलक्षणस्य च व्यवहारस्या

१. शा. भा. १३. पृ. ३०. ५

न भवन्ति, अयावद्भूतभावित्वादिति निरस्ते भूतधर्मत्वे आश्रयित्वाच्च सम्बन्धितायामवगतायां चित्तचैत्यानां च स्वयमाश्रयित्वादात्मगुणा ह्येत इति युक्तमेवोक्तम् । कथमनेनाऽनात्मन्यात्मबुद्धिश्शक्यते वक्तुम् ? तत्सुखादयोऽप्याश्रिततयोपलभ्यमाना अयावद्भूतभावितया च सम्यगात्मगुणतयोक्ताः ।

प्राणादयस्तावदयावद्भूतभावितया नैव शक्यन्ते वक्तुम् । चलनात्मका ह्यमी । वायोश्चायं धर्मः । सर्वत्र हि श्वसनादिषु चलनात्मकतैवोपलभ्यते । तस्मादयावद्भूतभावित्वमसिद्धम् । सेयमनात्मन्यात्मबुद्धिः । येऽपि सुखादय उपन्यस्ताः तेऽपि भूतविकारहेतुत्वात् भूतगुणा एवेति शक्यते वक्तुम् । न ह्यगुणो गुणिनं विकर्तुमुत्सहते । अवस्था हि विकारः । अवस्था चाऽवस्थान्तरोत्पत्तौ हेतुः । न

---

**वायिकारणशून्यानामनुत्पादादन्य**सम्बन्धितायामवगतायां चित्तस्य ज्ञानस्य चैत्यस्य **सुखादेश्च स्वयमप्युत्पत्तिमत्तयाऽऽश्रितत्वादाश्रयान्तरापेक्षत्वादाश्रयान्तरकल्पनायां स्थितायामनाश्रितनित्या**त्मगुणा ह्येत इति युक्तमेवोक्तम् । कथमनेन हेतुनाऽनात्मन्यात्मबुद्धिः शक्यते वक्तुम् ? तस्मात्सुखादयोऽप्याश्रिततयोपलभ्यमाना अयावद्भूतभावितया च **निरस्तभूताश्रयभावास्सम्यगेवा**त्मगुणतयोक्ता **वैशेषिकादिभिः** ।

अत्रोच्यते—प्राणादयस्तावदयावद्भूतभावितया नैव शक्यन्ते वक्तुम् । **किमिति ? उत्तरम्**—चलनात्मका ह्यमी **प्राणादयः** । वायोश्चायं धर्मश्चलनं **नाम । न च श्वसनादिषु ; प्राणादीनामचलनात्मकत्वात् । तदाह**—सर्वत्र हि श्वसनादिषु चलनात्मकतैवोपलभ्यते । तस्मादयावद्भूत(१)भावित्वमसिद्धं **प्राणादीनाम्** । सेयमनात्मनि **भूते** आत्मबुद्धिः ।

येऽपि सुखादय उपन्यस्ताः तेऽपि भूत(२)विककारहेतुत्वाद्भूतगुणा एवेति शक्यते वक्तुम् । **कुतः** ? न ह्यगुणो गुणिनं विकर्तुमुत्सहते । **यो यस्य गुणो न भवति न स तं गुणिनं विकर्त्तुमुत्सहते** । **कुतः ? तत्राह**—अवस्था हि विकारः । अवस्था **चाऽवस्थावतो**ऽवस्थान्तरोत्पत्तौ हेतुः । **समवायिकारणप्रत्यासन्नं ह्यसमवायिकारणं भवति । यथा तन्तुसंयोगः तन्तुसमवेतस्य पटस्योत्पत्तौ नि-**

---

१ भावित्वमसिद्धम् । इति० क० पु० । २. विकल्पहेतुत्वात् इति० क० पु० ।

चावस्थाऽवस्थावतोऽन्येति सिद्धं भूतगुणत्वम् ।

ननु चैवमेव वक्तव्यम्, किमित्युक्तं कामं सुखादय एव स्युरिति? अभ्युपगम्याऽप्ययमर्थो न सिद्ध्यतीत्यभिप्रायः। कामाभिधानात्। किं पुनरभ्युपगमे कारणम्? इदमस्ति कारणम्। अत्र केचित्प्रज्ञाभिमानिनो विप्रतिपन्नाः—केयमाश्रयाश्रयिता नाम? सङ्घातमात्रमेवेदमुपलभ्यते। न ह्येकत्रोपलब्ध्याऽऽश्रयिता भवति भूतानामिव परस्परम्। तस्मात्तेऽपि सुखादयः स्वतन्त्रा वाऽऽश्रयिणो वेत्यभ्युपगमात् प्रदर्शितम्।

अत्रापरे ब्रह्मविदः कर्तुरभिधानात्स्मृतेरिच्छातश्च महदादिभूतप-

---

मित्तम्। तेन सुखादयोऽपि भूतेषु समवायिषु नयनादिषु प्रसन्नतादिविकारं प्रत्यसमवायिकारणभूता भूतसमवायिन एवेति। तदाह—न चावस्थाऽवस्थावतोऽन्येति। अन्यता चात्रात्यन्तासम्बन्धताऽभिप्रेतेति सिद्धं भूतगुणत्वं सुखादीनाम्।

ननु चैवमेव वक्तव्यम् प्राणादिभिरनात्मन्यात्मबुद्धिर्भवतीत्येवमेव वक्तव्यम्। किमित्युक्तं कामं सुखादय एव स्युरिति। परिहरति—अभ्युपगम्याप्यभूतधर्मत्वमयमर्थ आत्मधर्मो न सिध्यतीत्यभिप्रायः। कथमभिप्रायोऽवगम्यत इत्यत्राह–कामाभिधानात्। "तावता च परितोष्यसी" ति कामाभिधानम्। किं पुनरभ्युपगमे कारणम्? भूतधर्मा न भवन्तीत्यभ्युपगमे किं कारणम्? निर्बीजोऽभ्युपगमो न भवतीति। इदमस्ति कारणम्। अत्र केचित्प्रज्ञाभिमानिनो बौद्धा विप्रतिपन्नाः—केयमाश्रयाश्रयिता नाम? क्षणिकत्वात् सर्वपदार्थानाम्। समवायिकारणं न भवतीति कारणस्य कार्येण सह सङ्गमाभावात्तयोर्यौगपद्यात्सङ्घातमात्रमेवेदमुपलभ्यते। न ह्येकत्रोपलब्ध्याऽऽश्रयाश्रयिता भवति भूतानामिव परस्परम्। तेन स्वतन्त्रा भवन्तीत्यभ्युपगमः। तस्मादित्युपसंहरति—तेऽपि सुखादयः स्वतन्त्रा भवन्त्वाश्रयाश्रयिणो वा। सर्वथा आत्मसाधका न भवन्तीत्यभ्युपगमात् प्रदर्शितम्।

एवं तावदभ्युपगम्यापि प्राणादिसुखादीनामभूतधर्मत्वं नात्मसाधकत्वमित्युपसंहृतम्। संप्रति प्राणादिषु सुखादिषु च निराकृतेषु केन विशेषेण जानातीतिशब्दप्रयोग इच्छा स्मृतिश्चोपन्यस्ता इतीमामाशङ्कामपनेतुमाह—अत्रापरे ब्रह्मविदः कर्तुरभिधानात् स्मृतेरिच्छातश्च महदादिभूतपर्यन्ताच्छरीराद्व्यतिरिक्तमात्मानमुपलभामह इति प्रतिपन्नाः। एषा हि सांख्यानां

यन्ताच्छरीरादतिरिक्तमात्मानमुपलभापह इति प्रतिपन्नाः । कथं पुनरभिधानादेर्हेतुतोक्ता तैः ? ज्ञानात्मकं ह्यन्तःकरणं महदादि । ज्ञेयं च कार्यम् । अतः कार्यकारणव्यतिरेकी जानातीति शक्यते वक्तुम् । ज्ञानेन किमपि ज्ञेयम्; भावयेदिति हि प्रत्ययः । तस्मात्सिद्ध आत्मा कर्तृभूतः ।

नन्वसौ निष्क्रिय इत्यभ्युपगतम् । प्रत्ययस्य च कर्तरि जानातीत्ययं प्रत्ययः । येषां तावदात्मनि ज्ञानं समवैति तेषां तत्कारण-

---

प्रक्रिया-प्रकृतिर्महदादिरूपेण विपरिणमते । तथा हि-प्रकृतिर्महच्छब्द-वाच्यबुद्धिरूपतया विपरिणमते । महतोऽप्ययंहंकारो विपरिणामः। अहङ्कारस्य पञ्चतन्मात्राणि गन्धरसरूपस्पर्शशब्दात्मकानि । तथैकादशेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि-चक्षुस्त्वग्रसनश्रवणनासिकात्मकानि । कर्मेन्द्रियाणि च उत्सर्गानन्दादानगत्यालापकारणानि पायूपस्थहस्तपादवाग्रूपाणि । साधारणं च मनः । तन्मात्राणि च पृथिव्यादीनि भूतानि । यथाक्रमं पञ्चानामपि पृथिवी, चतुर्णामापः, त्रयाणां तेजो, द्वयोर्वायु, रेकस्य गगनमिति । सुखदुःखमोहात्मिका प्रकृतिरेवंविधपरिणामा । तद्व्यतिरिक्तः पुरुषः । तदाहुः—

(१)"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" ॥ इति ।

शरीरशब्देन प्राकृतः सर्वोऽयं प्रपञ्च उक्तः ।

कथं पुनरभिधानादेर्हेतुतोक्ता तैः ? **एवमुक्ता**—ज्ञानात्मकं ह्यन्तःकरणं महदादि । **महदहङ्कारमनांसि(२) त्रीण्यन्तर्व्यवस्थितानि ज्ञानशब्दवाच्यानि । ज्ञायतेऽनेनेति व्युत्पत्त्या कारणानि** । ज्ञेयं च कार्यं **कर्मैवेत्यर्थः** । अतः कार्यकारणव्यतिरिक्तः **कर्त्ता** जानातीति शक्यते वक्तुम् । ज्ञानेन **करणेन** किमपि **ज्ञेयं** भावयेदिति हि प्रत्ययः **यस्मात् जानाति शब्दादुत्पद्यते, अतः कारणकर्मव्यतिरिक्तकर्तृसिद्धिः** । तस्मात्सिद्ध आत्मा कर्तृभूतः ।

नन्वसौ निष्क्रिय (३)इत्युक्तम् । प्रत्ययस्य हि कर्त्तरि जानातीति प्रत्ययः । **उत्तरम्**- येषां **तावद्वैशेषिकाणां** आत्मनि ज्ञानं समवैति **समवायसम्बन्धेन सम्बध्यत इति दर्शनं** तेषां **समवायिकारणवत्वात् समवायिनो ज्ञानस्य कार्यस्य**

---

१. सां० का. ४. ३. । २. प्राण्यन्तः इति क० पु० । अत्र मूलव्याख्ययोः पाठभेदः ।

त्वात् प्रत्ययकर्तृताऽपि सिद्धैव। येषां पुनर्बुद्धिधर्मतयैव प्रसिद्धा ज्ञानादयः तेषामपि भोक्तृतयाऽयं हेतुः।

कथमिच्छात उपलब्धिरुक्ता ? एवमुक्ता–अनुभूतपूर्वविषयो ह्यभिलाष इच्छा। न च क्षणिकेष्वनुभूतपूर्वाभिमान उपपद्यते।

ननु नहि दृष्टे ऽनुपपन्नं नाम। दृष्टे ह्यनुपपत्तिर्नास्ति। न पुनर्दृष्टस्यान्यथाभावो दृष्टत्वान्नानुपपन्न इति शक्यते वक्तुम्। दृष्टश्चाय-

---

कारणत्वादात्मनः प्रत्ययकर्तृताऽपि सिद्धैव। येषां पुनः सांख्यानां बुद्धिधर्मतयैव ज्ञानादयो ज्ञानधर्मवैराग्यादयः प्रसिद्धाः तेषां यद्यपि साक्षादात्मनो ज्ञानोत्पत्तौ कारणता नास्ति, तथापि भोक्तृतायां हेतुः। आत्मनो हि भोक्तृतया बुद्धिर्ज्ञानरूपेण भोग्यतया विपरिणमते। तदाहुः"—वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं प्रवर्त्तते तद्वदव्यक्त"मिति। तेन ज्ञानोत्पत्तौ निमित्तभावादस्ति तत्राऽऽत्मनः कर्तृत्वमिति।

कथमिच्छात उपलब्धिरुक्ता ? यावता विषयज्ञानादेव कार्यभूतेच्छोपपद्यत इति ज्ञानव्यतिरिक्तं स्वकारणमिच्छाऽवगमयितुं न शक्नोति (१) उत्तरम्–एवमुक्ता–भुक्तपूर्वविषयो ह्यभिलाषः इच्छा। भुक्तपूर्वः यो विषयः तद्विषयो ह्यभिलाष इच्छोच्यते। भवत्वेवम्, तथापि किमित्याह–न च क्षणिकेषु स्कन्धेषु(२) भुक्तपूर्वताभिमान उपपद्यते। यस्य बौद्धस्य दर्शने समवायिकारणं नाम नास्ति न तस्य क्षणिकेषु स्कन्धेषु विज्ञानरूपवेदनासंस्कारसंज्ञकेषु भुक्तपूर्वा बुद्धिरुत्पद्यते। पूर्वभोक्तुरधुनातनभोक्तुश्चान्यत्वात्। तस्मादस्ति पूर्वोत्तरकालवर्ती भोगयोगी स्कन्धातिरेकी पुरुष इति।

ननु न हि दृष्टेऽनुपपन्नं नाम। तेन क्षणिकेष्वपि स्कन्धेष्वनुपपत्तिरतआह—दृष्टे ह्यनुपपत्तिर्नास्ति। न पुनर्दृष्टस्यान्यथाभावो दृष्टत्वान्नानुपपन्न इति शक्यते वक्तुम्। अस्यार्थः–न वयमिच्छालक्षणकार्यान्यथानुपपत्त्याऽऽत्मानं कल्पयामः। किन्तु उभयभोगसम्बन्ध्यनुभूयत एवेति वदामः। यत्तु खलु दृष्टं तत्रानुपपन्नं नास्ति। दृष्टस्य पुनरुभयभोगसम्बन्धिनोऽन्यथाभा-

---

१. अत्र मूलपुस्तके भुक्तपदस्थानेऽनुभूतशब्दोऽस्ति। व्याख्यापुस्तकयोरुभयत्रापि प्रकरणेऽस्मिन् भुक्तशब्दपाठमङ्गीकृत्यैव व्याख्या कृतेति भाति।

२. नास्ति ख० पु०।

मन्यथाभावः। तस्मादिच्छया कार्यकारणादन्यमुपलभामह इत्युक्तम्।

तथा स्मृतेः। स्मृतिरप्यनुभूतविषयैव। न क्षणिकेऽर्थेऽयमनुभूतानुभव उपपद्यते। न हि दृष्टेऽनुपपन्नं नाम। कथं तर्हि भाष्यकारेणोक्तं-(१)"अनुपपन्नमिति नः क्व संप्रत्ययः" इति। श्रूयतां यथोक्तम्। किमनुभवस्यानुपपन्नत्वम्? अनुभव एव यस्यानुभूयते का तस्याऽनुभूयमानापेक्षा? तस्मात्सुष्ठूच्यते–"अनुपपन्नमिति नः क्व सम्प्रत्यय" इति। (२)तस्माच्छून्याः स्कन्धा" इत्युपसंहृतम्।

तथा ब्राह्मणमिममेवार्थमनुवदति(३) "विज्ञानघन एवैतेभ्यो

---

वः क्षणिकत्वमभिधीयमानं दृष्टत्वेनाऽनुपपन्नं न भवतीति शक्यते वक्तुम्। तस्मादिच्छया कार्यकारणादन्यमुपलभामह इति।

तथा स्मृतेरप्यात्मासिद्धिः। स्मृतिरप्यनुभूतविषयैव। न चानुभवितरि क्षणिकेऽनुभूतानुभव उपपद्यत इति। ननु नेदमुपपद्यते अनुभूतं पुनरनुभवति कश्चिदिति। क्षणिकत्वादनुभवितुः। तत्राह—न हि दृष्टेऽनुपपन्नं नाम। दृष्टेऽनुभूतानुभवितर्यनुपपन्नता नास्ति। नावश्यं सर्वेण क्षणिकेन भवितव्यमिति यावत्। कथं तर्हि भाष्यकारेणानुपपन्नमिति नः क्व संप्रत्यय इत्युक्तम्। यदि यथोक्तेन न्यायेन कार्यकारणव्यतिरेकेणात्मना विना नुपपत्तिः तदा कथं भाष्यकारेणानुपपन्नमिति नः क्व सम्प्रत्यय इत्यादिना ग्रन्थेनानुपपन्नता नास्तीत्युक्तम्? श्रूयतां यथोक्तम्—किमनुभवस्यानुपपन्नत्वं विनापि स्थिरेणात्मना? नन्वनुभूयमानेन स्थिरेणार्थेन विना स्थिरानुभव एव यथा नोपपद्यते तथा कर्त्रा विना कर्त्रनुभवः। तत्राह—अनुभव एव यस्यानुभूयते बौद्धस्य दर्शने का तस्याऽनुभूयमानापेक्षा। विज्ञानवादे हि संविदेव तेन तेन रूपेणानुभूयते, न व्यतिरिक्तं किञ्चित्। तस्मात्सुष्ठु शोभनमुच्यतेऽनुपपन्नमिति नः क्व सम्प्रत्यय इति। तस्माच्छून्याः स्कन्धा इत्युपसंहृतम्। यस्मादेभिर्हेतुभिरात्मा न सिध्यति तस्मादात्मनः शून्यास्स्कन्धा इत्युपसंहृतम्। तथा च ब्राह्मणमप्यमुमेवार्थमनुवदति 'विज्ञानघन' इत्यादि।

१. शा. भा. पृ. १५, पं. १६.

२. शा. भा. पृ. १५. पं. ३१. स्कन्धघनाः इति मुद्रितभाष्यपुस्तकेषु पाठः।

३. बृहदारण्यको. ४. ६. १४.

भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ती"ति । तस्मादनात्मन्यात्मबुद्धिहेतवोऽमी निराकरणीयतयोपन्यस्ता भगवता भाष्यकारेण ।

(१)"अत्रोच्यते—नैतदेवम् । अन्येद्युर्दृष्टः परद्युरहमिदमदर्शमिति भवति प्रत्ययः । प्रत्यगात्मनि चैतद्भवति, न परत्र । अपरो ह्यसौ यो ह्यन्येद्युर्दृष्टवान् । तस्मान्न व्यतिरिक्तोऽन्योऽस्ति यत्रायमहंशब्दः" । किं पुनः कारणमत्रानुमाननिराकरणे ? असम्भवादिति ब्रूमः । प्रत्यक्षदृष्टेऽनुमानं न संभवतीति साहसमिदम् । स्वयमेव वक्ष्यति(२) "नूनमसावनित्यान्नित्यं पश्यती"ति । तस्मान्नात्रासम्भवाभिप्रायो वर्णयितुं शक्यते ।

अथैतन्मनसि वर्त्तते—परोक्षमनुमानं न संभवतीति । प्रत्यक्षोपन्यासस्तर्हि किमर्थः ? न ह्यसति प्रत्यक्षेऽनुमानमुपपद्यत इति चेत्-

---

**यस्माद्विज्ञानचैतन्यमनन्तरोक्तं परित्यज्य भूतचैतन्यमुपसंह्रियते** तस्मादनात्मन्यात्मबुद्धिहेतवो ह्यमी निराकरणीयतयोपन्यस्ता भगवता भाष्यकारेणा**भ्युपगम्यवादेनेति ज्ञायतेऽत एव भाष्यालिङ्गात्** ।

"अत्रोच्यते—नैतदेव"**मित्यादिभाष्यमाक्षेप्तुं पठितमाक्षिपति**—किं पुनः कारणमत्रा**ऽऽत्मसिद्धौ परकीयानुमान**निराकरणे ? असम्भवादिति ब्रूमः । **प्रत्यक्षेण प्रतीतेऽर्थेऽनुमानं न सम्भवतीत्यनुमानं निरस्यन् दूषयति**—प्रत्यक्षदृष्टेऽर्थेऽनुमानं न सम्भवतीति साहसमिदम् । **प्रत्यक्षदृष्टेऽप्यर्थेऽनुमानसम्भवोऽनुमानवादस्थान एवोक्तः । सम्बन्धग्रहणसमयावगतेऽप्यनुमानदर्शनात्** । स्वयमेव च वक्ष्यति "नूनमसावनित्यान्नित्यं पश्यती" ति । **तेनानुमानं स्वयमेव भाष्यकारो वक्ष्यति** । तस्मान्नात्रा**नुमाना**सम्भवाभिप्रायो वर्णयितुं शक्यते ।

अथैतन्मनसि **भाष्यकारस्य विपरिवर्त्तते**—परोक्षमनुमानं न सम्भवति **पूर्वोक्ताद्दोषात् । तेन तन्निराकृतमिति** । प्रत्यक्षोपन्यासस्तर्हि किमर्थः ? **स्वकीयं तर्ह्यनुमानमदुष्टमिति तदेव वक्तव्यं, किमिति प्रत्यक्षमुपन्यस्तम् ? प्रत्यक्षोपन्यासप्रयोजनमाशङ्कते**—न ह्यसति प्रत्यक्षेऽनुमानमुपपद्यत इति चेदिति ।

---

१. शा. भा. पृ. १६ पं. २. २. शा. भा. पृ. १७. पं. १४.

किमिदमसति प्रत्यक्ष इति ? अस्ति चानुमानं प्रत्यक्षव्यापारनिरपेक्षम् । न ब्रूमो न ह्यनुमानं प्रत्यक्षव्यापारनिरपेक्षं नास्तीति । किं तर्हि ? स्वयमात्मानं प्रत्यक्षेणानुपलभ्य नेदमनुमानं प्रवर्तत इति । उपलब्धश्चेत् स्वयम्, किमनुमानेन ? स्वपरिज्ञानबुद्धिर्हि श्रेयसे । तदर्थश्चायमारम्भः । अथाऽयमुपदेशः परार्थ एव प्रवृत्तः, आत्मसंविद इदानीं क उपयोगः ? अथ परस्यापि प्रतिपत्तौ प्रत्यक्षमेव प्रमाणमिति मतम् , अनुमानोपन्यासो निरर्थकः ।

यदप्युच्यते- यत्रायमहंशब्द इति, पुनश्चाऽपह्नूयते न वयमिहमितीमं शब्दं प्रयुज्यमानमस्मिन्नर्थे हेतुत्वेन व्यपादिशाम इति । तदप्यबुद्धिमत इवाभिधानं प्रतिभाति । किमपह्नवीयस्योपन्यासे प्रयोज-

---

अनुमानसामग्री भूतत्वेन प्रत्यक्षमुपन्यस्तमिति । निराकरोति—किमिदमसति प्रत्यक्षे इति । अस्ति च यस्मादनुमानं प्रत्यक्षव्यापारनिरपेक्षं क्रियादिषु । अस्ति चेति चशब्दो यस्मादर्थे । पुनराशङ्कते-न ब्रूमोऽनुमानं सर्वत्र प्रत्यक्षव्यापारनिरपेक्षमेव नास्तीति । किं तर्हि ? स्वयमात्मानं प्रत्यक्षेणानुपलभ्य नेदमनुमानं प्रवर्त्तत इति । स्वात्मनि हि स्थिरात्मनि विशिष्टचेष्टादर्शनेन परत्रापि तच्चेष्टादर्शनात् स्थिरात्मानुमानोत्पत्तिः । नान्यथा सम्बन्धग्रहणाभावादिति सम्बन्धग्राहकतया प्रत्यक्षोपन्यासः । निराकरोति-उपलब्धश्चेत् प्रत्यक्षेण किमनुमानेन परात्मविषयेण ? यस्मात्स्वस्याऽऽत्मनः परिज्ञानं यत्तस्यैव बुद्धिः प्रामाणिकत्वं श्रेयसे । स्वात्मानं स्थिरं ज्ञात्वा धर्मानुष्ठाने यतमानो धर्मादेव श्रेयो लभते । तदाहुस्स्मृतिकाराः—

"सत्यं यज्ञस्तपो दानमेतद्धर्मस्य साधनम् ।
धर्मात्सुखं च ज्ञानं च धर्मान्मोक्षोऽधिगम्यते" इति ॥

तदर्थश्चायं श्रेयोर्थश्चायमारम्भः । अथाऽयमुपदेशः परार्थ एव प्रवृत्तः पर एवात्मसत्तां बोधयितव्य इति, आत्मसंविद इदानीं क उपयोगः ? प्रत्यक्षं नह्यात्मसंविदर्थमनुपन्यसनीयम् । अथ परस्यापि प्रतिपत्तौ प्रत्यक्षमेव प्रमाणमिति मतम् , तेन प्रत्यक्षोपन्यासः, तर्ह्यनुमानोपन्यासोऽनर्थकः ।

यदप्युच्यते- यत्रायमहं शब्द इति, पुनश्चाऽपह्नूयते-न वयमहमितीमं शब्दं प्रयुज्यमानमस्मिन्नर्थे हेतुत्वेन व्यपदिशाम इति, तदप्यबुद्धिमत इवाभिधानमिति प्रतिभाति ।

नमु ? इदमपरमयुक्तम्–(१)"यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य तन्निदर्श्यतामिदं तदीदृशं चेति" पृष्ठे 'अत्रोच्यते' इत्येवमाद्युत्तरं नोपपद्यते। अत्र विज्ञानाग्रहणे तद्ग्रहणं नास्तीति चोदितम्। स्वसंवेद्यतया कथमस्य निराकरणम्? न हि स्वसंवेद्यत्वनिबन्धनं विज्ञानग्रहणपूर्वकं ग्रहणं वस्तुनः।

अथायमभिप्रायः—स्वसंविन्न पृथक्तया व्यपदेष्टुं शक्यते परस्मा इति। अत्यल्पमिदमुच्यते। अपृथक्तया वा कथं परेणाऽसंविन्नोऽर्थो व्यपदेष्टुं शक्यते परस्मै? तस्मादिदमप्यनालोचनापूर्वकमिव प्रतिभाति। प्रत्युक्तस्य चोपन्यासे किं प्रयोजनमिति नैव ज्ञायते। न चायमर्थः परित्यक्त एव, विज्ञानग्रहणोपसंहारात्।

---

किमपक्षर्वायस्याहं**शब्दस्योप**न्यासे प्रयोजनम्? इदमपरं **नोपपद्यते इत्याह**–यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य तन्निदर्श्यतामिदं तदीदृशं चेति। **प्रत्यभिज्ञानेन स्थिरस्याऽऽत्मनः क्षणिकज्ञानव्यतिरेकिणः सिद्धत्वात्। अस्यापि चोद्यस्य** "अत्रोच्यते" इत्याद्युत्तरं नोपपद्यते। **कथं नोपपद्यते?** अत्र हि विज्ञानाग्रहणे सत्यात्मनो ग्रहणं नास्तीति चोदितम्। स्वसंवेद्यतया कथमस्य निराकरणम्? **यदि स्वसंवेद्य आत्मा किमेतावता चोद्यमिदं निराकृतं भवति?**

**अथायमभिप्रायः—विज्ञानाऽग्रहणे यदात्मनोऽग्रहणं तत्तादात्म्यनिबन्धनं न भवति, किन्तु स्वसंवेद्यत्वनिबन्धनमित्यन्यथा सिद्धिमुद्भावयितुं स्वसंवेद्यत्वमुक्तमिति। तन्न;** न हि स्वसंवेद्यत्वनिबन्धनं विज्ञानग्रहणपूर्वकं ग्रहणं **कस्य चिद्वस्तुनो दृष्टं येनान्यथा सिद्धिः स्यात्।**

अथायमभिप्रायः—**विज्ञानव्यतिरिक्त एवात्मा प्रतीयते, किन्तु स्वसंवेद्यतया** स्वसंविन्न पृथक्तया व्यपदेष्टुं शक्यते परस्मा इति। अत्यल्पमिदमुच्यते। अपृथक्तया **वा** परेण संविन्नोऽर्थोव्यपदेष्टुं परस्मै कथं शक्यते। तस्मादिदमप्यनालोचनापूर्वकमिव प्रतिभाति। प्रत्युक्तस्य चोपन्यासे किं प्रयोजनमिति न ज्ञायते। **प्रत्युक्तोऽयमर्थः–विज्ञानमगृहीत्वा विज्ञेयं नैव ग्रहीतुं शक्यत इति। तेन विज्ञानग्रहण एवात्मा गृह्यत इति विज्ञानवादनिराकरणपर्वण्येतदुक्तमेव घटादिवत्।** न चायमर्थः परित्यक्त एव। **विज्ञानग्रहणपुरःसरो विज्ञेय-**

---

१. शा. भा. पृ. १६. पं. २१.

अथाऽयमभिप्रायः-विज्ञानग्रहणपक्षेऽप्यात्मनः प्रत्यक्षत्वं न शक्यतेऽपह्नोतुमिति । रूपान्तरं नोपलभामह इत्यनिवारितैवेयं युक्तिः । न च कश्चिद्विशेषोऽभिहितः ।

उपमानमपि नैयायिकोक्तमभिदधता स्वलक्षणाभिधानविरुद्धमुक्तम् । न चाऽ'हं गच्छामी'ति चोद्यस्य विस्पष्टं किञ्चिदुत्तरमुपलभ्यते । ब्रह्मविद्विरुद्धं चैतत्-यदुताऽहम्प्रत्ययप्रमेयताऽऽत्मनः । मूर्द्धाभिषिक्तमिदमनात्मन्यात्मज्ञानमित्युदाहृतम्-यदुताऽहंकृतिर्ममकारश्चेति । निर्मुक्ताहंकारममकारमात्मज्ञानमात्मविदो मन्यन्ते । तस्माद्-

---

बोध इति सिद्धान्तेऽप्ययमर्थो न परित्यक्तः, विज्ञानग्रहणेनोपसंहारात् । (१)"तस्माद्विज्ञानं प्रत्याख्याय न कस्यचिद्रूपं दर्शयितुं शक्य"मित्यनेन भाष्येण विज्ञानग्रहणेनोपसंहारः कृतः । अतो नाऽयमर्थो निराकृतास्सिद्धान्तेऽपि।

अथाऽभ्युपगम्य वादोऽयम्-यद्यपि विज्ञानं प्रत्यक्षग्राह्यं तथापि तद्व्यतिरिक्तात्मसिद्धिरुच्यते, तदाह--अथायमभिप्रायः--विज्ञानग्रहणपक्षेऽप्यात्मनः प्रत्यक्षत्वं न शक्यतेऽपह्नोतुमिति, तदयुक्तम्, रूपान्तरं नोपलभामह(२) इत्यनिवारितैवेयं युक्तिः । यदि विज्ञानमपि प्रत्यक्षं स्यात् तदा तस्याऽपि रूपेण भवितव्यम् । एकं चेदं रूपमुपलभ्यत इति विज्ञानमेव साकारं स्यात् । अनुमेये तु विज्ञाने रूपान्तराभावो न दोषः । प्रत्यक्षज्ञानाभ्युपगमे तु ज्ञेयाकारापह्नवो न शक्यते वारयितुम् । न च कश्चिद्विशेषोऽभिहितः येन प्रत्यक्षज्ञानपक्षेऽपि बाह्यार्थसिद्धिः स्यात् ।

'उपमानाद्वोपदिश्यत' इत्यत्र भाष्ये उपमानमपि नैयायिकोक्तमभिदधता (३)"यादृशं भवान् स्वकमात्मानं पश्यति अनेनोपमानेनाऽवगच्छाऽहमपि तादृशमेव पश्यामी"त्यनेन ग्रन्थेन स्वलक्षणाभिधानविरुद्धमुक्तम् । अत्र भाष्ये वाक्यजमेव ज्ञानमुपमानमुक्तम् । तच्च नैयायिकानां सम्मतम्, न भाष्यकारस्य । न चाऽहं गच्छामीति गन्तृशरीरालम्बन एवाहंप्रत्यय इत्यस्य चोद्यस्य स्फुटमुत्तरं किञ्चिदुपलभ्यते । भूतचैतन्यनिराकरणमपि न कृतमित्यर्थः । ब्रह्मविद्विरुद्धं चैतत्-यदुताऽहंप्रत्ययप्रमेयताऽऽत्मनः । मूर्द्धाभिषिक्तमिदं प्रधानमिदमनात्मन्यात्मज्ञानमित्युदाहृतं ब्रह्मविद्भिः । अनात्मभूतशरीरविषय एवाहंप्रत्यय इत्यर्थः । यदुताहङ्कृतिर्ममकारश्चेति निर्मुक्ताहंकारममकारं ह्यात्मज्ञानमित्यात्मविदो

---

१. शा. भा. पृ. १६. २६. २. अनिराकृतैवेति व्याख्यापुस्तके ।

३. शा. भा. १७. १६.

नात्मज्ञानविलसितमिदमहंप्रत्ययप्रमेय आत्मेति !

अत्रोच्यते-अन्येद्युर्दृष्टेऽपरेद्युरहमिदमदर्शमिति भवति प्रत्ययः। प्रत्यगात्मनि चैतद्भवति, न परत्र। किमिदमहमिदमदर्शमिति ? यदि तावत्प्रत्यभिज्ञा, क्षणिकत्वस्यैतदुत्तरम् , न नैरात्म्यस्य। न चात्र क्षणिकत्वनिराकरणमभिप्रेतम्। किं तर्हि? बुद्धीन्द्रियशरीरव्यतिरिक्तस्याऽऽत्मनः सद्भावप्रतिपत्तिः।

न च क्षणिकतया नैरात्म्यमुक्तं परैः। किं तर्हि? स्कन्धातिरिक्तानुपलब्धेः। नित्यताया हि क्षणिकत्वं विरोधि, नाऽऽत्मसद्भावस्य। तस्य चाऽत्र सद्भावः परैराक्षिप्तः प्रतिपाद्यते। न पुनरात्मनो विद्यमानस्य नित्यताक्षेपं प्रति समाधिः। न चा-

---

मन्यन्ते। तस्मादनात्मज्ञानविलसितमिदमहंप्रत्ययप्रमेय आत्मेति।

**इदानीं समाधत्ते**-अत्रोच्यते(१)-अन्येद्युर्दृष्टेऽपरेद्युरहमिदमदर्शमिति ज्ञानं भवति। प्रत्यगात्मनि चैतद्भवति, न परत्रेति। **समाधातुं भाष्ये पठित एव पुनरपि गलग्रहणेनाऽऽक्षेपः**-किमिदमहमिदमदर्शमिति ? यदि तावत्प्रत्यभिज्ञा-**पूर्वं दृष्टं सम्प्रति प्रत्यभिज्ञायत इति यदि तावदनेन ग्रन्थेनोच्यते**। क्षणिकत्वस्येदमुत्तरम् , न नैरात्म्यस्य। **तेनाहंप्रत्ययमात्रमेवोपन्यसनीयं न प्रत्यभिज्ञानम्**। न चाऽत्र क्षणिकत्वनिराकरणमभिप्रेतम्। किं तर्हि ? बुद्धीन्द्रियशरीरव्यतिरिक्तस्याऽऽत्मनः सद्भावप्रतिपत्ति**रभिप्रेता**।

**ननु च क्षणिकात् ज्ञानात् ज्ञातुः स्थिरत्वेनैव भेदसिद्धिरिति युक्तः प्रत्यभिज्ञोपन्यासः। नैवम् ; अस्माभिरन्नेदप्रत्ययाहंप्रत्ययविषयत्वेनापि भेदसिद्धेः। अन्यथा स्थिराच्छरीरतः कथं भेदसिद्धिः ? अथ सिद्धोऽपि बुद्धीन्द्रियशरीरव्यतिरिक्त आत्मा परैः क्षणिकत्वेन निराक्रियत इत्यात्मसिद्ध्यर्थं स्थैर्योपन्यासः, तत्राऽऽह**-न च क्षणिकतया नैरात्म्यं परैरुक्तम्। किं तर्हि ? स्कन्धातिरिक्तानुपलब्धेः। क्षणिकत्वं हि नित्यताया विरोधि, नाऽऽत्मसद्भावस्य। **ननु किमित्यत्र नित्यतैवात्मनो न प्रतिपाद्यत इत्यत्राह**-आत्मनश्च सद्भावः परैराक्षिप्तोऽत्र प्रतिपाद्येत, न पुनरात्मनो विद्यमानस्य **नित्यताक्षेपं प्रति समाधिः प्रतिपाद्यते**।

**ननु यद्यन्यो ह्यः; अन्योऽद्य चोपलब्धा स्यात् तदा तयोः परस्परं परत्वादात्मत्वानुपपत्तेः नैरात्म्यमेव स्यात् इत्यन्यत्वनिराकरणाय प्रत्यभिज्ञोपन्यासः। तत्राऽऽह**-न चान्य उपलब्धा ह्योऽद्य चान्य इत्येतावता नैरात्म्यम्।

---

१. शा. भा. प. १६. २.

न्य उपलब्धा ह्यः, अत्र चान्य इत्येतावता नैरात्म्यम् । तस्मा-दहंप्रत्ययग्राह्यः कार्यकरणव्यतिरिक्त आत्माऽस्तीत्येतावद्वक्तव्यम् । ह्योऽद्येत्यतिरिच्यते ।

अथेयं बुद्धिः—क्षणिकत्वात्साधितेऽप्यस्तित्व आत्मतैव हीयत इति । कथं वाचा युक्तिः ? स्कन्धानां स्कन्धता किमिति न हीयते ? भोक्तृत्वं ह्यात्मनः स्वरूपम्, भोग्यता च स्कन्धानाम्। यथा क्षणिकत्वे-ऽपि भोग्यता नापनेतुं शक्यते स्कन्धानाम्, तथा भोक्तृत्वमप्या-त्मनः । तदिदं क्षपाप्रयाणकम् ।

अनात्मज्ञो भवान्, यस्यैवंविधानि चोद्यानि । वेत्सि भोः किमिति क्षणिकता स्कन्धानामुक्तेति । किमिति चोक्ता ? भोक्तुर-भावात् । भोक्तुरभावे क्षणिकता स्कन्धानामिति किमियं राजाज्ञा?

---

यद्यपि परापेक्षयाऽनात्मता तथापि सर्वस्योपलब्धुः स्वापेक्षयाऽऽत्म-तैव । तस्मादहंप्रत्ययग्राह्यः कार्यकरणव्यतिरिक्त आत्माऽस्तीत्येतावद्वक्तव्यम् । ह्योऽद्य चेत्यतिरिच्यते ।

अथेयं बुद्धिः—साधितेऽप्यस्तित्वे क्षणिकत्वादात्मतैव हीयत इति । भोक्तृता ह्यात्म-ता(१)क्षणिकस्य भोक्तृतैव हीयत इति । कथं युक्तिः क्षणिकत्वं नाम ? यदि चेयं युक्तिः स्यात् तदा स्कन्धानां क्षणिकानां स्कन्धतैव भोग्यत्वरूपा किमिति न हीयत इति । तदिदं विवृणोति—भोक्तृत्वं ह्यात्मनः स्वरूपम्। भोग्यता च स्कन्धानाम् । यथा क्षणिकत्वेऽपि भोग्यताऽपनेतुं न शक्यते स्कन्धानां, तथा भोक्तृ-त्वमप्यात्मनः । एवमाक्षिप्योपसंहरति—तदिदं भाष्यं क्षपाप्रयाणकम्, व्या-मोहजनकत्वात् ।

समाधानमुपक्रमते—अनात्मज्ञो भवान्, यस्यैवंविधानि चोद्यानि । यो हि जा-नात्यात्मस्वरूपं—भोक्ता कर्त्ता चात्मेति, स एवं न चोदयति । तस्मात्प्र-त्यभिज्ञानेन सिद्धे स्थिरात्मनि कादाचित्ककार्यान्यथानुपपत्त्या क्रियाऽनु-मीयेत। सक्रियस्य च कर्तृत्वं भोक्तृत्वं च स्यात्, न निष्क्रियस्य। तदिदं दर्शयितुमाह—वेत्सि भोश्चोदक ! त्वं—किमिति स्कन्धानां क्षणिकतोक्तेति । किमिति क-थमित्यर्थः । किमिति चोक्तेति चोदकः पृच्छति। समाधानवाद्याह—भोक्तुरभा-वादिति ।पुनः पृच्छति—भोक्तुरभावे क्षणिकत्वमिति किमियं राजाज्ञेति । समर्थयिताऽऽह

---

१. अत्र सा भोक्तृतैव क्षणिकस्य हीयत इति कथं युक्तिः । इति ख० पु० ।

नेयं राजाज्ञा, नयाज्ञा ह्येषा। कथम्? भोक्तुः सद्भावे कार्यकरणं क्षणिकमिति नास्ति नः प्रमाणम्। कस्मात्? अनुमेयं हि कारणं कार्यतः। अतश्च क्रियासिद्धिः। क्रियाफलकलापनिबन्धनोऽयं क्षणिकत्ववादः। लुप्तक्रियस्य च कर्तृत्वभोक्तृत्वाक्षेपः। तदाक्षेपे चाऽऽत्माक्षेपः। परिणतिस्वभावमात्रमिदं कार्यकारणमिति कल्पनम्, कर्ता भोक्तेति च। तस्मादहंप्रत्ययालम्बनमात्रसिद्धौ सिद्धेऽपि बुद्धीन्द्रियशरीरव्यतिरेकिणि कर्तृत्वे भोक्तृतेति (?) मन्वानः सप्रत्य-

---

नेयं राजाज्ञा, नयाज्ञा ह्येषेति। कथमिति पुनः पृच्छति। उत्तरम्–भोक्तृसद्भावे ह्यङ्गी क्रियमाणे कार्यकरणं क्षणिकमिति नास्ति नः प्रमाणम्। यदि यावद्भोक्ताङ्गीक्रियते तदा स्थिरं द्रव्यमङ्गीकरणीयम्। स्थिरद्रव्याङ्गीकारे च क्षणिकत्वे प्रमाणं नास्ति। कस्मात्पुनरेवमिति पृच्छति–कस्मादिति। उत्तरम्–अनुमेयं हि कारणं कार्यतः। अतश्च क्रियासिद्धिरिति। अस्यार्थः—यो हि भोक्तारमभ्युपगच्छति अभ्युपगच्छत्यसौ भुक्तिरूपां क्रियाम्। तस्य(१)कदाचित्तु कार्योदयाच्च कारणानुमान(२)प्रस्तुते ततोऽनुमानात्क्रियासिद्धिर्भवति। क्रिया च क्षणिकस्य स्यादाफलानिष्पत्तेरित्यनुपपन्नम्। तस्माद्भोक्तारमभ्युपगच्छद्भिर्भुक्तिरूपां क्रियामङ्गीकुर्वाणैः स्थिरं द्रव्यमङ्गीकरणीयम्। स्थिरद्रव्याङ्गीकारे च क्षणिकत्वे नास्ति प्रमाणम्। कुतः? (३)अत्राऽऽह–क्रियाफलकलाप(४)निबन्धनोऽयं क्षणिकत्ववादः। क्रियायां ह्यसत्यां कादाचित्कं कार्यमागन्तुकस्वभावं कारणमनुमापयत् द्रव्यमेव क्षणिकत्वं नयति। क्रियायां त्वङ्गीकृतायां तत एव कादाचित्ककार्यस्योपपन्नत्वात् क्षणिकता द्रव्याणामवगन्तुं न शक्यते।

अथ क्रियाङ्गीकार एव न क्रियते, तदा कर्तृत्वं भोक्तृत्वं च न सिध्यति। तदाह–लुप्तक्रियस्य च कर्तृत्वभोक्तृत्वाक्षेपः, तदाक्षेपे चाऽऽत्माक्षेपः। परिणतिस्वभावमात्रमिदं कार्यकारणमिति कल्पनम्, कर्ता भोक्तेति च। अतो भोक्तारमिच्छताऽवश्याङ्गीकरणीया क्रिया। सा च स्थिरद्रव्याङ्गीकारनिबन्धना। स्थेमा च द्रव्यस्य प्रत्यभिज्ञाधीन इति मन्वानो भाष्यकारः सप्रत्यभिज्ञं प्रत्यक्षमुपदर्शितवानिति। तदिदमुपसंहरन्नाह–तस्मादहंप्रत्ययालम्बनमात्रसिद्धौ सिद्धेऽपि बुद्धीन्द्रियशरीरव्यतिरेकिणि भोक्तृत्वकर्तृत्वे न स्तः। तदात्मकता वाऽऽ-

---

१. कादाचित्क इति ख० पु०। २. प्रसृते इति ख० पु०।
३. तत्राह— ४. क्रियाफलनिब० इति क० पु०।

भिज्ञं प्रत्यक्षमुपन्यस्तवान् भाष्यकारः । अत एव च नैरात्म्यवादिनो मुहुर्मुहुः क्षणिकतामाकिञ्चित्करतां चाऽऽपादयन्त्यात्मनः—

"चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः" इति ।

तस्माद्भोक्तृतैवाऽऽत्मेति ।

युक्तं भोक्तृतैवात्मेति । कर्तृत्वोपन्यासस्तु विरुध्यते । निष्क्रियत्वादात्मनः । सर्वगतत्वाच्च निष्क्रियत्वम् । प्रतिपन्नं च सर्वगतत्वम्, सर्वत्र सुखोपलम्भात् । न ह्यसत्यागमने किञ्चिद्विरुद्धमिति । चलनात्मिकां क्रियामङ्गीकृत्याऽनिष्क्रियतोक्ता, न पुनर्भोगोत्पत्तावपि । तस्मात्सुष्ठूच्यते—कर्तृभोक्तृतैवात्मेति । तस्मादुपपन्नोऽयं ग्रन्थः—अहमिदमदर्शमिति ।

---

त्मनः आत्मता तस्मादविनाशितापुरःसरैव भोक्तृतेति मन्वानो भाष्यकारः सप्रत्यभिज्ञं प्रत्यक्षमुपन्यस्तवान् । यत एव क्षणिकस्य क्रियानुपपत्त्या भोक्तृताया अभावेनाऽऽत्मतैव हीयते, अत एव च नैरात्म्यवादिनो मुहुर्मुहुः क्षणिकतामकिञ्चित्करतां चाऽऽपादयन्त्यात्मनः—चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्समः, इति । अन्यथा क्षणिकत्वप्रतिपादनमनुपयोगि स्यात् । तस्मात्सर्वेषां सत्या भोक्तृतैवाऽऽत्मन्यात्मज्ञाः व्यवस्थिताः । भोक्तृतायां सत्यामात्मशब्दव्यपदेशादुपचारेण भोक्तृतैवाऽऽत्मेत्युक्तम् ।

युक्तं भोक्तृतैवाऽऽत्मेति, कर्तृत्वोपन्यासस्तु विरुध्यते निष्क्रियत्वादात्मनः । सर्वगतत्वाच्च निष्क्रियत्वम् । प्रतिपन्नं च सर्वगतत्वम्, सर्वत्र सुखोपलम्भात् । न चैवं वाच्यमागतस्यैव धर्मोपलम्भ इति । न ह्यसत्यागमने किञ्चिद्विरुध्यत इति । सत्ता तावदात्मनः सर्वत्र सुखोपलम्भेन सिद्धा । सेदानीं गमनपूर्विकेति नास्ति प्रमाणम् । विनापि गमनेन न कस्य चिदनुपपत्तिः । शरीरागमने तु या सुखाद्युपलब्धिः सा प्रादेशिकत्वेन सुखादीनामुपपन्ना । प्रादेशिकत्वं च सुखादीनात्ममनःसन्निकर्षजत्वान्मनसश्च प्रादेशिकत्वात् आत्मैव यच्छरीरशून्ये देशे नोपलभ्यते तत्रापि प्रादेशिकतैव ज्ञानस्य हेतुः—यत्रैव ज्ञानं तत्रैवोपलभ्यत इति । परिहरति—चलनात्मिकां क्रियामङ्गीकृत्याऽनिष्क्रियतोक्ता, न पुनर्भोगोत्पत्तावपि । भोगोऽनुभवः संवेदनम् । तदुत्पत्तावपि निष्क्रियता नास्ति । संवेदनमपि क्रिया, धातुवाच्यत्वात् । धातुवाच्या क्रियेति लौकिकाः । अन्यथा धातुसंज्ञैव न स्यादिति । यस्मादात्मनः कर्तृत्वं भोक्तृत्वं च युक्त्या सङ्गच्छते तस्मात्सु-

विषयप्रत्यभिज्ञा चैतन्निबन्धनेति शब्दाधिकरण उपन्यस्यते ।

"प्रत्यगात्मनि चैतद्भवती"ति कस्याऽर्थस्य सिद्धये? भोक्तृत्वस्यैव । कथम् ? प्रत्यगात्मनि भोगदर्शनात् । यदि परोऽप्यहंप्रत्ययस्य विषयतामापद्यते, भोक्तृत्वज्ञानं प्राप्नोति । भोक्तृता चाऽऽत्मेत्युक्तम् । न परत्र । परो ह्यसौ योऽन्येद्युर्दृष्टवानिति प्रत्यभिज्ञानुपपत्तियत्राऽयमहंशब्द इत्यहंशब्दोपन्यासस्तर्हि किमर्थः ? यदि परमपह्नवाय ? नापह्नवाय, परप्रतिपत्तये । किमिति तर्ह्यपह्नवः ?

---

ष्ठु शोभनमुच्यते–कर्तृत्वभोक्तृत्वमेवाऽऽत्मेति कर्तृत्वभोक्तृत्वनिबन्धनाऽऽत्मशब्दवाच्यतेति । कार्यकरणयोरभेदोपचारादिदमुच्यते–कर्तृत्वभोक्तृत्वे एवाऽऽत्मेति । यस्मात्कर्तृत्वभोक्तृत्वस्वरूप आत्मा सिद्धः तस्मादात्मस्वरूपसिध्द्यै प्रत्यभिज्ञोपन्यासपर उपपन्नोऽयं ग्रन्थः—अहमिदमदर्शमिति ।

अपरमप्यात्मविषयप्रत्यभिज्ञोपन्यासप्रयोजनमाह—विषयप्रत्यभिज्ञा चैतन्निबन्धनेति शब्दाधिकरण उपन्यस्यते । स एवायं गकार इति यायं प्रत्यभिज्ञा सा पूर्वापरानुभवानुवर्त्तिस्थिरानुभवितृप्रत्यभिज्ञानिमित्तेति शब्दाधिकरणसमीप प्रत्यभिज्ञयमुपन्यस्यते–'स्थिरेऽनुभवितरि सिद्धे विषयप्रत्यभिज्ञा यथा स्या'दिति ।

ननु चा'हमिदमदर्श'मित्येतावतैव देहादिव्यतिरिक्तात्मसत्ता सिद्धा । किमिदमुच्यते प्रत्यगात्मनि चैतदहमिति ज्ञानं भवतीति ? तदाह—प्रत्यगात्मनि चैतद्भवतीति कस्यार्थस्य सिद्धय इति । उत्तरम्–भोक्तृत्वस्यैव। कथम् ? प्रत्यगात्मनि भोगदर्शनात् । अहमिदमनुभवामीति प्रत्यगात्मनि भोगो दृश्यते । प्रत्यगात्मविषयश्चाहंप्रत्ययः । तस्माद्भोक्तृविषयत्वात् भोक्तारं साधयति । यदि परोऽप्यहंप्रत्ययस्य विषयतामापद्येत तदा भोक्तृत्वज्ञानं प्राप्नोति । न हि तदानीमहंप्रत्ययात् भोक्तृतासिद्धिः । भोक्तृता चाऽऽत्मेत्युक्तम् । तस्माद्युक्तमात्मासिध्यर्थं "प्रत्यगात्मनि चैतद्भवति"इति भाष्यम् ।

अत्राऽपरं भाष्यम्–न परत्रेति । तस्यार्थः–न परत्राऽहमिदमदर्शमिति प्रत्यभिज्ञा भवतीति । परो ह्यसौ, योऽन्येद्युर्दृष्टवानिति । परत्वे प्रत्यभिज्ञानुपपत्तिरिति । आह–यत्राऽयमहंशब्द इत्यहंशब्दोपन्यासः किमर्थः ?यत्राऽयमहंप्रत्यय इत्येवं प्रथममेव वक्तव्यमिति यावत् । यदि परमपह्नवायैव, 'न वयमहमितीमं शब्दं प्रयुज्यमानमस्मिन्नर्थे हेतुत्वेन व्यपदिश्याम' इत्येवमपह्नवमेव कर्तुमहंशब्द उपन्यस्तः ? । उत्तरम्–नाऽपह्नवाय, किंतु ? परप्रत्ययायैव । परो हि शब्दप्रयोगेण व्यवहारेण प्रतिपद्यते । किमिति तर्ह्यपह्नवः ? साक्षाद्धे·

साक्षाद्धेतुत्वाशङ्कानिराकरणाय । (१)(परेण हि) साक्षाद्धेतुतां मन्वानेनाऽत्मन्यप्यहंशब्दोऽस्तीति प्रदर्शितं परत्राऽप्यहंशब्दो भक्त्या दृश्यत इत्येवमादिना। । न वयमिति न साक्षाद्धेतुतयेदमुपन्यस्तमिति प्रकटितम् । हेत्वर्थप्रदर्शनार्थस्तु शब्दप्रयोगः ।

ननु चाहं गच्छामीति न हेत्वर्थप्रदर्शनमात्रतया शक्यते परिहर्तुम् । अत्र ह्यहंप्रत्ययोऽपि व्यभिचार्येवोपलभ्यते । अचलनात्मकत्वादात्मनः । तस्मात् स्कन्ध एवालम्बनतामापद्यत इत्याशङ्कनीयमिदम् । किमिति निराशङ्कैव गम्यते ? किमत्राऽऽशङ्कनीयम् ? इदंप्रत्ययग्राह्यं हि कार्यकरणम् । प्रत्ययान्तरग्राह्ये च वस्तुनि विरुद्धप्रत्ययान्तरालम्बनता नोपपद्यते, गौर्वाहीक इति यथा ।

गौण उपपद्यते इति चेत्—परिहृतं त्वयैव । तस्मादसंभिन्नेदंप्रत्यय

---

तुत्वाशङ्कानिराकरणाय । **तदेवाऽऽह**—परेण हि साक्षाद्धेतुत्वं मन्वानेनाऽनात्मन्यप्यहंशब्दोऽस्तीति प्रदर्शितं परत्राप्यहंशब्दो भक्त्या दृश्यत इत्येवमादिना **ग्रन्थेन** । न वयमिति न साक्षाद्धेतुतयेदमुपन्यस्तमिति **हृदि स्थितं वस्तु** प्रकटितम् । **यस्तु प्रत्ययो** हेत्वर्थः **हेतुरूपोऽर्थः तस्य** प्रदर्शनार्थः शब्दप्रयोगः। **प्रत्यय एव तु साक्षाद्धेतुः** ।

ननु चाऽहं गच्छामीति न हेत्वर्थप्रदर्शनमात्रार्थतया शक्यते परिहर्तुम् । अत्र ह्यहं प्रत्ययोऽपि व्यभिचार्येवोपलभ्यते । अचलनात्मकत्वादात्मनः । **एतस्य च प्रत्ययस्य गन्तृविषयत्वादात्मालम्बनता न शक्यते वक्तुम्** । तस्मात्स्कन्ध एवालम्बनतामापद्यत इत्याशङ्कनीयमिदम् । किमिति निराशङ्कैव गम्यते ! **उत्तरम्**—किमत्राऽऽशङ्कनीयम् ? **नास्त्येवाऽत्राऽऽशङ्केत्युपेक्षितं भाष्ये** । **कस्मादित्याह**—इदंप्रत्ययग्राह्यं हि कार्यकरणम् , **ज्ञेयं ज्ञानं चेत्यर्थः** । **ज्ञेयज्ञानरूपाः स्कन्धाः** । (२) **तस्मान्नाऽहंप्रत्ययग्राह्याः** । प्रत्ययान्तरग्राह्ये च वस्तुनि विरुद्धप्रत्ययालम्बनता नोपपद्यते, गौर्वाहीक इति यथा । **न कदाचिदपि वाहीको गोप्रत्ययविषयतामापद्यते** ।

**ननु सर्वथैवाऽनुपपत्तिरिति नैवाऽस्ति । किन्तु ? मुख्यप्रत्ययालम्बनता नास्ति** । गौणस्तूपपद्यते प्रत्यय इति चेत् ? परिहृतं त्वयैव । **गौणे हि शब्दप्र-**

---

१. एतत्कुण्डलान्तर्गतो भागः मूलपुस्तकेऽसन्नपि व्याख्यानपुस्तकानुसारेण निवेशितः ॥

२. तस्मात्तेऽहंप्रत्ययविरुद्धेदं प्रत्ययग्राह्याः । इति० ख० पु० ।

एवाऽऽहंप्रत्यय आलम्बनम् । ब्राह्मणमप्यमुमेवार्थमनुवदति(१)– 'अशीर्यो न हि शीर्यत' इत्यशीर्यतया भोक्तृत्वमात्मनः । विनश्वरं च विज्ञानमिति तद्व्यतिरिक्तालम्बनतामापादयति। व्यामोहोऽयमहङ्कारग्रन्थिरिति न शक्यते वक्तुं–(२)यस्य च दुष्टं करणं यत्र च मिथ्येति भवति प्रत्ययः स एवाऽसमीचीनः प्रत्ययो नाऽन्य इति । सिद्धत्वादस्यार्थस्य । यदि परं ब्रह्मविदामेष निश्चयः–यदुपलभ्यते तदसत् , यन्नोपलभ्यते तत्तत्त्वमिति, नमस्तेभ्यो, विदुषि नोत्तरं वाच्यमिति । अत्र परिहारः । तस्माद्यथार्थोऽयमर्थवादः–(३)स एष यज्ञायुधी यजमान इति ।

(४)आह–यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य तन्निदर्श्यतामिदं तदीदृशं चेति किमिदं चोद्यते ? इदमत्र चोद्यते । तदेव न ज्ञायते। कथं न ज्ञायते? किं वा स विज्ञानस्याऽऽत्मनोऽहंप्रत्ययः प्रमा-

---

योगामात्रं भवति, न पुनः प्रत्यय एव भवति । न हि वाहीको गवाकारप्रत्ययग्राह्यतामश्नुते । उपसंहरति—तस्मादसंभिन्नेदंप्रत्यय एवाहंप्रत्यय आत्मन आलम्बनम् । संभिन्नो मिश्रीकृत इदंप्रत्ययः येनाऽहंप्रत्ययेन स एवाऽऽत्मन आलम्बनं व्यवस्थितौ कारणमित्यर्थः । इदं प्रत्ययविषयेषु स्कन्धेष्वगतत्वादेकान्ततोऽयमात्मव्यवस्थितौ हेतुरिति यावत् । ब्राह्मणमप्यमुमेवार्थमनुवदति–अशीर्यो न हि शीर्यत इति । अशीर्यतया भोक्तृतामात्मनः स्थिरताप्रदर्शनेन । विनश्वरं च विज्ञानमिति तद्व्यतिरिक्तालम्बनतामापादयति । स्थिरविषयो ह्यहंप्रत्ययः । क्षणिकं च विज्ञानम् । अतो विज्ञानव्यतिरिक्तालम्बनोऽहंप्रत्ययः इत्यापादयति । तस्माद्व्यामोहोऽयमहङ्कारग्रन्थिरिति न शक्यते वक्तुं–यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवाऽसमीचीनः प्रत्ययो नान्य इति । सिद्धत्वादस्याऽर्थस्य । यदि परं ब्रह्मविदामेष निश्चयः—यदुपलभ्यते भोक्तृत्वं तदसत् । यन्नोपलभ्यते कैवल्यं तत्तत्वमिति; नमस्तेभ्यः । विदुषि नोत्तरं वाच्यमिति । अत्र परिहारः । तस्मान्नाऽयथार्थोऽयमर्थवादः—स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीति ।

आह–यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य तन्निदर्श्यताम्–इदं तदीदृशं चेति किमिदं चोद्यते ? इदमेव चोद्यते । तदेव न ज्ञायते । कथं न ज्ञायते ? न ज्ञायते

---

१. बृह. उ. २. शा. भा ३. शा. भा. ४. शा. भा.

णतयोपन्यस्तः येनेदमुच्यते विज्ञानमपास्य तन्निदर्शयितव्यमिति । अनेकवस्त्वालम्बनं हि यत्र ज्ञानं तत्रेदं युज्यते वक्तुम्–इदमपास्येदं निदर्शयितव्यमिति । इह त्वेकात्मरूपैव संवित् । तस्मादिदं व्युदसनीयमिति तमसि पदम् ।

अत्रोच्यते–अयमस्याऽभिप्रायः–ज्ञेयत्वे ह्यात्मनो ज्ञानज्ञातृणी न व्यतिरिक्ते शक्येते वक्तुम् । न चाऽपास्यैव ते सम्विदस्तीति सिद्धम् । तस्मात् ज्ञानज्ञातृणी व्युदस्य पृथक्प्रमेयतया निदर्शयितव्यम्(१) । अत्रोच्यते स्वसंवेद्यः स भवति । नाऽसावन्येन शक्यते द्रष्टु'मिति किमिदमस्योत्तरमुपपद्यते ? किमिति वा नोपपद्यते ?

---

किं वा स विज्ञानस्यात्मनोऽहंप्रत्ययः प्रमाणतयोपन्यस्तः, येनेदमुच्यते विज्ञानमपास्य तन्निदर्शयितव्यमिति । अनेकवस्त्वालम्बनं हि यत्र ज्ञानं तत्रेदं युज्यते वक्तुम्—इदमपास्येदं निदर्शयेति । इह त्वेकात्मरूपैवाऽहमिति संवित । **अत आत्मैवाऽत्र केवलोऽवभाति न पुनर्विज्ञानमपि । तेन विज्ञानमपास्यैव प्रतीयते । अतः चोद्यमिदं न घटते—विज्ञानमपास्य तन्निदर्शयितव्यमिति** । तस्मादिदं व्युदसनीयमिति तमसि पदम् । **असमीक्ष्य प्रवृत्तमित्यर्थः** ।

अत्रोच्यते–अयमस्याऽभिप्रायः–ज्ञेयत्वे ह्यात्मनो ज्ञानज्ञातृणी व्यतिरिक्ते न शक्येते वक्तुम् । न चापास्यैव ते संविदस्तीति **सिद्धम । अस्यार्थः—यो ह्यहंप्रत्ययप्रमेय आत्मेति वदति तेनाऽऽत्मना ज्ञेयभूतस्याऽन्यत् ज्ञानं करणरूपं ज्ञाता चान्यो वक्तव्यः कर्तृरूपः । न च शक्यते तदुभयं वक्तुम् । न च करणकर्तृशून्यं कर्म भवति । तेन त्वया व्यतिरिक्तकर्तृकरणाभ्युपगमविमुखेन ज्ञेयतां चाऽऽत्मन इच्छतैवमङ्गीकरणीयम्–विज्ञानं करणमपास्याप्याऽऽत्मा दृश्यत इति । एवं चेदस्माकमपि तर्हि विज्ञानमपास्यैव निदर्शयितव्यमिदं तदीदृशं चेति । तदाह**–तस्मात् ज्ञानज्ञातृणी व्युदस्य पृथक्प्रमेयतया निदर्शयितव्यमिति **चोद्यार्थः** । अत्रोच्यते–स्वसंवेद्यः स भवति । नाऽसावन्येन शक्यते द्रष्टुमिति । किमिदमस्योत्तरमुपपद्यते ? किमिति वा नोपपद्यते ? **एवं नोपपद्यते** । सैवेयं पूर्वोक्तैकालम्बनानेकाकारता प्रत्ययस्याऽभ्युपगता भवति । अस्यार्थः—**'स्वसंवेद्यः स भवती'ति वदता एक एवाऽऽत्माहंप्रत्ययेन कर्तृकर्मरूपतयाऽवलम्ब्यत इत्यभ्युपगतं भवति यदुक्तं वृत्तिकारग्रन्थे—पूर्वपक्षदशायामेकालम्बनमनेकाकारसंवेदनं वि-**

---

१ शा० भा० १६. २३

सैवेयं पूर्वोक्तैकालम्बनानेकाकारता प्रत्ययस्याऽभ्युपगता भवति। अविवेकापराधोऽयं, नाऽत्राऽऽयुष्मतो दोषः।

ननु चाहंप्रत्ययोऽयमहमिदमदर्शमित्युपन्यस्तः, नाऽहमहमदर्शमिति। एवं च सति केयमनेकाकारता? तस्मादविवेकः परमापदां पदम्। यदि ह्यात्मशब्दवाच्यतया ज्ञेयतोपन्यस्ता प्रमेयान्तरशून्यता वा तदैतच्चोद्यमभविष्यत्। इह तु सर्वज्ञेयप्रमातृतयैव संविदुपन्यस्ता। तस्मात्प्रतिपक्षोपन्यास एवायम्। कथं तेनैव बाध्यते? न हि यद्यस्यैव बाध्यं तत्तस्यैव बाधकं भवितुमर्हति। तस्मात्सम्यगु-

---

कल्पमात्रमुदीयते इति अविवेकापराधोऽयं, नाऽत्राऽऽयुष्मतो दोषः।

**एकग्रन्थेनाऽऽह**–ननु चाहंप्रत्ययोऽयमहमिदमदर्शमित्युपन्यस्तः, नाऽहमहमदर्शमिति। एवं च सति केयमनेकाकारता? तस्मादविवेकः परमापदां पदमिति। **इदमत्राकूतम्–अर्थान्तरमनुभवन्नात्मा भासते, न पुनः केवल एव। तत्रार्थान्तरविषयं यत् विज्ञानं तत्राऽऽत्मा कर्त्तैव। अर्थान्तरमेव तु कर्म। तदेव तु ज्ञानमर्थान्तरविषयं संवेदनं जनयदात्मानमपि प्रकाशयति। सेयं विषयविषयिणोरेका प्रकाशावस्था। न हि ज्ञानशून्यं कदाचिदपि ज्ञेयमव भाति। न हि तदैवं स्यात्—मयेदं विदितमिति। इदं विदितमित्येव स्यात्। तदा च स्वपरवेद्ययोरनतिशयः स्यात्।** तथा **ज्ञाताऽपि ज्ञेयाप्रतिपत्तौ सुषुप्तिमदमूर्च्छादिषु न प्रकाशेत। तेन नियतसहोपलम्भौ विषयविषयिणौ। तत्र सत्यपि ज्ञानजन्यप्रकाशलक्षणक्रियाफलयोगित्वे आत्मा न कर्मतयाऽनुभूतः संयोगफलयोगी गन्तेव। यथा च तत्र परस्थक्रियाजन्यफलभागितया देश एव कर्म तथेहाप्यर्थान्तरं कर्मेति। तदिदमाविष्करोति**–यदि ह्यात्मशब्दवाच्यतया ज्ञेयताऽभ्युपन्यस्ता स्यात् **यदि हि कर्तृशब्दवाच्यः कर्मभूत इत्युक्तं स्यात्, वस्तुवृत्तेन** प्रमेयान्तरशून्यता वा तदैतच्चोद्यमभविष्यत्। **प्रमेयान्तरशून्यत्वे हि कर्मान्तराभावादात्मैव कर्म स्यात्।** इह तु सर्वज्ञेयप्रमातृतयैव संविदुपन्यस्ता। **सर्वं ज्ञेयं प्रमिण्वन्नात्मा कर्तृतयैव प्रकाशत इति नास्ति कर्मकर्तृभावः। किन्तु कर्तृनैव केवला।** तस्मा**देकालम्बनादेकाकारसंवेदनपक्ष**प्रतिपक्षोपन्यास एवाऽयम्। कथं तेनैव(१) तद्बाध्यते। न हि **यद्यस्य** बाध्यं तत्तस्य बाधकं भवितुमर्हति। तस्मात्सम्यगुत्तरम्–स्वसंवेद्यस्स भवतीति। **अनेकाकारैकालम्बनता ह्यात्मनः कर्मकर्तृत्वाभ्युपगमे भवति। यदा तु विषया**

---

१. तद्बाधत इति ख. पु.

त्तरम् । यथा कश्चिच्चक्षुष्मानित्यनेनाऽपि निदर्शनेन कर्तृकरणान्तरनिषेध एव स्थिरीकृतः ।

ननु चाऽत्र कर्त्रन्तरं करणान्तरं भिन्नं मेयात् । (१)किमिदं निदर्शनम् ? कर्त्रन्तराभावसामान्यात् । तस्मात् कारणदोषरहिता अविपरीता च संविदात्मास्तित्वे हेतुः । भवतु कर्त्रन्तरं, मा वा । उक्तं च यथाऽवगम्यन्तेऽर्थास्तथा भवन्ति, न तथा यथा नावगम्यन्त इति । अत्रापि ब्राह्मणं भवति(२) "शान्तायां वाचि" इति । "व्यापृते ऽन्यत्र कर्तृतया कथं कर्तृकरणान्तराभावे गृह्यते इति प्रश्नः । वाक्ग्रहणं च करणान्तराभावनिदर्शनार्थम् । 'आत्मज्योतिः सम्राडिति होवाच'त्य अयमर्थः पूर्वोत्तरपक्षभङ्ग्या प्रदर्शितः । एवं चाऽ'गृह्यो न हि गृह्यत' इति ब्राह्मण(३) मुपपन्नम् ।

---

ननुभवे नाऽऽत्मा प्रतिभात्येव केवलः न तदा स्वात्मनि क्रियावृत्तिविरोध इति । यथा कश्चिच्चक्षुष्मानित्यनेनापि निदर्शनेन कर्तृकरणान्तरनिषेध एव स्थिरीकृतः ।

ननु चात्र कर्त्रन्तरं पुरुषः करणांतरं चक्षुर्भिन्नमेव प्रमेयात् रूपात् । अतः कथमिदं निदर्शनम् ? उत्तरमाह—कर्त्रन्तराभावसामान्यान्निदर्शनम् । यथा चक्षुष्मति पुरुषे स्वयं रूपमुपलभमाने न कर्त्रंतरमपरमस्ति तथाऽऽत्मन्यप्यात्मानमुपलभमाने न कर्त्रंतरमस्तीत्येतावता सामान्येन दृष्टान्तः । उपसंहरति—तस्मात्कारणदोषरहिता अविपरीता च संविदात्मास्तित्वे हेतुः । भवतु वा कर्त्रंतरं मा वा । अस्ति चाऽऽत्मन्यपि संवित् । अतोऽस्त्यात्मा यद्यपि कर्त्रंतरं नास्तीति भावः । उक्तं च यथाऽवगम्यन्तेऽर्थास्तथा भवन्ति, यथा नावगम्यन्तेऽर्थास्तथा न भवन्तीति । अत्रापि कर्त्रन्तरकरणान्तराभावे ब्राह्मणं भवति "शांतायां वाची" ति । इदमेव स्वाभिमतप्रामाणिकार्थानुगुणतया व्याचष्टे—आत्मनि व्यापृतेऽन्यत्र बाह्ये रूपादौ कर्तृतया कर्त्रन्तरकरणान्तराभावे कथं गृह्यत इति प्रश्नः । वाक्ग्रहणं च ब्राह्मणे शान्तशब्दान्वितं करणांतराभावे निदर्शनार्थम् । वाक्शांत्या करणान्तराभावोऽभिहित इति यावत् । 'आत्मज्योतिस्सम्राडिति होवाचे' त्ययमेवार्थः स्वसंवेद्यरूपः पूर्वोत्तरपक्षभङ्ग्या प्रद्योतितो ब्राह्मणवाक्येनेत्यर्थः । यदात्मा परेण न गृह्यते एवं च कृत्वाऽगृह्यो न गृह्यत इत्येतदपि ब्राह्मणमुपपन्नम् ॥

---

१. किमिदं, कथमिदमित्यर्थः । २. बृ. उ. ४. ३. ६. ३. बृ० उ० ४. ५. १५.

ननु चात्राऽग्राह्यतैवोपन्यस्ता। ननु न श्रुतं भवता आत्मज्योतिस्सम्राडिति ? इदमपि किं न श्रुतम् ? द्वयोः श्रुत्योस्तदनुरोधेनाऽस्याऽग्रहणश्रुतिरापेक्षिकी। न पुनरात्मग्रहणमन्यथा व्याख्यायत इति। का युक्तिः ? स्वयंज्योतिर्ग्रहणे गुणवादस्याऽसम्भवात्। अग्राह्यत्वे चापेक्षिकतयोपपत्तेः। आत्मा ज्ञातव्यो मन्तव्य इति चाऽविरोधात्। एवं च स्वयंज्योतिष्ट्वमुपपद्यते इति।

ननु चैवं सति कथं परस्मै प्रतिपादयितुं शक्यते ? परप्रत्यार्थश्चायमारम्भः शास्त्रकाराणां श्रुतीनां च। स्वसम्विदेवाभ्युपायतां प्रतिपद्यते। यत आत्मना सम्वेद्यते न परेणेति। सर्वपुरुषेषु च परासंवेद्या सम्विदस्तीति सिद्धा। परसम्वित्प्रतिषेधमुखेन

---

ननु चात्राऽग्राह्यतैव सर्वथोपन्यस्ता। न पुनः पुरुषमात्राग्राह्यता। उत्तरमाह—ननु न श्रुतं भवता 'आत्मज्योतिः सम्राडि'ति। अत्र हि ब्राह्मणे स्वयंज्योतिष्ट्वमुक्तम्। तदनुरोधेनाऽपेक्षितं परग्राह्यत्वमेवोपन्यस्तमिति भावः। अत्र चोदयति—इदमपि किं न श्रुतं, अग्राह्यत्वं नाम। द्वयोश्श्रुत्योर्मध्ये तदनुरोधेन स्वयंज्योतिष्ट्वानुरोधेनाऽस्याऽऽत्मनोऽग्रहणश्रुतिरापेक्षिकी। परपुरुषाभिप्रायेण व्याख्यायत इति। न पुनरात्मग्रहणमन्यथा व्याख्यायत इति। का युक्तिः ? समाधत्ते—स्वयंज्योतिर्ग्रहणे गुणवादस्याऽसम्भवात् गौण्या वृत्त्या स्वयंज्योतिष्ट्वं व्याख्यातुं न शक्यते। अग्राह्यत्वे चापेक्षिकतयोपपत्तेः। अग्राह्यता हि परपुरुषाभिप्रायेणाऽपि वर्णयितुं शक्या। आत्मा ज्ञातव्यो मन्तव्य इति चाविरोधात्। यदि ह्यग्राह्यताऽऽपेक्षिकी न स्यात् तदा ज्ञातव्य इत्येतद्विरुध्यते। एवं चाऽऽपेक्षिकेऽग्राह्यत्वे सति स्वयंज्योतिष्ट्वमपि प्रदेशान्तरोक्तमुपपद्यते यद्यात्मा स्वसंवेद्य एव॥

ननु चैवं सति कथं परस्मै प्रतिपादयितुं शक्यते ? परप्रतिपत्त्यर्थश्चाऽयमारम्भः शास्त्रकाराणां श्रुतीनां च। न हि केनचिदात्मार्थं शास्त्रं प्रणीयते। तथा श्रुतीनां च प्रवृत्तिः परप्रतिपत्त्यर्था। उत्तरम्—स्वसंविदेवाऽत्राऽभ्युपायतां प्रतिपद्यते। कस्मात्पुनस्स्वसंविदेवोपायो, नाऽन्यः ? इत्यत्राह—आत्मना संवेद्यते न परेणेति हेतोस्स्वसंविदेवोपायो नाऽन्य इति। सर्वपुरुषेषु च परासंवेद्याऽऽत्मनस्संविदस्तीति सिद्धा। परसंवित्प्रतिषेधमुखेनोपदेशानामुपदेशता न पुनरिदं तदीदृशमिति शक्यते वक्तुमित्य-

चोपदेशानामुपदेशता । 'तदिदं नेति ने'त्युपन्यस्तम् ।

ननु च सुखादयोऽपि स्वसम्वेद्या एव । तेऽपि परेण नैव परस्थाः संवेद्यंते । कथं तेभ्योऽन्यतया परस्मा उपदिष्ट आत्मा भवति ? तत्र भाष्यकारेण लिङ्गावगम्यतया परेणाऽवगम्यन्त एवेत्युक्तम् । तदयुक्तमिव । आत्मनोऽपि प्रसङ्गात् । तत्रापि चेष्टानुमानं स्वयमुपन्यस्यति । अतः प्रतिपन्नोपघाती कथं विद्वद्भिर्लिख्यते ? तदिदमनुपासितगुरोश्चोद्यम् । चेष्टा हि कारणदोषनिराकरणतयोपन्यस्ता । सुखादयस्तु भ्रूभङ्गनेत्रविलासादिगम्याः । कः पुनरनयोर्विशेषः ? अनेनाऽपि परस्यैव सम्विदनुमीयते । अकार्यतयेति विशेषः ।

---

नेऽनाभिप्रायेण । तदिदं 'नेति नेती'त्युपन्यस्तम् ।

अत्र भाष्यकारेण यत्तु परः पश्यति तत्प्रतिषेधोऽस्योपदेशोपाय इत्युक्त्वा परस्थास्सुखादयः परैर्लिङ्गैरवगम्यन्ते । तेऽपि नाऽऽत्मान इत्युक्तम् । तदाक्षिपति—ननु च सुखादयोऽपि स्वसमवायिनः स्वसंवेद्या एव । तेऽपि परेण परस्थाः नैव संवेद्यन्ते । कथं तेभ्योऽन्यतया आत्मा परस्मा उपदिष्टो भवति । तत्र भाष्यकारेण लिङ्गावगम्यतया परेणाऽवगम्यन्ते एवेत्युक्तं, तदयुक्तं, आत्मनोऽपि प्रसङ्गात् । आत्मनोऽप्यात्मता प्रसज्यते । यतस्तत्रापि चेष्टानुमानं स्वयमुपन्यस्यते (१)"एतदपि पुरुषप्रवृत्त्याऽवगम्यते" इत्यादिना भाष्येणाऽर्धकृतसमापनादिचेष्टानुमानेनात्माऽऽवगम्यत इत्युक्तम् । अतः प्रतिपन्नार्थोपघाती कथं विद्वद्भिर्लिख्यते ? समाधत्ते—तदिदमनुपासितगुरोश्चोद्यम् । चेष्टा हि कारणदोषनिराकरणतयोपन्यस्ता कारणदोषा निराक्रियन्ते येन तत्कारणदोषनिराकरणं तद्भावेनोपन्यस्ता सेत्यर्थः । एतदुक्तं भवति—स्वकीयायामात्मसंविदि या कारणदोषाशंका—किमयमात्मा अविद्यमान एव कारणदोषाद्भातीति, सा चेष्टया परपुरुषवर्त्तिन्या निराक्रियत इति । सुखादयस्तु भ्रूभङ्गनेत्रविलासादिगम्याः । भ्रूभङ्गादिभिः सुखादय एवाऽवगम्यन्त इत्यर्थः । कः पुनरनयोर्भ्रूभङ्गानुमानचेष्टानुमानयोर्विशेषः ? अनेनाऽपि हि चेष्टानुमानेन परस्यैवाऽऽत्मनस्संविदनुमीयते । तथा भ्रूभङ्गानुमानेन सुखादिसंविदिति । उत्तरम्—अकार्यतयेति विशेषः । चेष्टा हि नाऽऽत्मकार्यम् । तेन चेष्टातो यद्-

---

१. शा० भा० १७. १२.

कथं पुनरसम्बद्धमुपलक्षयति ? कथं वाऽनुपलक्षितः पुरुषान्तराविपर्ययस्स्वात्मनि विपर्ययाशङ्कां निरस्यति ? विपर्ययाग्रहणादिति ब्रूमः। न चाऽग्रहणे सम्बान्धितोपयुज्यत इत्युक्तम्। तस्मादुपपन्नमिदं शाबरं वचः।

---

नुमानं न तत्कार्याद् भ्रूभङ्गादीनां सुखादिकार्यत्वादनुमानं कार्यतः। तेन चेष्टातो नाऽऽत्मा प्रतीयते। भ्रूभङ्गादिभिस्तु सुखादयः प्रतीयन्ते। तेन परात्मा नाऽनुमानतोऽपि परेणाऽवगम्यते। सुखादयस्त्ववगम्यन्त इति विशेषः।

पुनरपि परश्चोदयति—कथं पुनरसम्बद्धमुपलक्षयति ? कथं वाऽनुपलक्षितः पुरुषान्तराविपर्ययः स्वात्मनि विपर्ययाशङ्कां निरस्यति ? अस्यार्थः—यदा कार्यभूता चेष्टाऽऽत्मनः, तदा कथमात्मना असंबद्धा सती आत्मानमुपलक्षयति ? सामान्याभिप्रायेणेदमुच्यत इत्यसम्बद्धमिति नपुंसकनिर्देशः।

अथ मन्यसे—नाऽस्माकमात्मनोपलक्षितेन प्रयोजनम्। अतः किमनेनोपलक्षितेनेति। तत्राह—कथं चाऽनुपलक्षितः पुरुषान्तराविपर्ययः पुरुषान्तरस्यात्मान्तरस्याऽविपर्ययः अविपरीतरूपता स्वात्मनि स्वकीय आत्मनि विपर्ययाशङ्कां निरस्यति। अविपरीते परात्मस्वरूपे प्रतिपन्ने स्वात्मनि विपर्ययाशङ्काऽपगच्छति, नान्यथेति मन्यते। विपर्ययाग्रहणादिति ब्रूमः। विपर्ययग्रहणमात्रेणाऽऽशङ्का निरस्यत इत्यर्थः। प्रयत्नेनाऽप्यन्विष्यमाणो यदा पुरुषान्तरे विपर्ययो नाऽवगम्यते तदा स्वविषये या विपर्ययाशङ्का सा निवर्त्तते एव। चेष्टानुमानेन हि यादृशी ममाऽऽत्मप्रतिपत्तिः तादृश्येवास्यापीति प्रतिपत्तिः सदृशी प्रतीयते। प्रत्येतव्यस्य चाऽऽत्मनो न विपरीतस्वरूपमवगम्यत इति शङ्कानिवृत्तिः। न चाग्रहणे सम्बन्धितोपयुज्यत इत्युक्तम्। तस्मादुपपन्नं शाबरं वचः।

अत्र चोदयति—मा भूच्चेष्टात आत्मनोऽनुमानम्। चेष्टाया आत्मना सह सम्बन्धाभावात्। चेष्टानिमित्ता तु परात्मप्रतिपत्तिः किमिति परात्मानं नाऽनुमापयति ? प्रतिपत्तेः प्रत्येतव्येन सह सम्बन्धादिति। अत्र ब्रूमः—उक्तमेव भोक्तृतया ह्यात्मतेति; अनुभवितृतयेति यावत्। अतश्चाऽनुभाव्यतयाऽनुमीयमानो नाऽऽत्मतया प्रतीयत इति नाऽऽत्मा परेणाऽनुमानेनाऽवगम्यत इति।

उपमाऽप्यत्र कथनोपायतयैवोपन्यस्ता। कथनं च प्रमाणान्तर-पूर्वकमिति न लक्षणव्यवहारयोर्विरोधः। यदप्युच्यते विज्ञानमपास्य तन्निदर्श्यतामिति। ननु च दत्तोत्तरमतत्-स्वसम्वेद्यः स भवतीति। दत्तोत्तरस्य च पुनरुपन्यासो नोपपद्यते। अथाऽयमभिप्रायः-नैवेदमस्योत्तरम्। कस्य तर्हि तदुत्तरम्? यदि न कस्यचिदुत्तरं किमेतावता तदुत्तरेण भवितव्यम्? ननु तदनन्तराभिधानात् तदुत्तरमिति गम्यते। पुनः प्रश्नाभिधानात् नोत्तरमवैहि। लिङ्गं क्रमाद्बलीयः। तदिदमाकाशभ्रान्तम्। उभयं तस्यैवोत्तरम्। 'स्वसंवेद्यः स भवती'तीदमपि लिङ्गादेवोत्तरमवसीयते। व्याख्यातं चास्य तद्व्याकरणसामर्थ्यम्।

---

उपमाऽप्यत्र कथनोपायत्वेनोपन्यस्ता(१) 'उपमानाद्धोपदिश्यत' इत्यत्र भाष्ये कथनोपायत्वेनोपमाऽभिमता। कथ्यतेऽनेनेति कथनं वाक्यम्। तदेवोपमा, सादृश्यप्रतिपादकत्वात्। न पुनरत्रोपमानरूपं प्रमाणमुपमानशब्देनोपन्यस्तम्। तत्कथनं तदपि प्रमाणान्तरपूर्वकं नोपमानपूर्वकमिति न तल्लक्षणाभिधानस्य व्यवहारस्य च विरोधः।

यदप्युच्यते विज्ञानमपास्य तन्निदर्श्यतामिति इत्यनेन भाष्यमनुभाषते। आक्षिपति। ननु च-दत्तोत्तरमेतत् स्वसंवेद्यस्स भवतीति। अनेन भाष्येण विज्ञानमपास्य तन्निदर्श्यतामित्यस्य चोद्यस्योत्तरं दत्तम्। दत्तोत्तरस्य च पुनः प्रश्नोपन्यासो नोपपद्यते। अथाऽयमभिप्रायः-नैतत्पूर्वोक्तस्य चोद्यस्योत्तरम्। इदमेवोत्तरयानन्तरम्(?)। सम्प्रति दूषयति-कस्य तर्हि तदुत्तरमिति। एकदेशी समाधत्ते-यदि न कस्यचिदुत्तरं किमेतावता तदुत्तरेण भवितव्यम्?। न ह्यन्यस्य तदुत्तरं न भवतीति किमेतावता तदुत्तरं भवतीति येनैतदुत्तरत्वे युक्तिरित्यर्थः। दूषणवाद्याह-ननु च तदनन्तराभिधानात्तदुत्तरमवगम्यते। एकदेश्याह-पुनः प्रश्नाभिधानान्नोत्तरमित्यवैहि(?)। उत्तरे हि दत्ते पुनः प्रश्नो नोपपद्यते। क्रमाच्च लिङ्गं बलीयः। तेनाऽऽनन्तर्यरूपात्क्रमादुत्तरत्वमवगम्यमानं पुनः प्रश्नसामर्थ्येन लिङ्गेनानुत्तरतावगमात् बाध्यते। तेन तदुत्तरमस्य चोद्यस्य न भवतीति।

सम्प्रति परमासिद्धान्त्याह-तदिदमाकाशभ्रान्तम्। उभयं तस्यैवोत्तरम्।

---

१. शा० भा० १७. १६. अवैहीत्येव पाठो मूल पुस्तकेऽपि।

पुनः प्रश्न इदानीं किमर्थः? अस्ति किंचिदवलग्नम्। सत्यमिदमहं वेद्मीति संवेद्यते, नाऽऽकारान्तरकल्पना। विज्ञानाविविक्तस्य तु ग्रहणं न प्राप्नोति, व्यापृतावगमात्। विज्ञानापगमे च रूपान्तरानुपलब्धेः पुनरपि शून्यता। तस्मात् विकल्प एवायमहङ्कारग्रन्थिरिति पुनरुपन्यासः।

(१) 'यद्युपायमेव प्रतिषेधसी'ति किमभिप्रेतमुत्तरवादिनः? इदमभिप्रेतम्—ग्राह्यानुकारता हि ग्रहणस्योक्ता, न ग्राहकानुकारिता। व्यापृतावस्थोनुपायतयैवोपन्यस्ता कथमनुपायमुपेयं शक्यते

---

स्वसंवेद्यः स भवतीति इदमपि लिङ्गादेवोत्तरमित्यवसीयते। व्याख्यातं चास्य तन्निराकरणसामर्थ्यम्। तेनोभयत्रापि लिङ्गमेवोत्तरत्वे प्रमाणमिति द्वयमपि तस्यैवोत्तरम्। सम्प्रत्येकदेश्येव निराकृतः परमसिद्धान्तिनमनुयुंक्ते—पुनः प्रश्न इदानीं किमर्थः?। उत्तरम्—किञ्चिदवलग्नोत्तरार्थः। किं तदवलग्नम्? सम्प्रत्यवलग्नं दर्शयति—सत्यमिदमहं वेद्मीति संवेद्यते। नाकारान्तरकल्पना। विज्ञानविविक्तस्य तु ग्रहणं न प्राप्नोति। (२) व्यापृतावगमात्। विषयं जानन्नात्माऽवगम्यते इति विज्ञानरहितस्याऽऽत्मनो ग्रहणं न प्राप्नोतीति विज्ञानस्याऽपि ग्रहणेन भवितव्यम्। विज्ञानापगमे च रूपान्तरानुपलब्धे पुनरपि सैव शून्यता। विज्ञानं हि गृह्यमाणं केनचिद्रूपेण ग्राह्यम्, रूपरहितस्य ग्रहणाभावात्। तत्र च नीलादिव्यतिरिक्तरूपान्तरानुपलब्धेस्तस्यैव नीलादिरूपता प्राप्नोति। ततश्चार्थशून्यता ज्ञानानां प्राप्नोति। तस्माद्विज्ञानग्रहणनिबन्धने बाह्यार्थेऽवस्थिते विकल्प एवाऽयमहङ्कारग्रन्थिरिति—इदं तदवलग्नम्। अतः पुनरुपन्यासः।

यद्युपायमेव प्रतिषेधसीति किमभिप्रेतमुत्तरवादिनः? इदमभिप्रेतम्—ग्राह्यानुकारिता हि ग्रहणस्योक्ता न ग्राहकानुकारिता। ग्राह्याकारं विज्ञानं न ग्राहकभूतविज्ञानाकारमित्युक्तं शून्यवादनिराकरणे। तेन ज्ञानं तावन्न प्रत्यक्षम्। व्यापृतावस्थोपायतयोपन्यस्ता व्यापृतावस्थोपायत्वेनोक्ता। न पुनर्व्यापृतत्वेन ग्रहणम्। यदाऽऽत्मा विषयाननुभवति तदा तस्यामेव विषयसंबन्धिन्यामनुभूतौ भातीति कथमनुपायमुपेयं शक्यते कथयितुमिति। तदिदमाह—यद्युपायमेव प्रतिषेधसि,

---

१. शा. १७. २१. २. व्यावृत्तेति० क० पु०

कथयितुमिति । तदिदमाह–(१)"यद्युपायमेव प्रतिषेधसि न श-क्यत उपायमन्तरेणोपेतव्यमुपेतुम् । अयमेवाऽभ्युपायो ज्ञातव्यानामर्थाना"मिति । (२)"तद्यथा–कश्शुक्लो नाम ? यत्र शुक्लत्वमस्ति" इत्यनेन किं समर्थितम् ? इदं समर्थितम्–यथा न शुक्लतामन्तरेण शुक्लोऽवगम्यते, तथा न ज्ञानमन्तरेण ज्ञेयमवगम्यते इति ।

ननु चैवं शुक्लतापुरस्सरैव शुक्ले बुद्धिः । एवञ्चाऽनभिप्रेतोऽर्थः समर्थितो भवति। नाऽनभिप्रेतः । एतावदनेनोक्तम्–नोपायमन्तरेणोपेयानामुपेयत्वमिति । यस्य यथैवोपायत्वं तथैव तस्य ; ज्ञानस्य तूपायत्वेऽपि तत्पुरःसरा न संविदित्युक्तम् । तस्मात् सर्वविज्ञानानां ज्ञेयताऽऽत्मनः स्थिता भवति 'अहमिदमदर्श'मिति । इयान् विशेषः–अनुमानादिष्वपि प्रत्यक्षता । विषयभेदाद्धि प्रमाणभेदो न प्र-

---

न शक्यमुपायमन्तरेणोपेतव्यमुपेतुम् । अयमेवाऽभ्युपायो ज्ञातव्यानामर्थानामिति । तद्यथा कः शुक्लो नाम ? यत्र शुक्लत्वमस्तीत्यनेन किं समर्थितमिति वक्ष्यमाणेनाऽऽशयेनाऽऽक्षिपति । इदं समर्थितम्–यथा न शुक्लतामन्तरेण शुक्लोऽवगम्यते, तथा न ज्ञानमन्तरेण ज्ञेयमवगम्यते ; ज्ञेये चाऽनवगम्यमाने नाऽऽत्माऽवगम्यत इति ।

सम्प्रत्याक्षेपाऽऽशयमाविष्करोति–ननु चैवं शुक्लतापुरस्सरैव शुक्ले बुद्धिरुक्ता । अतो दृष्टान्तानुरूप्येण ज्ञानपुरस्सरैव ज्ञेयेऽपि बुद्धिः । एवं चाऽनभिप्रेत एवाऽर्थस्समर्थितो भवति । नाऽनभिप्रेतः । एतावदनेनोक्तम्–नोपायमन्तरेणोपेयानामुपेयत्वमिति । तत्र यथैव यस्योपायत्वं तथैव तस्य; ज्ञानस्य तूपायत्वेऽपि न तत्पुरस्सरा बुद्धिरित्युक्तम् । उपसंहरति–तस्मात्सर्वज्ञानविषयता स्थिताऽऽत्मनः सर्वैरेव प्रमाणस्मृतिविज्ञानैः ज्ञेयताऽऽत्मनः स्थिता 'अहमिदमदर्श'मित्यनेन भाष्येण । अत्र ह्येतदुक्तं—न विषयसंविदात्मसंविदा विनाऽस्तीति ।

ननु चैवमनुमानज्ञानज्ञेयत्वे सत्यनुमेयत्वमपि प्राप्नोतीत्यत्राह—अनुमानादिष्वपि प्रत्यक्षता । साक्षात्कारेण प्रतिभासमानत्वादात्मनोऽनुमा-

---

१. शा. भा. पृ. १७. प. २१. अत्र मुद्रितपुस्तके पाठभेदोऽस्ति ।

२. शा. भा. १७. २३.

मातृभेदात् । प्रमातृरूपता तु ज्ञानस्याऽनाशङ्कनीयैव, अनाशङ्कितत्वात् । युक्तं चेदं यन्नाशङ्कितम्, कर्मप्रवणत्वात् कर्मणः सकर्मकस्य । यदपि ज्ञातृतैव ज्ञानादृते न शक्यतेऽवगन्तुमिति, तदधीनत्वात्तदवगतेः; यदुक्तम् "न च रूपान्तरोपलब्धिः" इति, तदपि प्रत्युक्तम् "कामं विज्ञानमपह्नुयेत, नार्थः" इति । तस्मात् सिद्धमात्मतत्त्वमिति ।

यत् पुनर्ब्राह्मणम् "न प्रेत्य संज्ञाऽस्ति" इति, तत् पूर्वोत्तरभङ्ग्या स्वयमेव ब्राह्मणान्तरेण व्याख्यातम् । एवं चार्थवादार्थता उपपन्नैवेति 'न चैष विधिशब्दः' इत्यपि प्रत्युक्तम् । ननु च "स

---

नादिष्वपि प्रत्यक्षतैव । ननु यदि सर्वत्राऽऽत्मा प्रत्यक्षः तदा सर्वमेव प्रत्यक्षं स्यादित्यत्राऽऽह–विषयभेदाद्धि प्रमाणभेदः, न प्रमातृभेदात् । यदि प्रमातृभेदेन प्रमाणभेदः स्यात् तदा प्रमाणान्तरं न स्यात्; प्रमातुरात्मनः सर्वत्र प्रत्यक्षत्वेनैकरूपत्वात् सर्वत्र सर्वं प्रत्यक्षं स्यात् । विषयभेदे तु प्रमाणभेदः । ननु किमिति विषयभेदेनैव प्रमाणानां भेदः, यावता प्रमातृभेदेनाऽपि किमिति न भवतीत्यत्राऽऽह–प्रमातृरूपता तु ज्ञानस्यानाशङ्कनीयैव, अनाशङ्कितत्वात् केनचिद्वादिना । ननु यद्यपि केनचिन्नाऽऽशङ्कितम् तथापि किमिति वयमेव नाशङ्कामह इत्यत्राऽऽह—युक्तं चेदं यन्नाऽऽशङ्कितम्, कर्मप्रवणत्वात् कर्मणः सकर्मकस्य । कर्मप्रधानत्वात् सकर्मिकायाः क्रियाया इत्यर्थः । ततश्च प्रधानाश्रितकर्मभेदेनैव गुणभूतस्य ज्ञानस्य कर्मणो भेदो युक्तः । यदपि चोक्तम्—ज्ञातृतैव ज्ञानादृते न शक्यतेऽवगन्तुमिति, तदधीनत्वात्तदवगतेः ज्ञानाधीनत्वाज्ज्ञात्रवगतेः । अतो ज्ञानमपि ज्ञातव्यम् । यदुक्तम्—न च रूपान्तरोपलब्धिरस्ति; तस्मात् ज्ञानमेव ज्ञात्राकारमुत्पद्यते; अतो नास्ति ज्ञानातिरिक्तो ज्ञातेति । एतदपि प्रत्युक्तम् "कामं विज्ञानमपह्नुयेत, नार्थः" इति । साधितमर्थमुपसंहरति—तस्मात्सिद्धमात्मतत्त्वमिति ।

यत्पुनर्ब्राह्मणम् "न प्रेत्य संज्ञाऽस्ति" इति भूतचैतन्यप्रतिपादकम्, तत्पूर्वपक्षोत्तरपक्षभङ्ग्या स्वयमेव ब्राह्मणान्तरेण व्याख्यातम्; भूतचैतन्येन पूर्वपक्षं कृत्वा (१)"अविनाशी वा अरे अयमात्मा" इत्यादिना

---

१. बृ. उ. ४. ५. १४.

एषः" इत्युपपन्नार्थम् ; "स्वर्गं लोकं याति" इति कथम् ? अधिकृतकामसिद्धेः सिद्धम् ।

यदुक्तम् "अहंकारममकारावनात्मन्यात्माभिमानौ" इति, मृदितकषायाणामेवैतत् कथनीयम् , न कर्मसङ्गिनामित्युपरम्यते । आह च भगवान् द्वैपायनः-(१)"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" इति रहस्याधिकारे। तस्मान्न विवृतमत्र भाष्यकारेण भगवता वचनान्तरानुरोधात्, नाऽज्ञानात् इति॥

इति पञ्चमं शब्दार्थसम्बन्धनित्यत्वाधिकरणम् ॥

इत्यौत्पत्तिकसूत्रम् ॥

---

सिद्धान्तितमित्यर्थः । एवं च सिद्धे सत्यात्मन्यर्थवादार्थतोपपन्नैवेति "न चैष विचित्रशब्दः" इति यद्दूषणमुक्तम् , तदपि प्रत्युक्तम् । ननु च "स एषः" इत्युपपन्नार्थम्, "स्वर्गं लोकं याति" इति कथम् ? अत्रोत्तरम्—अधिकृतकामसिद्धेः सिद्धम् । एतदपि सिद्धं यस्मादधिकृतस्य कामः स्वर्गादिः सिध्यतीति स्थापितम्।

यदुक्तम् "अहङ्कारममकारावनात्मन्यात्माभिमानौ" इति । यावताहङ्कारममकारौ 'अहम्, मम' इति प्रत्ययौ इमावनात्मन्यात्माभिमानभूताविति । मृदितकषायाणामेवैतत्कथनीयम् । येषां कषायो रागो मृदितः तेषामेवैतत्कथनीयम् । न कर्मसङ्गिनामित्युपरम्यते । आह च भगवान् द्वैपायनः—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" इति रहस्याधिकारे । तस्मान्न विवृतमहङ्कारममकारयोरनात्मविषयत्वं भगवता भाष्यकारेण, द्वैपायनवचनानुरोधात् , नाऽज्ञानादिति ।

इति पञ्चमं शब्दार्थसम्बन्धनित्यत्वाधिकरणम् ॥

इत्यात्मवादस्थानकम् ।

---

१. श्रीमद्भगवद्गी. ३. २६.

अथ षष्ठं शब्दनित्यत्वाधिकरणम् ॥

## कर्मैके तत्र दर्शनात् ॥ ६ ॥

(१)"उक्तम्–नित्यः शब्दार्थयोस्सम्बन्धः इति; तदनुपपन्नम्" इति । केयमनुपपत्तिः ? इयमेवाऽनुपपत्तिः–अनित्ये शब्दे नित्यः शब्दार्थयोः सम्बन्धो नोपपद्यत इति । कथं तर्हि समवाये ? युतसि-

---

अथ षष्ठं शब्दनित्यत्वाधिकरणम् ॥

## कर्मैके तत्र दर्शनात् ॥ ६ ॥

"उक्तं नित्यः शब्दार्थयोः सम्बन्ध" इति तदनुपपन्नमिति । केयमनुपपत्तिरित्यनेन भाष्यमाक्षिपति । समादधाति–इयमेवानुपपत्ति, अनित्ये शब्दे नित्यः पुरुषप्रयत्नानभिनिर्वृत्तः सम्बन्धो नोपपद्यते । तथा हि—सम्बन्धो भवन्ननित्यस्य शब्दस्याऽर्थेन सह न नित्य उपपद्यते । सम्बन्धिन एवाऽनित्यत्वात् । अनित्यस्तु पुरुषप्रयत्नजन्य एव स्यात् । समयादिभिर्निर्वर्त्येत इति यावत् । न हि पुरुषप्रयत्नाभिनिष्पन्नस्य शब्दस्याऽपौरुषेयः सम्बन्ध उपपद्यते । समयादेव हि तदा वाचकता स्यात् ; न ह्युत्पन्नविनाशिनः शब्दस्य वृद्धव्यवहारादौत्पत्तिकः सम्बन्धः सिध्यति । यदि ह्यनित्यस्याऽपौरुषेयः सम्बन्धो नोपपद्यते, कथं तर्हि समवाये ? अनित्याया अपि व्यक्तेर्जात्या सह, समवायलक्षणस्सम्बन्धोऽपौरुषेयः । तथा क्रियायाः कारकैस्सह, अवयवैः सहाऽवयविनाम, गुणिभिः सह गुणानामिति । अत्रोत्तरम्—युतसिद्धयोरनुपपत्तिः । पृथक्सिद्धयोः सम्बन्धिनोः सम्बन्धस्याऽपौरुषेयत्वानुपपत्तिः, अयुतसिद्धयश्चैते व्यक्त्यादयः । का पुनर्युतसिद्धिः ? पृथगाश्रयाश्रयित्वं पृथग्गतिमत्त्वं च । नार्था हि शब्देष्वाश्रिताः ; नाप्यर्थेषु शब्दाः; अतस्ते पृथगाश्रयाश्रिताः पृथग्गतिमन्तश्च । व्यक्त्यादिषु पुनर्जातिक्रियागुणावयविनो व्यक्त्यादिभ्योऽन्यत्राऽनाश्रिताः ; व्यक्तिगुणिकारकावयवास्तु यद्यप्यन्यत्राऽऽश्रिताः, तथाप्यपृथग्गतिमन्त इत्ययुतसिद्धाः । का पुनरत्र युक्तिः ? यदयुतसिद्धानामनित्यानामप्यपौरुषेयः सम्बन्ध इति । सेयमभिधीयते—तेषां स्वरूपवत्स्वकारणेभ्य एव समवायोऽप्युत्पद्यते । न वयं वैशेषिका इव नित्यं समवायमभ्युपेमः । शब्दानां तु न स्वकारणादेवाऽर्थसम्बन्धः, प्रथमश्र-

---

१. शा. भा. १८. ११

**द्वयोरनुपपत्तेः । शब्दत्वं च निरस्तम् । ननु च गत्वाद्यन्यदनिरस्तमस्ति । न तत् , गस्य विशेषानुपलब्धेः । कथं तर्हि शुकशारिकामनुष्येषु ? अत एव स्वतो विशेषो नोपलभ्यते ; शुकशारिकामनुष्या एव हि तत्र विशेषतामापद्यन्ते । तथा च लौकिकाः 'शुकोऽयं पठति', 'मनुष्योऽयं पठति, इति विशेषानभिदधति, न पुनः 'अमुं गविशेषम्, अमुं गविशेषम्' इति । तस्मान्न नित्यता सिध्यति स-**

---

**वर्णेऽर्थानवगतेरिति । ननु च भवत्वनित्यः शब्दः, तथाऽपि सम्बन्धस्यापौरुषेयत्वमुपपद्यते ; शब्दत्वस्यैव विशेषनिविष्टस्य वाचकत्वमस्तु ; तेन नित्यत्वाद्वाचकस्योपपन्नमेवाऽपौरुषेयत्वम् ; तत्राह—**शब्दत्वं च निरस्तम् **स्फोटनिराकरणपर्वणि ।** ननु च गत्वाद्यन्यदनिरस्तमस्ति । **तेन गत्वादीन्येव वाचकानि भवन्तु; उपपन्नानि च गत्वादीनि, अनित्यत्वे गव्यक्तीनां प्रत्युच्चारणं भिन्नानामैक्यप्रतीतेः गोत्वादिवत् ।** न तत् । **यदिदमुक्तं तन्नेत्यर्थः । कुतः ?** गस्य विशेषानुपलब्धेः । **अस्यार्थः—तत्र हि सामान्यमङ्गीक्रियते यत्र हि भेदग्रहणानुबन्धमभेदग्रहणम् , यथा गवादिषु । यत्र पुनर्भेदग्रहो नाऽस्ति, तत्र भेदाग्रहणनिबन्धनोऽभेदावसायव्यपदेशः शुक्तिरजतवदिति न सामान्यकल्पनोपपत्तिः । अनित्यपक्षे चानुमानिकभेदभाजामपि गकाराणां न विशेषोपलब्धिरस्तीति भेदाग्रहण एवायमैकावसायः स्यात् । एतेन ज्वालादिषु ज्वालात्वादि प्रतिक्षिप्तम् । अत एव ज्वालादिषु तत्त्वाभिमानो भ्रान्तिरित्युच्यते; अन्यथा सामान्यविषयत्वादभ्रान्तितैव स्यात् । तद्यथोक्तम्—**

> **"ज्वालादेः क्षणिकत्वेऽपि प्रत्यभिज्ञेति चेन्न तत् ।**
> **तत्रापि प्रत्यभिज्ञेयं सामान्यं नित्यमेव न ॥**
> **भेदबुद्धिस्तु यत्रांशे स्यात् केनचिदुपाधिना ।**
> **न तत्र प्रत्यभिज्ञानं भेदबुद्ध्यैव वारितम ॥" इति ।**

**इह च गस्य विशेषो नोपलभ्यते; तेन भेदाग्रहनिमित्त एवाऽयमेकताबोधभ्रम इति न गत्वादिकमस्ति । यदि गस्य विशेषानुपलब्धिः** कथं तर्हि शुकशारिकामनुष्येषु **भेदप्रतीतिः ? यत एव शुकादिभेदेन भेदप्रतीतिः,** अत एव स्वतो विशेषो नोपलभ्यते; शुकशारिकामनुष्या एव हि तत्र विशेषतामापद्यन्ते । **वक्तृभेदमात्रनिबन्ध एव तत्र भेदः, न स्वतः । तथा च समाने वक्तरि न मनागपि विशेष इति । प्रकृतमुपसंहरति—**तस्मान्न नित्यता सिध्यति सम्ब-

म्बन्धस्य । अतः शब्दस्य नित्यत्वं वक्तव्यम् ; तदिदमाक्षेपपूर्वकमुच्यते—"कर्मैके तत्र दर्शनात्" इति ।

ननु चैवं सति कृतकोऽपि सम्बन्धो नोपपद्यते । ततः किम् ? लौकिकव्यवहारोच्छेदः । पुनस्ततः किम् ? अनित्यत्वप्रतिज्ञा नोपपद्यते ; लौकिकव्यवहारविरोधात् बलान्नित्यता प्राप्नोति । (१)लौकिकव्यवहारविरोधादनित्यता मा भूत् ; नित्यतापत्तेः किमायातम् ? इदमायातम्—लौकिकव्यवहारानुपपत्तिरेव । सत्यमेवम् ; यदि प्रत्यस्तमितं समयेन ; न ह्यविषयः समयस्याऽस्ति; सर्वानुपपत्त्यार्तिहरोऽयं समयः ।

---

न्धस्य । अतः शब्दस्य नित्यत्वं वक्तव्यम् । तदिदमाक्षेपपूर्वकमुच्यते "कर्मैके तत्र दर्शनात्" इति ।

पूर्वपक्षभावेनाऽधिकरणमाचिक्षिप्सुराह—ननु चैव सति कृतकोऽपि सम्बन्धो नोपपद्यते । उदितमात्रनश्वरस्य सम्बन्धकरणे प्रयोजनाभावात् । न हि कृतकसम्बन्धेन पुनर्व्यवहर्तव्यम्, तस्य तदानीमेव विनष्टत्वात्; अन्यस्य च पुनरुत्पन्नत्वात् इत्यनित्ये शब्दे कृतकोऽपि सम्बन्धो नोपपद्यते । समाधित्सुः पृच्छति–ततः किमिति । आक्षेप्ताऽऽह—लौकिकव्यवहारोच्छेद इति । पुनरपि समाधाताऽऽह—पुनस्ततः किमिति । आक्षेप्ताऽऽह—अनित्यत्वप्रतिज्ञा नोपपद्यते; लौकिकव्यवहारविरोधात् बलात् नित्यता प्राप्नोति । समाधातैकदेश्याह—लौकिकव्यवहारविरोधादनित्यता मा भूत् ; नित्यतापत्तेः किमायातम् ? आक्षेप्ता निराकरोति—इदमायातम् । ननु लौकिकव्यवहारानुपपत्तिरेवायातेति । समाधाताऽऽह–सत्यमेवम् । नित्यताऽऽपद्येतैव, यदि प्रत्यस्तमितं समयेन । भाव निष्ठा । समयो लोकव्यवहारहेतुरस्तीत्यर्थः ।

किंविषयः पुनः समयो व्यवहारहेतुः ? न तावच्छब्दविषयः, तस्य भङ्गुरस्य समयव्यवहारानुवृत्त्ययोगात् ; तत्राऽऽह—न ह्यविषयः समयस्यास्ति ; सर्वानुपपत्त्यार्तिहरोऽयं समय इति । अस्याऽर्थः–योऽयं प्रत्युच्चारणं भिन्नेष्वपि वर्णेषु भेदाग्रहनिबन्धनोऽभेदभ्रमः, तद्विषयः समयः । न च व्यवहारविसंवादः, अभिप्रायाविसंवादात् ; प्रमाणान्तरेण ह्यर्थं प्रती-

१. अविरोधादिति क. पु.

तस्मात् शब्दप्रमाणकानां न व्यवहारदर्शनमात्रेण प्रामाण्यं सिध्यति । तस्मान्नित्यत्वे यत्नः कर्तव्योऽभिधानस्य । स चायमारब्धः, वृद्धव्यवहारपूर्वकत्वात् सम्बन्धज्ञानस्य सम्बन्धज्ञानपूर्वकत्वाच्चाऽर्थावगतेः । न च क्षणिकत्वेऽपि चक्षुरादीनामिव प्रामाण्यसिद्धिः, प्रथमश्रवणानवगमात् । "कर्मैके तत्र दर्शनात्" इति कृतकत्वं शब्दस्योच्यते; किमिदं कृतकत्वम् ? पुरुषप्रयत्नेनोत्पत्तिः ।

नन्वप्रयत्नपूर्विकाऽपि शब्दस्योत्पत्तिर्दृष्टा यथा छलच्छलादेः । नायं दोषः, अभिधानाधिकारात् । न चेदमभिधानमप्रयत्नपूर्वकं

---

स्य तत्प्रतिपादनाभिप्रायेण पुरुषा भ्रान्त्याऽरूढैकत्वान् शब्दान् समयकरणकालभाविताभिमानेन प्रयुञ्जते । प्रतिपत्ताऽपि तेनैवाऽभिमानेन तदभिप्रायान्तर्भावमुखेनार्थं प्रतिपद्यत इत्यभिप्रायाव्यभिचारेणाऽर्थसिद्धिः; ततश्च व्यवहार इति । वैदिकस्तु व्यवहारः शब्दैकनिबन्धन इति न समयस्तत्र हेतुः; तदाह—तस्माच्छब्दप्रमाणकानां न व्यवहारदर्शनमात्रेण प्रामाण्यं सिध्यति । तस्मान्नित्यत्वे यत्नः कर्तव्योऽभिधानस्य। स चाऽयमारब्धः ।

ननु च क्षणिकत्वेऽपि शब्दस्य पुरुषानपेक्षमेवाऽर्थेषु प्रामाण्यं किमिति न भवति ? यथा अनित्यानामपि चक्षुरादीनां स्वतःप्रामाण्यमित्यत्राऽऽह—वृद्धव्यवहारपूर्वकत्वात् सम्बन्धज्ञानस्य; सम्बन्धज्ञानपूर्वकत्वाच्चार्थावगतेः क्षणिकत्वे चक्षुरादीनामिव न प्रामाण्यसिद्धिः । सम्बन्धज्ञानसापेक्षत्वमेव कुत इत्यत्राऽऽह—प्रथमश्रवणेऽर्थानवगमात् । "कर्मैके तत्र दर्शनात्" इति कृतकत्वं शब्दस्योच्यते; किमिदं कृतकत्वम्? अयमाशयः—यदि सर्वशब्दानधिकृत्य कृतकत्वं कृत्रिमत्वमुच्यते, तदा प्रयत्नानन्तरदर्शनादिति भागासिद्धो हेतुः, समुद्रघोषादिष्वभावात् । पक्षश्च प्रमाणान्तरविरुद्धः । अथाऽभिधानात्मकानेव पक्षीकृत्य प्रयत्नजत्वं साध्यते, तदाऽनभिधायकानां कृतकता न साधिता स्यादिति भावः ।

उत्तरम्—पुरुषप्रयत्नेनोत्पत्तिः कृतकत्वमुच्यते । अभिधानात्मकानामेव प्रयत्नेनोत्पत्तिस्साध्यत इत्याशयः ।

आशयमबुध्वा चोदयति—नन्वप्रयत्नपूर्विकापि शब्दस्योत्पत्तिर्दृष्टा यथा छलच्छलादेः । नायं दोषः, अभिधानाधिकारात् । अभिधानस्यैव हि प्रामाण्यं प्रतिज्ञातम्; तेन तस्यैवाऽपौरुषेयसम्बन्धप्रतिपादनायेदमुच्यते । न चेदमभिधानमप्रयत्नपूर्वकं दृश्यते; अतः क्रियानन्तरोपलब्धेः तथैवो-

दृश्यते । अतः क्रियानन्तरोपलब्धस्तथैवोत्पद्यत इति मन्यामहे । कथं तर्हि मूलोदकादिषु ? अन्यतोऽस्तित्वावगतेः ; शब्दे पुनः प्रयत्नानन्तरैवोपलब्धिः । तस्मान्न विद्यमानस्य प्रयत्नोऽभिव्यञ्जक इति शक्यते वक्तुम् ।

नन्विदमस्ति प्रयत्नात् पूर्वमस्तित्वे प्रमाणम् । किमिदमस्ति ? सप्रत्यभिज्ञं प्रत्यक्षम् । कथमत्र प्रत्यभिज्ञानम् अन्यत्वानवगमात् ? अनित्यत्ववादिनो वा किमन्यत्वेनाऽवगतिरस्ति ? किमिति नास्ति प्रध्वस्तोत्पन्नयोः ? विशेषाग्रहणात् । किं विशेषाग्रहणनिबन्धनैव

---

त्पद्यत इति मन्यामहे । आक्षिपति—कथं तर्हि मूलोदकादिषु ? मूलोदकादीनि प्रयत्नानन्तरोपलब्धान्यपि न प्रयत्नजन्यानि । अत्र समाधिः—अन्यतोऽस्तित्वावगतेः । प्रमाणान्तरेण मूलोदकादीनि प्रयत्नात्प्रागवगतसत्त्वानीति न तेषां प्रयत्नो जनयिता ; शब्दे पुनः प्रयत्नानन्तरैवोपलब्धिः । तस्मान्न विद्यमानस्य प्रयत्नोऽभिव्यञ्जक इति शक्यते वक्तुम् ।

ननु शब्दस्यापि प्रयत्नात् पूर्वमस्तित्वे इदमस्ति प्रमाणम् । (१)किमिदमस्ति ? सप्रत्यभिज्ञं प्रत्यक्षम् । प्रत्यभिज्ञानेन शब्दस्यैकतां गृह्णता सिद्धे प्राक् सत्त्वे पूर्वोत्तरयोः प्रयत्नयोरुत्तरः प्रयत्नोऽनुत्पादक इति सिध्यति; सिद्धे चैवं पूर्वोऽप्यभिव्यञ्जक इति सिद्धमुत्तरप्रयत्नवत् ; न हि स एव तस्योत्पादकोऽभिव्यञ्जकश्च युज्यते । समर्थयिताऽऽह—कथमत्र प्रत्यभिज्ञानम् ? अन्यत्वानवगमात् । अस्यार्थः—अन्यत्वावगमपूर्वकं हि यत्राऽभेदज्ञानम्, तत्र प्रत्यभिज्ञा भवति ; अन्यत्वानवगमे तु भेदाग्रहणनिबन्धन एवैकावसायभ्रमः ।

आक्षेपक आह—अनित्यत्ववादिनो वा किमन्यत्वेनाऽवगतिरस्ति ? अस्यार्थः—भेदाग्रहणनिबन्धना तत्रैकतावबोधभ्रान्तिरङ्गीक्रियते, यत्राऽन्यत्वमवगम्यते; न चाऽत्रानित्यत्ववादिनोऽपि अन्यत्वप्रतीतिरस्ति । समर्थक आह—किमिति नास्त्यन्यत्वेनाऽवगतिः प्रध्वस्तोत्पन्नयोः ? प्रध्वस्तस्योत्पन्नस्य च व्यक्तमन्यत्वम । आक्षेपक आह—विशेषाग्रहणादन्यत्वं नाऽवगम्यत इति । समर्थक आह—किं विशेषाग्रहनिबन्धनैव प्रत्यभिज्ञा ? यदि विशेषाग्रहनिबन्धनैव प्रत्यभिज्ञा ज्वालादिष्वपि तथा स्यादिति मन्यते । आक्षेपक

१. किमीस्त. इति. क. पु.

प्रत्यभिज्ञा ? किं वा मन्यते भवान् ? कर्मण्यपि प्रत्यभिज्ञा प्राप्नोति । स्वरूपग्रहणे सतीदमुच्यते ; आनुमानिकं च कर्म—इत्युक्तम् । का वार्ता ज्वालादिषु ? नित्यत्वे ज्वालादीनामनुमानविरोध इति चेत्, तुल्यमभिधानेऽप्यस्थानादेः । तस्मात् विशेषाग्रहणेऽप्यन्यता ; अन्यत्वे च सिद्धा प्रयत्नानन्तरोपलब्धेः प्रयत्नेनोत्पत्तिः ॥६॥

## अस्थानात ॥ ७ ॥

ननु च प्रयत्नोत्पन्नानामपि कालान्तरावस्थायितया(१) नैव

---

आह-किं वा मन्यते भवान् ? एवमेवेत्यर्थः । समर्थक आह—कर्मण्यपि प्रत्यभिज्ञा प्राप्नोति । तत्रापि विशेषाग्रहणादिति भावः ।

आक्षेपक आह—स्वरूपग्रहणे सतीदमुच्यते ! विशेषाग्रहणनिबन्धना प्रत्यभिज्ञेति यदिदमुच्यते, तत्स्वरूपग्रहणे सति । आनुमानिकं च कर्म । तेन तत्र स्वरूपग्रहणं नास्तीति विशेषाग्रहणेऽपि न प्रत्यभिज्ञा । शब्दानां तु स्वरूपग्रहणमस्तीति युक्ता तत्र प्रत्यभिज्ञा । समर्थक आह—का वार्ता ज्वालादिषु ? ज्वालादीनां तु स्वरूपं प्रत्यक्षेण गृह्यते ; भेदश्च नाऽवगम्यते ; तेन तत्राऽपि तर्हि भवतः प्रत्यभिज्ञाऽभिप्रेता ? समर्थक एवाऽऽक्षेपकस्याऽऽशयमाशङ्कते-नित्यत्वे ज्वालादीनामनुमानविरोध इति चेत्; ज्वालादीनां नित्यत्वे स्थिरत्वेऽङ्गीक्रियमाणेऽनुमानविरोधः ; ज्वालायां प्रभामण्डलवितत्या तेजोऽवयवानां विशरणमवगम्यते; विशीर्णावयवश्चाऽवयवी विनष्टः; पुनरुपलभ्यिश्च ज्वालान्तरस्योत्पन्नत्वादित्यनुमानेन ज्वालादीनामन्यत्वमवसीयत इत्यनुमानविरोधात् भेदाग्रहणनिबन्धन एवैकात्वगमभ्रमः, न प्रत्यभिज्ञेति चेत् । सम्प्रति दूषयति—तुल्यमभिधानेऽप्यस्थानादेः । अस्थानादिहेतुभिरत्राप्यनुमानविरोध इति तुल्यम् ; अतः कथमत्राऽपि प्रत्यभिज्ञा ? उपसंहरति—तस्माद्विशेषाग्रहणेऽपि प्रत्यक्षतः, अनुमानताऽन्यता ; अन्यत्वे च सति प्रयत्नात्प्रागसत्त्वसिद्धेः सिद्धा प्रयत्नानन्तरोपलब्धेः प्रयत्नेनोत्पत्तिः ॥ ७ ॥

## अस्थानात ॥ ७ ॥

ननु च प्रयत्नोत्पन्नानामपि कालान्तरावस्थायितया नैव व्यवहारानुपपत्तिः घटादीनां कारकाणाम् । ज्ञापकस्याप्युत्पन्नस्य चक्षुरादेः स्वाभाविकं पुरुष-

---

१. न व्याहा. इति. क. पु.

व्यवहारानुपपत्तिः; उत्पन्नस्याऽपि चक्षुरादेः स्वाभाविकं रूपग्रहणसामर्थ्यं नैव विहन्यते । सत्यम् ; नैतच्छब्दे, अस्थानात् ।

ननु चक्षुषोऽस्थानत्वेऽपि रूपग्रहणशक्तिर्नैव विहन्यते, तद्वच्छब्देऽपीति चेत् , प्रत्युक्तं प्रथमश्रवणानवगतेः । तस्मात् 'अस्थानात्' इत्ययं हेतुरौत्पत्तिकत्वविघाती सम्बन्धस्य । यदि कालान्तरावस्थायिता स्यात् , स्यादपि व्यवहाराच्छब्दादर्थावगतिः ; अस्थायित्वे पुनः समय एव शरणं भवितुमर्हतीत्युक्तम्—"अस्थानात्" इति ॥ ७ ॥

## करोतिशब्दात् ॥ ८ ॥

लौकिकमप्यभिधानम(१)मुमेव न्यायमनुवर्तते । काऽत्र न्यायानुवृत्तिः ? मुख्यार्थता करोतेः—शब्दं कुरु, शब्दं मा कार्षीः, शब्दकार्ययं माणवक इति ॥ ८ ॥

---

**प्रयत्नानपेक्षं** रूपग्रहणसामर्थ्यं नैव विहन्यते ; **तथा शब्दस्याऽपि प्रयत्नोत्पन्नस्य पुरुषानपेक्षमेव ज्ञापकत्वमस्त्विति ।** सत्यमेतच्चक्षुरादिषु ; **शब्दे त्वेतन्नाऽस्ति ; कुतः ?** अस्थानात । (१)**उत्पत्तिमात्रविनष्टत्वादित्यर्थः ।**

**पुनरपि चोदयति**—ननु चक्षुषोऽस्थानत्वेऽप्युन्मीलिततत्क्षणनिमीलितस्य रूपग्रहणशक्तिर्नैव विहन्यते, तद्वच्छब्देऽपीति चेत ; **उत्तरम्**—प्रत्युक्तं प्रथमश्रवणानवगतेरिति । **सम्बन्धग्रहणसापेक्षस्य प्रत्यायकत्वम ; न च तत्क्षणिकस्य भवतीत्यर्थः ।** तस्मात् 'अस्थानात्' इत्ययं हेतुरात्पत्तिकत्वविघाती सम्बन्धस्य । यदि कालान्तरावस्थायिता स्यात् , स्यादपि व्यवहाराच्छब्दादर्थावगतिः । अस्थायित्वे पुनः समय एव शरणं भवितुमर्हतीत्युक्तम्—अस्थानादिति ॥ ७ ॥

## करोतिशब्दात् ॥ ८ ॥

लौकिकमप्यभिधानममुमेव न्यायमनुवर्तते । काऽत्र न्यायानुवृत्तिः ? मुख्यार्थता करोतेः—शब्दं कुरु, शब्दं मा कार्षीः, शब्दकार्ययं माणवक इति । **अभूतप्रादुर्भावनं करोत्यर्थः ; स मुख्यो भवत्यनित्यत्वपक्षे । विधिनिषेधसिद्धार्थत्वेनोदाहरणत्रयम् ॥**

---

१. इममेव. इति. ख. पु. २. उत्पन्नमात्र. इति. क. पु.

## सत्वान्तरे च यौगपद्यात् ॥ ९ ॥

(१)"नानादेशेषु च युगपच्छब्दमुपलभामहे; तदेकस्य नित्यस्याऽनुपपन्नमिति" कथमनुपपत्तिः ? इयमनुपपत्तिः—युगपदेकस्यानेकत्रोपलब्धिर्न दृष्टा । ततः किम् ? इदं ततो भवति—(२)अन्यत्वम् । ननु च साधितमन्यत्वम् । सत्यं साधितम्; हेतुप्रचयस्तु प्रदर्श्यते । को लाभः ? न खलु कश्चित् । न चेत् कश्चित्, हेतुप्रचयेन किम् ? सत्यं यथा भवानाह; किन्त्वयमेवाऽर्थो राद्धान्तमाक्षिपति । तस्मात् तद्भ्रमप्रतिषेधार्थोऽयमारम्भः, न ह्यनुपन्यस्तस्य भ्रान्तिता शक्यते वक्तुम्; अप्रदर्शिते च भ्रान्तित्वेऽपुनरुक्तोऽयं भवति कस्यचिन्मन्दधियः । सर्वार्थं चेदं शास्त्रं "मन्दविषणापि" इति दर्शितं भाष्यकारेण ।

---

## सत्वान्तरे च यौगपद्यात् ॥ ९ ॥

नानादेशेषु च युगपच्छब्दमुपलभामहे; तदेकस्य नित्यस्याऽनुपपन्नमिति **भाष्यमनुभाषितम् । आक्षिपति**—कथमनुपपत्तिः ? **उत्तरम्**—इयमनुपपत्तिः—**युगपदेकस्य देवदत्तादेरनेकत्रोपलब्धिर्न दृष्टा; क्रमेण तु दृश्यत एव । यद्येवं** ततः किम् ? **उत्तरम्**—ततोऽन्यत्वम्; **एकस्मात् व्यावृत्ता युगपदनेकत्रोपलब्धिरन्यत्वं साधयति** । ननु च साधितमन्यत्वम् । **अतः पुनरुक्तमिति यावत् । उत्तरम्**—सत्यं साधितम्; हेतुप्रचयस्तु प्रदर्श्यते । **पूर्वं हेत्वन्तरेणान्यत्वमुक्तम्; सम्प्रति हेत्वन्तरमुच्यते** । को लाभः ? **हेतुप्रचयदर्शने साध्यस्याऽभेदान्न कश्चिल्लाभ इत्यर्थः । उत्तरम्**—न खलु कश्चिदिति । **साध्याभेदात् । चोदयति**—न चेत्कश्चित्, हेतुप्रचयेन किम् ? **उत्तरम्**—सत्यं यथा भवानाह; किन्त्वयमेवार्थो राद्धान्तमाक्षिपति । **अनिराकृतोऽयमर्थः सिद्धान्तमाक्षिपतीति कस्यचिद्भ्रान्तिः स्यात्** । तस्मात् तद्भ्रमप्रतिषेधार्थोऽयमारम्भः । **तदिदं विवृणोति**—न ह्यनुपन्यस्तस्य भ्रान्तिता शक्यते वक्तुम्; अप्रदर्शिते च भ्रान्तित्वेऽपुनरुक्तोऽयं भवति कस्यचिन्मन्दधियः । **ननु मन्दधिय एवायं भ्रमो न तीक्ष्णधियः; ततः किमित्यनेनोक्तेनेत्यत्राऽऽह**—सर्वार्थं चेदं शास्त्रं "मन्दविशेणापि" इति दर्शितं भाष्यकारेण ।

---

१. शा. भा. १८. २७. २. अनित्यत्वं, इति. क. पु.

(१)"असति विशेषे नित्यस्य नाऽनेकत्वम्" इति । किमिदम्—असति विशेषे नित्यस्य नानेकत्वमिति ? 'असति विशेषे नानात्वं नास्ति' इति शक्यते वक्तुं नित्यस्याऽनित्यस्य वा; नित्यग्रहणं न विद्मः। यद्यनित्यस्याऽसत्यपि विशेषे नानात्वं स्यात्, युक्तं वक्तुम् 'नित्यस्य' इति। तस्माद्वर्णनीयोऽयं ग्रन्थः। वर्ण्यते तर्हि—गवादेरेकस्याऽनेकत्र युगपदुपलब्धिर्दृष्टा नित्यस्य सतः; तस्मात् "सत्त्वान्तरे च यौगपद्यात्" इत्यस्याऽनेनाऽन्यथासिद्धिराशङ्किता; तस्येदमुत्तरम्–'असति विशेषे' इति। किं गवादेर्विशेषो विद्यते ? तदपि ह्यक्रमविशिष्टम्; न ह्यन्यच्छाबलेये अन्यच्च बाहुलेये।

अथाऽयमभिप्रायः—असत्याश्रयविशेषे–इति। तत्राप्याश्र-

असति विशेषे नित्यस्य नानेकत्वमिति भाष्यमनुभाषितम्। आक्षिपति—किमिदमसति विशेषे नित्यस्य नानेकत्वमिति 'असति विशेषे नानात्वं नास्ति' इति शक्यते वक्तुं नित्यस्याऽनित्यस्य वा; नित्यग्रहणं न विद्मः। सामान्येनापि शक्यते वक्तुं नित्यग्रहणमफलमिति। यद्यनित्यस्याऽसत्यपि विशेषे नानात्वं स्यात्, युक्तं नित्यस्येति विशेषणम्; न त्वेतदस्ति। तस्माद्वर्णनीयोऽयं ग्रन्थः। वर्ण्यते तर्हि–गवादेरेकस्यानेकत्र युगपदुपलब्धिर्दृष्टा नित्यस्य सतः। तस्मात् "सत्त्वान्तरे च यौगपद्यात्" इत्यस्य हेतोरनेन भाष्येणान्यथासिद्धिराशङ्किता—नित्यस्य नानादेशेषु युगपदुपलब्धिरेकस्यापीति; तस्येदमुत्तरम्–'असति विशेषे' इति।

पुनराक्षिपति—किं वा गवादेर्विशेषो विद्यते ? तदपि ह्यक्रमविशिष्टम्; न ह्यन्यच्छाबलेयेऽन्यच्च बाहुलेये। अस्यार्थः–हेतुसमर्थनवादिना हि त्वयैवमुच्यते, यदिदं नित्यत्वेनैकस्यानेकत्र दर्शनम्, तद्विशेषे सति गवादेः; न च शब्दस्य विशेषोऽस्ति। तस्मान्न नित्यत्वेनेदमनेकत्र दर्शनम्; किन्तु तत्र तत्रोत्पन्नत्वेनैवेति। एवं च वदतस्तवाऽयमभिप्रायो लक्ष्यते–गवादेर्विशेषो विद्यत इति। स चायमभिप्रायस्तेऽनुपपन्नः गवादेरपि विशेषाभावात्।

अथायमभिप्रायस्ते–असत्याश्रयविशेषे गोत्वस्याऽपि विशेषो नाऽस्ति, सति त्वाश्रयविशेषे गोत्वस्यापि विशेष इति; अयमपि तवाभिप्रायोऽयु-

१. शा. भा. १. १८. २८.

यस्यैवाऽन्यत्वम् ; किमायातमाश्रयिणः ? तस्मान्नित्यस्याऽप्येकस्याऽनेकत्र युगपदुपलब्धिर्दृष्टा । अतो नाऽन्यत्वे युगपद्दर्शनं हेतुः ।

अथेदं मतम्——नैव गवादेर्युगपद्दर्शनमनेकत्र ; भेदा एव हि तत्रानेकदेशतया गृह्यन्ते, न गोत्वमिति । कथं तर्हि सर्वेषु 'गौः', 'गौः' इति बुद्धिः ? अत एवाऽनेकदेशत्वं गोत्वस्य नाऽस्ति । अन्यथा हि 'इह गोत्वम्', 'इह गोत्वम्' इति स्यात् । कथं तर्हि——इह प्रत्ययात् समवायः ? एकद्रव्यपदार्थाभिप्रायं तत्, न व्यक्त्यभिप्रायम् । तस्माद्धेतुरन्यत्वे युगपद्दर्शनम् । 'असति विशेषे' इति च युक्तं

---

क एव ; यतस्त त्राप्याऽश्रयस्यैवान्यत्वम् ; किमायातमाश्रयिणः ? न ह्याश्रयभेदेनाऽऽश्रयी भिद्यते, अन्यत्वात्तयोः । तस्मान्नित्यस्याप्येकस्याऽनेकत्र युगपदुपलब्धिर्दृष्टा । अतो नित्यत्वेनाप्येकस्यानेकत्रोपलब्धिसिद्धेर्नान्यत्वे युगपद्दर्शनं हेतुः ।

अथेद मतम्——नैव गवादेर्युगपद्दर्शनमनेकत्र, भेदा एव हि तत्रानेकदेशतया गृह्यन्ते, न गोत्वमिति । अनेन समर्थनवादिनोऽभिप्रायान्तरमाशङ्कते पूर्वपक्षाक्षेपवादी । अर्थस्तु—अथेदं तव समर्थनं समर्थनवादिनो मतम्—येयमन्यथासिद्धिराशङ्किता, सा असिद्धत्वेनैव परिह्रियते ; असति विशेषे गोत्वादेरनेकत्वं नास्ति । गोत्वादेर्विशेषो नास्ति । विशेषाभावे च नानेकत्वम् । यदि चाऽनेकत्र युगपदुपलभ्यते, तदा नियतमनेकत्वं स्यात् ; तच्च नास्ति । तस्मादनेकत्रोपलब्धिरेव गोत्वस्य नास्ति । भेदा एवानेकत्रोपलभ्यन्ते, न गोत्वम् । अतो नित्यत्वेनाऽप्येकस्याऽनेकत्रोपलब्धिर्भवतीति न किञ्चित्सद्धमिति । सम्प्रति दूषयति—कथं तर्हि सर्वेषु गौर्गौरिति बुद्धिः ? अस्यार्थः——गोत्वमनेकासु व्यक्तिषु प्रतीयमानमनेकप्रदेशमिव प्रतीयते । अथाऽनेकासु व्यक्तिषु गोत्वं न प्रतीयते, कथं तर्हि सर्वेषु पिण्डेषु गौर्गौरिति बुद्धिः ? विशेषसमवायपरिकल्पननिबन्धना हि विशिष्टबुद्धिः । समर्थनवाद्याह—यत एव गौर्गौरिति बुद्धिः अत एवानेकदेशत्वं गोत्वस्य नास्ति । अन्यथा हि यदि व्यक्तिर्गोत्वस्य देशत्वेन प्रतीयते, 'इह गोत्वम्', 'इह गोत्वम्' इति स्यात् । न चैवमस्ति । तस्मान्न देशतया व्यक्तिः प्रतीयते । कथं तर्हि "इहप्रत्ययात्समवायः" ? योऽयम् "इह प्रत्ययात्समवायः" इति पदार्थविदामुद्गारः, स कथमित्याक्षेपः । उत्तरम्——एकद्रव्यपदार्थाभिप्रायं तत्, न व्यक्त्यभिप्रायम् । अस्यार्थः——एकद्र-

विशेषग्रहणम् । ननु चाऽनित्यस्याऽप्यसति विशेषे नैवाऽन्यत्वम् । बाढमस्ति ज्वालादिषु; कार्यत्वाच्चाऽविरोधः । नित्यस्य त्वकार्यत्वादनेकत्वविरोध इति युक्तो हेतुः ॥ ९ ॥

प्रकृतिविकृत्योश्च ॥ १० ॥

प्रकृतिविकारभावश्च शब्दस्य शब्दज्ञाः स्मरन्ति; न चायं

व्यश्चासौ पदार्थश्चेति; एकद्रव्यपदार्थशब्देन कर्मपदार्थ उच्यते; कर्मपदार्थ एवैकद्रव्यः एकद्रव्यमाश्रयभूतं तस्यैव, न द्रव्यपदार्थस्य गुणपदार्थस्य वा; द्रव्यपदार्थो ह्यद्रव्याश्रितो भवति परमाण्वाकाशादिः । अनेकद्रव्याश्रितोऽपि भवति घटादिः । गुणपदार्थस्त्वनेकद्रव्याश्रितः; यथा संयोगविभागद्वित्वादिसंख्यात्मकोऽनेकद्रव्याश्रितः, रूपादिरेकद्रव्याश्रितः; कर्मपदार्थस्त्वेकस्मिन्नेव द्रव्ये वर्तते । तदाह भगवान् काश्यपः—"एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षं कारणं कर्मलक्षणम्" इति तेनैकपदार्थाभिप्रायेणेदमुच्यते "इहप्रत्ययात्समवायः" इति, न व्यक्त्यभिप्रायेण । न व्यक्तावपि इहप्रत्ययो जात्यपेक्षयेति। का पुनरत्र युक्तिः ? इयमुच्यते—कर्मपदार्थो ह्यनुमेयः, तेन तद्ग्रहे द्रव्यं गृहीतं सत् पुनस्तदनुमानसमये शक्यमिहप्रत्ययेनालम्बितुम्; जातिस्तु न भिन्नप्रमाणग्राह्या; धर्मी च गृह्यमाणाऽवश्यं येन केनचिद्धर्मेणालिङ्गितो ग्रहीतव्यः; सर्वा हि प्रतीतिः 'एवम्' इति भवति; एवंशब्दः प्रकारार्थः; प्रकारश्च धर्मः; तत्र जातिः धर्मिप्रतीतावनुप्रविष्टेति न तदपेक्षया धर्मी इहप्रत्ययविमर्शमर्हतीति । अतो धर्मधर्मितयैव जातिव्यक्त्योः प्रतीतिः, नाधाराधेयतया । तस्मादन्यथासिध्यभावाद्धेतुरन्यत्वे युगपद्दर्शनम् । "असति विशेष" इति च युक्तं भाष्यमन्यथासिद्धिपरिहारार्थम् ।

ननु चानित्यस्याप्यसति विशेषे नैवान्यत्वम्; अतः किमर्थं नित्यस्येति कृतम् ? बाढम्, अतिशयेनाऽसत्यपि विशेषेऽनेकत्वमनित्यस्यास्ति यथा ज्वालादिषु; तत्राऽनेकत्वं ज्वालादीनामविरुद्धम्, कार्यत्वात्; कार्यं हि तत्र तत्र क्रियमाणं युक्तमनेकम्; तदाह—कार्यत्वाच्चाविरोध इति । नित्यस्य त्वकार्यत्वादनेकत्वविरोध इति युक्तो हेतुः "सत्त्वान्तरे च यौगपद्यात्" इति ॥ ९ ॥

प्रकृतिविकृत्योश्च ॥ १० ॥

प्रकृतिविकारभावं च शब्दस्य शब्दज्ञाः स्मरन्ति; न चायं नित्यस्योपपद्यते; त-

नित्यस्योपपद्यते; तस्मात् स्मृतिरपि पूर्वोक्तहेत्वनुगुणैव । सादृश्यमप्यनुगुणमुपलभामह इत्युपपन्नं कार्यत्वम् ॥ १० ॥

## वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥

कारणवृद्ध्यनुगमाच्च कार्यत्वं मन्यामहे ज्वालादीनामिव । तस्मादनुपलभ्यमानावयवस्याऽप्यवयववृद्धिरनुमीयते; ज्वालैवात्र निदर्शनम् ॥

## समं तु तत्र दर्शनम् ॥ १२ ॥ (सि) ॥

"समं तु तत्र दर्शनम्" । किमिदं समं दर्शनम् ? इदं तत् समं दर्शनम्—कार्ये चाऽकार्ये च तुल्यो हेतुरिति । कथं तुल्यता ? सांन्यासिकतया । किमत्र संन्यस्तम् ? इदमत्र संन्यस्तम्—यदि सप्रत्यभिज्ञप्रत्यक्षग्राह्यतां वक्ष्याम इति । ननूक्तं तत् परिहृतं च--ज्वालादिष्विवानुमाने प्रत्यर्थिनि न शक्यत एकतां वक्तु-

---

स्मात्स्मृतिरपि पूर्वोक्तहेत्वनुगुणैव। सादृश्यमप्यनुगुणमुपलभामह इत्युपपन्नं कार्यम् ॥

## वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥

ननु च निरवयवस्य शब्दस्य कथं महत्त्वम् ? सावयवस्य महत्वं कारणबहुत्वात् कारणविशेषप्रचयाच्च भवतीति । अत्रोपसंहरन्नाह--तस्मादनुपलभ्यमानावयवस्याऽप्यवयववृद्धिरनुमीयते ; ज्वालैवात्र निदर्शनम् ॥

## समं तु तत्र दर्शनम् ॥ १२ ॥ (सि)

समं तु तत्र दर्शनम् । किमिदं समं दर्शनम् ? इदं तत् समं दर्शनम्—कार्ये चाऽकार्ये च तुल्यो हेतुरिति । कथं तुल्यता ? सांन्यासिकतया । किमत्र संन्यस्तम् ? इदमत्र संन्यस्तम्--यदि सप्रत्यभिज्ञप्रत्यक्षग्राह्यतां वक्ष्याम इति । **यदि सप्रत्यभिज्ञप्रत्यक्षग्राह्यता शब्दस्य स्यात, तदा प्रयत्नानन्तरदर्शनं प्रयत्नस्याभिव्यञ्जकतया भविष्यति ; अथ सप्रत्यभिज्ञप्रत्यक्षग्राह्यता शब्दस्य न स्यात, तदा प्रयत्नः शब्दस्य कारक एवेति** । ननूक्तं तत्—**सप्रत्यभिज्ञं प्रत्यक्षम्** । परिहृतं च—ज्वालादिष्विवानुमाने प्रत्यर्थिनि न शक्यत एकतां वक्तुमिति । सत्यम्; यदि भेदाग्रहणनिबन्धनैव प्रत्यभिज्ञोच्येत ; तदग्रहणनिबन्धना सेति प्रतिपादयिष्यते । **अस्यार्थः—यदि भेदाग्रहणमात्रं प्रत्यभिज्ञा**

मिति । सत्यम्; यदि भेदाग्रहणनिबन्धनैव प्रत्यभिज्ञोच्येत; तद्ग्रहणनिबन्धना सा — इति प्रतिपादयिष्यामः । तस्मादुपपन्नम्—'समं तु तत्र दर्शनम्" इति ॥ १२ ॥

## सतः परमदर्शनं विषयानागमात् ॥ १३ ॥

"सतः परमदर्शनं विषयानागमात्" इति तद्वदनैकान्तिकमदर्शनमपीत्युक्तम् । नन्वेतन्नोपपद्यते; नित्यस्याऽदर्शने को हेतुः ? यदि परं विषयानागमः, अस्तु तर्हि । स एवाऽत्र दुर्भणः । किमिति ? नित्यपक्षे ह्यभिव्यङ्ग्यत्वं शब्दस्य; एकश्चाऽयं शब्द एकविषयश्च, (१)आकाशविषयत्वात्; ग्राहकं चाऽस्याऽऽकाशमेव; कथं विषयानागतिः ? तस्मात् ध्वस्तस्यैवानुपलब्धिर्न्याय्या । केन वोक्तम्— न न्याय्येति ? तद्ग्रहणे तु सति सर्वस्यैवाऽस्याऽन्याय्यता न्याय्या । अत एवोक्तम्—'यदि शक्ष्यामः' इति ।

---

स्यात्, तदा प्रध्वानानन्तरदर्शनमसत्त्वेनैव स्यात्; तद्ग्रहणनिबन्धनायां तु प्रत्यभिज्ञायां तद्दर्शनानुपलभ्यमानमप्यावरणादि शक्यं कल्पयितुमिति । तस्मादुपपन्नम्—'समं तु तत्र दर्शनम्' इति ॥

## सतः परमदर्शनं विषयानागमात् ॥ १३ ॥

"सतः परमदर्शनं विषयानागमात्" इति तद्वदनैकान्तिकमदर्शनमपीत्युक्तम् । नन्वेतन्नोपपद्यते सतोऽदर्शनम् । नित्यस्यादर्शने को हेतुः ? यदि परं विषयानागमः । सोऽपि चाऽनुपपन्न इति भावः । समर्थयते —अस्तु तर्हि । आक्षिपति—स एवाऽत्र दुर्भणः । किमिति दुर्भणः ? हेतुमाह—नित्यपक्षे ह्यभिव्यङ्ग्यत्वं शब्दस्य; एकश्च शब्द एकविषयश्च, आकाशविषयत्वात्; ग्राहकं चात्राकाशमेव । कथं विषयानागतिः ? यदि हि नाना शब्दा भवेयुः, तदा य एव विषयग्रामः स एवोपलभ्येत; नान्यः । तथा यदि नाना देशाः, तदा देशान्तरे नोपलभ्येत; ग्राहकं चाकाशमेव; अतो नाप्राप्तता शब्दस्येत्युपलम्भः स्यात् । तस्मात् ध्वस्तस्यैवानुपलब्धिर्न्याय्या । केन वोक्तम्—न न्याय्येति ? तद्ग्रहणे तु सति सर्वस्यैवास्याऽन्याय्यता न्याय्या; अत एवोक्तम्—'यदि शक्ष्यामः' इति ।

---

१. अकाशदेशत्वात इति. क. पु   २. अमुं""अमुं । इति ख. पु.

ननु तद्ग्रहणेऽपि नाऽत्र आवरणादिकल्पना आत्मानं लभते । किमिति ? पूर्वक्लृप्तविरोधात् । किं क्लृप्तम् ? आकाशमिन्द्रियम्; तच्चैकम् । (१)तस्मात् संयोगविभागयोरभिव्यञ्जकत्वे सत्यपि सर्वशब्दानां सर्वैश्चोपलब्धिः प्राप्नोति । युक्तं तावत् सर्वैर्ग्रहणम्; सर्वशब्दानां तु न युक्तम्, कारणाभिव्यञ्जकान्यत्वात् । सर्वैश्चोपलब्धिः कार्यपक्षेऽपि तुल्यैव । यश्चोभयोर्दोषः, न तमेकश्चोद्यो भवतीति परिहृतमिदं दूषणं कारकाभिव्यञ्जकयोर्विशेषाभिधानेन विना नैव चोद्येत नित्यत्ववादिनः । अयमस्ति विशेषः— अभिव्यक्तिः शब्दस्य, इन्द्रियस्य वा स्यात् ? तत्र शब्दाभिव्यक्तौ तावदेकविषयत्वात् सर्वशब्दानां घटादीनामिवैकविषयाणां नाऽभिव्यक्तिः क्रमेण शक्यते वक्तुम्, अदृष्टत्वात् प्रसिद्धानामभिव्यञ्जकानां प्रदीपादीनाम्; कारणानां तु कार्यदर्शनात् शक्यमनुमानं शक्तेः ।

---

ननु तद्ग्रहणेऽपि नाऽत्र आवरणादिकल्पना आत्मानं लभते । किमिति ? पूर्वक्लृप्तविरोधात् । किं क्लृप्तम् ? आकाशमिन्द्रियम्; तच्चैकम्; अतः संयोगविभागयोरभिव्यञ्जकत्वे सति सर्वशब्दानां सर्वैश्च ग्रहणं प्राप्नोति; सर्वे हि शब्दाः समानदेशाः; तत्रैकाभिव्यक्तौ सर्वेऽभिव्यज्येरन् समानदेशत्वात् घटादिवत्; आकाशस्थः शब्दोऽभिव्यज्यते; एक एव चाकाशः; आकाशश्चेन्द्रियमिति सर्वेन्द्रियस्थाभिव्यक्तः सर्वैरुपलभ्यः स्यात् । अत्र चोदयति—युक्तं तावत् सर्वैर्ग्रहणम्; सर्वशब्दानां तु न युक्तम्, कारणाभिव्यञ्जकान्यत्वात् । यथा कारणानां भिन्नत्वात् कश्चिच्छब्दः केनचिन्क्रियते, तथा कश्चिच्छब्दः केनचिदभिव्यज्यते । सर्वैश्चोपलब्धिः कार्यपक्षेऽपि तुल्यैव । सर्वेन्द्रियवर्तिन एव शब्दस्योत्पत्तेः । यश्चोभयोः समो दोषो न तमेकश्चोद्यो भवतीति परिहृतमिदं दूषणं कारकाभिव्यञ्जकयोर्विशेषाभिधानेन विना नैव चोद्यो नित्यत्ववादिनः । संप्रति पूर्वपक्षी विशेषमाह—अयमस्ति विशेषः—अभिव्यक्तिर्हि शब्दस्य, इन्द्रियस्य वा स्यात् ? तत्र शब्दाभिव्यक्तौ तावदेकविषयत्वात् सर्वशब्दानां घटादीनामिवैकविषयाणां नाऽभिव्यक्तिः क्रमेण शक्यते वक्तुम्, अदृष्टत्वात् प्रसिद्धानामभिव्यञ्जकानां प्रदीपादीनाम् । ते हि सर्वानेव समानदेशानभिव्यञ्जयन्ति, न पुनरेकैकम् । कारणानां तु कार्यदर्शनात् शक्त्यनुमानम् । तत्र यदेव

१. अत इति क. पु.

ननु अभिव्यञ्जकानामप्यभिव्यक्तिदर्शनादेवाऽनुमानं युक्तं शक्तेः। न कार्यपक्षे प्रतिपक्षतया सम्भवति। को वा विशेषः? प्रसिद्धेषु कारणेषु दर्शनात्, अभिव्यञ्जकेषु चाऽदर्शनात्। दृष्टानुगुणं चाऽनुमानम्, न दृष्टविरोधि।

ननु चैकविषयत्वे विरोधः; विषयान्तरे तु विरोधकथा विरुद्धेव। सत्यम्; विषयान्तरतैवाऽत्र दुर्वचा। न दुर्वचा। श्रोत्रमाकाशमित्यभ्युपगमात्; अभिन्नं चाऽऽकाशम्; सर्वशब्दाश्च श्रोत्रविषयाः; तस्मादेकविषयत्वम्; विषयैक्याच्च दृष्टविरोधः। किमिदं प्रलप्यते? तदिदमापतितम्—कर्णे स्पृष्टः कटिं चालयती-

---

कार्यं दृश्येत, तदेव क्रियत इति युक्तम्।

नन्वभिव्यञ्जकानामप्यभिव्यक्तिदर्शनादेवाऽनुमानं युक्तं शक्तेः। यथा कार्यविशेषदर्शनात् कारणानां विशिष्टविषयशक्त्यनुमानम्, तथाऽभिव्यञ्जकानामपि विशिष्टशब्दाभिव्यक्तिदर्शनात् भवत्येव विशिष्टशक्त्यनुमानम्। पूर्वपक्षी ब्रूते—न कार्यपक्षे प्रतिपक्षतया संभवति। सति कार्यतया विशिष्टशब्दोपलब्ध्यनुपपत्त्यायां न शक्यते भिन्नव्यञ्जकत्वेऽपि विशिष्टविषयशक्त्यनुमानम्। को वा विशेषः? कार्यत्वाभिव्यक्तिपक्षयोरित्यर्थः। विशेषमाह—प्रसिद्धेषु कारणेषु बीजादिषु दर्शनाद्विशेषविषयायाः शक्तेः, अभिव्यञ्जकेषु चाऽभिव्यञ्जकेषु प्रदीपादिष्वदर्शनात्। दृष्टानुगुणं चाऽनुमानं न्याय्यं न दृष्टविरोधि।

ननु चैकविषयत्वे विरोधः। अस्याऽर्थः—यद्येक एव दीपादीनां संयोगविभागानां चाऽभिव्यङ्ग्यो विषयः स्यात्, तदा विशिष्टविषयाभिव्यक्त्यनुमानं दृष्टविरोधि स्यात्। विषयान्तरे तु विरोधकथा विरुद्धेव। दीपादीनां हि रूपं विषयः; संयोगविभागानां तु शब्द इति विषयभेदे सति न दृष्टविरोधोऽस्ति। एवमभिप्रायमबुद्ध्वा ग्रन्थान्ति—सत्यम्; विषयान्तरतैवाऽत्र दुर्वचा। शब्दस्य विषयमाकाशं गृहीत्वेदमुच्यते। स्वाभिप्रायेणाऽऽह—न दुर्वचेति। पुनरप्याशयमबुद्ध्वैव परः। आह—श्रोत्रमाकाशमित्यभ्युपगमात्; अभिन्नं चाऽऽकाशम्; सर्वशब्दाश्च श्रोत्रविषयाः; तस्मादेकविषयत्वम्; विषयैक्याच्च दृष्टविरोधः। न हि समानविषयाणां रूपादीनां भेदेन दीपादिभिरभिव्यक्तिः। इदानीं स्वाभिप्रायं विवृण्वन्नेकग्रन्थेनाऽऽह—किमिदं प्रलप्यते? तदिदमापतितम्—कर्णे स्पृष्टः कटिं चालयतीति। अभिव्यक्तेर्विषयो निरूप्यते, न पुनः शब्दस्य; अन्यथाऽयं प्रदीपा-

ति; अभिव्यक्तेर्विषयो निरूप्यते, न पुनः शब्दस्य; अन्यश्चाऽयं प्रदीपादिविषयाद्विषयः । तस्मात् प्रदीपादिविरोधाच्छब्देऽभिव्यञ्जकानुमानविरोधो न शक्यते वक्तुमित्युक्तम् । तस्मात्तद्ग्रहणनिबन्धनमनुमानं दुर्निवारम् । अतोऽदर्शनमिदानीमनैकान्तिकमित्युक्तम् ।

ननु च श्रोत्रविषयेयमभिव्यक्तिः, न शब्दविषया । 'अभिव्यक्तं हि श्रोत्रं शब्दं गृह्णाति' इत्येतावदभिव्यञ्जके शक्यमनुमानम् , न पुनः 'अमुं शब्दम् , अमुं न'(१) इत्यसंस्पर्शादभिव्यञ्जकानाम् । अयमेव च राद्धान्तः । स चाऽयमनुमानविरोधीत्युक्तम् । सत्यम् ;

---

दिविषयाद्विषयः । तेन प्रदीपादिभिः सर्वमभिव्यज्यते ; संयोगविभागैस्तु कश्चिदेव शब्द इति । तस्मात् प्रदीपादिविरोधाच्छब्देऽभिव्यञ्जकानुमानविरोधो न शक्यते वक्तुमित्युक्तम् । शब्दे यदभिव्यञ्जकानुमानम् , न तस्य दृष्टविरोधः शक्यते वक्तुम् । तस्मात् तद्ग्रहणनिबन्धनमनुमानं दुर्निवारम् । शब्दप्रत्यभिज्ञया तद्ग्रहणे सति यदनुमानमभिव्यञ्जकस्य नियतशक्तिविषयम् , तद् दुर्निवारम् । अतोऽदर्शनमिदानीमनैकान्तिकमित्युक्तम् । नाऽस्त्येवेत्यदर्शनम् , किन्तु अनभिव्यक्तावपि घटत एवेति

**पूर्वपक्षी ब्रूते**—ननु च श्रोत्रविषयेयमभिव्यक्तिः, न शब्दविषया । शब्दविषयत्वे शब्दस्याऽभिव्यक्तस्य सर्वपुरुषैः श्रवणापत्तेः । ततः किमित्यत्राऽऽह—अभिव्यक्तं हि श्रोत्रं शब्दं गृह्णातीत्येतावदभिव्यञ्जके शक्यमनुमानम् ; न पुनरमुं शब्दममुं नेति असंस्पर्शादभिव्यञ्जकानाम् । श्रोत्रस्याऽभिव्यक्तिर्न कार्यविशेषनिष्ठा, किन्तु स्वरूपमात्रेणैव ; तच्च संस्कृतं श्रोत्रं सर्वशब्दान् शृणुयादिति । यथोक्तम्—

(२)"सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रकाशयेत् ।
घटायोन्मीलितं चक्षुः पटं न हि न बुध्यते" ॥ इति ॥

अयमेव भवतां मीमांसकानां राद्धान्तः, यदुत श्रोत्रसंस्कार इति । स चाऽयमनुमानविरोधीत्युक्तम् । यदीन्द्रियमभिव्यक्तं ततस्सर्वानेव विषयान् विषयप्राप्तान् गृह्णीयात् यथोन्मीलितं चक्षुः । तत्र यदि श्रोत्रमभिव्यज्येत संयोगविभागैः, ततः सर्वशब्दोपलब्धिः प्रसज्येत ; न चाऽसावस्ति । तस्मादसत्यामभिव्यक्तौ कृतिरेव शब्दस्याऽवशिष्यत इति किमत्र तद्ग्रहणं करिष्यति ? तद्ग्रहणेऽपि नाऽभिव्यञ्जकत्वकल्पना लभ्यत इति

१. संस्पर्शादिति क. पु. २. श्लो. वा अ. १. पा. १. अ. ६. श्लो. ६०

प्रसिद्धानुमानबाधनमयुक्तम् । प्रसिद्धप्रत्यक्षबाधनमप्ययुक्तमेव । स-
प्रत्यभिज्ञं च प्रत्यक्षमात्मनि सामान्यादिषु च स्थितम् । (१)उभयो-
रबाध्यत्वे सति कस्यचिदर्थस्याऽसिद्धेरेकस्य बाधनम् ; अनुमानात्
प्रत्यक्षं बलीय इति नैयायिकाः ।

ननु च प्रत्यक्षं भ्रमभाक् । अनुमानेऽपि भ्रान्तिरवि-
शिष्टा । न ब्रूमः—अनुमानेऽपि भ्रान्तिर्नाऽस्तीति ; किन्त्वत्र
भेदाग्रहणात्तद्बुद्धिरतस्मिन्नपि भवति । सम्भावितभ्रममिति
प्रत्यक्षमेव दुर्बलं मन्यामहे । अतएव प्रकटिताप्रकटितभ्रमकारणत-
योक्तं न्यायविद्भिः "भवति वै प्रत्यक्षादप्यनुमानं बलीयः"
इति । किं निर्ज्ञातकारणदुष्टत्वेनाऽत्रोपन्यस्ता ? किं ज्ञातम् ,

---

परमत्र तद्ग्रहणमेव भ्रमः, [illegible] न पुनः प्रसिद्धानुमानबाधनं युक्तम् । सत्यं प्रसिद्धानुमानबाधनमयुक्तम् ; प्रसिद्धप्रत्यक्षबाधनमप्ययुक्तमेव । ननु च प्रत्यभिज्ञा न प्रत्यक्षजन्या [illegible] ; इन्द्रियं हि सन्निहित एव विषये ज्ञानं जनयति ; [illegible] वस्थान्तरविशिष्टवस्तुग्रहणम् , न पुनः [illegible] वर्तमानावस्थायोगितया वा ; अतः [illegible] इन्द्रियविज्ञानजन्यं विकल्पमात्रमुपपद्यते इत्याशङ्कयाऽऽह—सप्रत्यभिज्ञं च प्रत्यक्षमात्मनि सामान्यादिषु च स्थितम् । [illegible] न लङ्घयितुमलम् , तथाऽपि पूर्वानुभवभावित[illegible] [illegible] इति नाऽनुपपन्नं किञ्चित् । एकग्रन्थेनाऽऽह—उभयोरबाध्यत्वे सति कस्यचिदर्थस्याऽसिद्धेः कार्यस्याऽभिव्यङ्ग्यस्य चाऽसिद्धेरेकस्य बाधनं युक्तम् ; तत्राऽपि अनुमानात् प्रत्यक्षं बलीय इति नैयायिकाः । तेन प्रत्यभिज्ञाबलेनाऽभिव्यक्तवैयर्थ्यानुमानं बाध्यत इति ।

ननु च प्रत्यक्षं भ्रमभाक् । अतः कथं बलीय इति । अनुमानेऽपि भ्रान्तिरविशिष्टा । अनुमानेऽपि भ्रान्तिरविशिष्टेत्याह—न ब्रूमः अनुमाने भ्रान्तिर्नाऽस्तीति ; किन्त्वत्र भेदाग्रहणात्तद्बुद्धिरतस्मिन्नपि भवति । [illegible] । सम्भावितभ्रममिति प्रत्यक्षमेव दुर्बलमिति मन्यामहे । अतएव प्रकटिताप्रकटितभ्रमकारणतयोक्तं न्यायविद्भिः— "भवति वै प्रत्यक्षादप्यनुमानं बलीयः" इति । इदानीं राद्धान्तच्छायया पृच्छति—किं निर्ज्ञातकारणदुष्टत्वेनाऽत्रोपन्यस्ता ? निर्ज्ञाता

---

१. उभयोर्बाध्यत्वे इति ग. पु.

यदुपन्यस्ता ? ननु च विपर्ययाभावात् नैवाऽस्तितयोपन्यसितुं शक्यते । किं विपर्यय एव मिथ्यात्वे हेतुः ? कारणदोषोऽप्यसमीचीनहेतुतयोपन्यस्त एव ।

ननु च कारणदोषः प्रयत्नेनोपलभ्यमानतयोक्तः । कोऽयं प्रयत्नो नाम, योऽसावत्र नाऽस्तीत्युच्यते ? अयमेवाऽसौ प्रयत्नः—अन्यत्र विपर्ययात् कारणदोषं विज्ञाय तद्भावभावितयैव 'एतत्कृतोऽयं विपर्ययः' इति तमन्यत्र विजानाति; ज्ञाते च तस्मिन् असत्यपि विपर्यये 'भ्रान्तमिदम्' इत्यध्यवस्यति । किमत्रैवंभूतमस्ति ? बाढमस्ति भेदाग्रहणम् ; भेदाग्रहणनिबन्धन एव शुक्तिकादिषु रजतभ्रमः । एवमत्राऽपि भेदाग्रहणनिबन्धन एव ज्वा-

---

च.ऽसौ कारणदुष्टता इति । पूर्वपक्ष्याह—किं जातं यदुपन्यस्ता ? यज्ज्ञातं तदाऽऽह—ननु च विपर्ययाभावान्नैवाऽस[illegible]तयोपन्यसितुं शक्यते । न हि साक्षात् भेदज्ञानं [illegible] विपर्ययो भवेत् । पूर्वपक्षी पृच्छति—किं विपर्यय एव [illegible] हेतुः ? [illegible]ग्रन्थेनाऽऽह—यावता कारणदोषोऽप्यसमीचीनहेतुतयोपन्यस्त एव । तेन विपर्ययाभावेऽपि कारणदोषा-न्मिथ्यात्वं भवति

ननु च कारणदोषः [illegible]उपलभ्यमानतयोक्तः । पूर्वपक्ष्याह—कोऽयं प्रयत्नो नाम, योऽसावत्र नाऽस्तीत्युच्यते ? अयमेवाऽसौ प्रयत्नः—अन्यत्र विपर्ययात्कारणदोषं विज्ञाय तद्भावभावितयैव 'एतत्कृतोऽयं विपर्ययः' इति तमन्यत्र विजानाति; ज्ञाते च तस्मिन्नसत्यपि विपर्यये 'भ्रान्तमिदम्' इत्यध्यवस्यति । किमत्रैवंभूतमस्ति ? इत्येकग्रन्थः । बाधकप्रत्यये हि जाते मिथ्यात्वेऽवगते सति किं निबन्धनमिदं मिथ्यात्वमिति जिज्ञासमानः कारणदोषं तद्भावभावितया तस्यैव तत्र कारणत्वं निश्चिनोति ; निश्चिते च तस्मिन् यत्राऽपि बाधकप्रत्ययो नाऽस्ति, तत्राऽपि मिथ्यात्वहेतुकारणदोषज्ञानेन मिथ्यात्वमध्यवस्यति ; तदेवंविधं किमत्राऽस्ति ? यत्[illegible] नाऽस्त्येव, [illegible] कदाचिदप्यदर्शनादिति । पूर्वपक्ष्याह—बाढमतिशयेनाऽस्ति भेदाग्रहणम् ; भेदाग्रहणनिबन्धन एव शुक्तिकादिषु रजतभ्रमः ; एवमत्राऽपि भेदाग्रहणनिबन्धन एव ज्वालादिष्विव तद्भ्रमः । शुक्तिकारजतादिषु [illegible] सति भेदाग्रहणस्य मिथ्यात्वहेतुभावेऽवगते शब्दे बाधकाभावेऽपि भेदाग्रहणनिबन्धनस्तद्भ्रमो भवि-

